प्रतीयमानोऽर्थ. अप्रधान' सन् वाच्यार्थमुपस्करोति, तदा पर्यायोक्तसमासोक्त्याद्यलङ्कारता। प्रतीयमानार्थस्य च गुणीभावे मध्यमं गुणीभूतव्यङ्ग्य काव्यम् परं यदा प्रतीयमानोऽर्थोऽङ्गी उपमाद्यलङ्कारैर्भूष्यते, तदा तस्य प्राधान्याद् ध्वनिः ।[1] एतदेवावलम्ब्य मम्मटाचार्येण ध्वनिगुणीभूतव्यग्ययोर्भेद इत्थं प्रदर्शित. स्वकीये काव्यप्रकाशे–

'इदमुत्तममतिशयिनि व्यग्ये वाच्याद् ध्वनिर्बुधैः कथितः'।[2]
'अतादृशि गुणीभूतव्यग्यम् व्यङ्ग्ये तु मध्यमम् ।।[3]

एवमानन्दवर्धनाचार्यात् पूर्वं भामहोद्भटप्रभृतिभिर्गुणीभूतव्यंग्य मध्यमं काव्यमेव व्याख्यातम्, नतूत्तम ध्वनिकाव्यमुन्मीलितम् । असौ ध्वनिर्यद्यप्यलङ्काराणा भंग्या तेषां बुद्धौ किञ्चित् स्फुरित आसीत्, परं प्रकाशे नायातः। सोऽय चिरन्तनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वी ध्वनिरानन्दवर्धनाचार्येण ध्वन्यालोके परमां प्रतिष्ठां प्रापित. ।

## आनन्दवर्धनाचार्यस्य ध्वनिप्रतिष्ठा

काव्ये ध्वनितत्वस्य प्रतिष्ठा अभिधातात्पर्यलक्षणातिरिक्ताया व्यञ्जनावृत्तेः स्वीकारेणैव भवति । मीमासान्यायादिदर्शनग्रन्थेषु अभिधातात्पर्यलक्षणावृत्तीनामेव विचारः। नतु व्यञ्जनावृत्ते. । एव प्राचीनशास्त्रकारानुमोदितशब्दवृत्तीनां सद्भावे व्यञ्जनारूपायास्तुरीयवृत्ते. परिकल्पनं न सर्वथा निरुपद्रवमासीत् । अत एव मीमांसकैर्नैयायिकैश्च व्यञ्जनायास्तुरीयवृत्तित्वेनाविष्कार' सर्वथा खलीकृत. । तस्याश्चाभिधालक्षणयोरन्तर्भावः प्रोक्तः । इत्थं प्राचीनशास्त्रकारानुमोदिताया व्यञ्जनाया विचारमकुर्वाणैर्भामहोद्भटप्रभृतिभिश्चिरन्तना-

---

1 व्यंग्यस्य प्रतिभामात्रे वाच्यार्थेऽनुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ।।
तत्परावेव शब्दार्थौ यत्र व्यग्य प्रति स्थितौ ।
ध्वनेः स एव विषयो मन्तव्य. सङ्करोज्झितः ।।
शास्त्री, प० पट्टाभिरामः, आनन्दवर्धन–ध्वन्यालोक', पृ० १३०–३१

2 मम्मटः, काव्यप्रकाशः, १,४

3 तत्रैव १,५

लङ्कारकारैः परिस्फुरितोऽपि ध्वनिर्वृत्त्यभावे उपेक्षित । ध्वनितत्त्वस्य प्राणभूतेयं व्यञ्जना । तदनभ्युपगमे ध्वनिरप्यव्याकृत एव भवति । एवं वाल्मीकि-कालिदासादीनां काव्येषु व्यक्तोऽपि ध्वनिर्व्यञ्जनावृत्तेरनन्वेषणादव्याख्यात एवासीत् भामहोद्भटादिविरचितेषु काव्यशास्त्रग्रन्थेषु । पर तथापि काव्यतत्त्वान्वेषकाः सहृदया ध्वनि काव्यस्यात्मत्वेनावश्यमभ्युपगच्छन्ति स्म[1] । वाच्यवाचकरचनामात्रेणासन्तुष्टैरलङ्कारपराङ्मुखैस्तैः सहृदयैरवश्य गोष्ठीषु काव्यात्मत्वेन ध्वनिश्चर्चितो भवेत् इति नूनं सम्भाव्यते काव्यलक्ष्मविधायिना भामहादीनामिवेष्टम-भवत् परं काव्यतत्त्वान्वेषकाः सहृदया काव्येऽलङ्कारैरतुष्यन्तस्तद् व्यतिरिक्त काव्यचारुत्वमवश्यमन्यत्र मार्गणे तत्परा स्युरित्यवश्य सलक्ष्यते । अलङ्कार-गुणरीतिव्यतिरिक्तं काव्यचारुत्व तेषा मते ध्वनिरूपेणैव व्यवस्थितमभवत् । एवं सहृदयैर्गोष्ठीषु चर्चितः काव्यलक्ष्मविधायिभिर्भामहादिभिरव्याकृतो ध्वनि-रानन्दवर्धनाचार्येण व्यंजनामतिरिक्तवृत्तित्वेन संस्थाप्य ध्वन्यालोके दाढ्र्यमानीतः । तदेनानुकृत्य मम्मटादिभिः परवर्तिभिरालङ्कारिकैः प्रबलाभिर्युक्तिभिर्ध्वनिः प्रतिष्ठापितः ।

आनन्दवर्धनाचार्यात् प्राक् कैराचार्यैरय ध्वनिर्गोष्ठीषु चर्चित इति तु स्फुटं न विभाव्यते । न केनापि ध्वनिवादिनाचार्येण तेषामुल्लेख कृत । परम्—

सत्काव्यतत्त्वनयवर्त्म प्रसुप्तकल्पमनस्सु परिपक्वधिया यदासीत् ।
तद्व्याकरोत् सहृदयोदयलाभहेतोरानन्दवर्धन इति प्रथिताभिधानः ॥[2]

इत्यनेनानन्दवर्धनकृतश्लोकेनेदं प्रतीयते यदानन्दवर्धन एव स्फुरित–प्रसुप्त-कल्पस्य शास्त्रेष्वव्यवस्थापितस्य बुधैर्गोष्ठीष्वेव चर्चितस्य ध्वनितत्त्वस्य काव्ये प्रतिष्ठापक आद्य आचार्यः । एवं व्यजनाया उद्भावकः कोऽप्यज्ञातनामा सहृदयो भवेन्नाम, पर ध्वनेः काव्यशास्त्रे व्यवस्थापकस्तस्य च प्रबलः पोषक आचार्य आनन्दवर्धन एव विभाव्यते ।

---

[1] काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः ।
आनन्दवर्धनः, ध्वन्यालोकः १, १

[2] शास्त्री पं० पट्टाभिराम., आनन्दवर्धन–ध्वन्यालोकः, पृ० ५५२–५३

**अग्निपुराणे व्यंजनाविचारः**

अग्निपुराणे गुणालङ्कारादीनां काव्याङ्गानां वर्णन दृश्यते। तत्रैव शब्दार्थालङ्कारविचारप्रसङ्गेऽभिधादीनां वृत्तीनामपि विवेचनम्। तत्रैवाभिव्यक्तिर्नामालङ्कारोऽग्निपुराणकारेण प्रोक्त.। अस्य भेदोपभेदा अधोलिखितप्रकारेणोह्याः।




अत्राग्निपुराणकारेण श्रुतिनाम्नाभिधालक्षणे व्याख्याते। तत्र पारिभाषिकी श्रुतिरभिधासहोदरी, औपचारिकी श्रुतिश्च लक्षणासब्रह्मचारिणी।

सा(स्वा)भिधेयस्खलदवृत्तिरमुख्यार्थस्य वाचकः।
यथा शब्दो निमित्तेन केनचित् सौपचारिकी ॥
सा च लाक्षणिकी...... ॥[2]

---

[1] प्रकटत्वमभिव्यक्ति· श्रुतिराक्षेप इत्यपि।
तस्या भेदो श्रुतिस्तत्र शाब्दं स्वार्थसमर्पणम्।
भवेन्नैमित्तिकी परिभाषिकी द्विविधैव सा।
सङ्केतः परिभाषेति ततः स्यात् पारिभाषिकी।
मुख्यौपचारिकी चेति सा च सा च द्विधा द्विधा॥
अग्निपुराणम्, ३४५, ७६

[2] अग्निपुराणम्, ३४५, ९–१०

इत्यनेन स्पष्टं यदौपचारिकी श्रुतिनामाऽग्निपुराणकारेण शास्त्रप्रसिद्धा लक्षणा व्याख्याता ।

एवं श्रुतिनाम्नाऽभिधालक्षणे विचार्याग्निपुराणकारेणाक्षेपनाम्ना व्यंजना प्रोक्ता । यथा ध्वनिवादिनां व्यजनाऽभिधालक्षणाभ्यामलभ्यमर्थमवगमयितु प्रगल्भते, तथाक्षेपेणापि श्रुत्यलभ्योऽर्थो बोध्यते । अयमाक्षेप एव ध्वनिः । ध्वनौ शब्दार्थौ स्वात्मानमुपसर्जनीकृत्य व्यंग्यमर्थ बोधयतः, आक्षेपे चाग्निपुराणकारप्रोक्ते विशेषार्थाभिधानेच्छया इष्टस्य वस्तुनः प्रतिषेध इव भवति । उभयत्र शब्दार्थयोरुपसर्जनीभावः, विशेषार्थस्य च ग्रहणम् । अत आक्षेपव्यंजनयोस्तुल्ययोगक्षेमत्वादुभयो. सब्रह्मचारित्वम् । यथोक्तमग्निपुराणकारेण—

श्रुतेरलभ्यमानोऽर्थो यस्माद्भाति सचेतसाम् ।
स आक्षेपो ध्वनि स्याच्च ध्वनिना व्यज्यते यतः ।
शब्देनार्थेन यत्रार्थ. कृत्वा स्वयमुपर्जनम् ।
प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
तमाक्षेपं ब्रुवन्त्यत्र... ... ... ॥[1]

अनेनोद्धरणेनेदमवदातं भवति यदग्निपुराणकार आक्षेपनाम्ना व्यंजनाव्यापारं विवृणोति, ध्वन्यालोकग्रन्थे व्यवस्थापितं ध्वनिश्चाक्षेपालङ्कारशरीरेऽन्तर्भावयति । आनन्दवर्धनोपनिबद्धं ध्वनिलक्षणमग्निपुराणकारः पर्यायान्तरेण प्रतिपादयति ।[2] तथा सत्याक्षेपलक्षणमग्निपुराणकारप्रोक्तं सर्वथा ध्वननव्यापारानुसंवादीतिकृत्वाग्निपुराणे सुस्पष्टं ध्वनेर्विचार. पारिभाषिकेऽर्थे विभाव्यते ।

अत्रेदं चिन्त्यं यदग्निपुराणध्वन्यालोकयोर्मध्ये कतरो ग्रन्थः प्राचीनतरः । तत्र पाण्डुरङ्गवामनकाणे, सुशीलकुमार डे, ए. शङ्करन प्रभृतिभिः काव्यशास्त्र-

---

1 अग्निपुराणम्, ३४५, १४–१६

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
आनन्दवर्धनः, ध्वन्यालोकः, १, १३

गवेषकैर्विपश्चिद्भिः प्रबलाभिर्युक्तिभिरग्निपुराणस्थकाव्यशास्त्रविषयकाणामध्यायाना रचनाकालो ध्वन्यालोकात् परवर्ती निर्धारितः ।[1]

'शब्देनार्थेन यत्रार्थः कृत्वा स्वयमुपसर्जनम्'[2]

इत्याग्निपुराणे दृश्यमानं श्लोकार्धम्—

'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थ.'[3]

इति ध्वन्यालोकस्य कारिकार्धभागमनुध्वनति । तत्र ध्वन्यालोककारेणाग्निपुराणकाराद् ध्वनिलक्षणमुपात्तं भवेदिति तु न शंक्यम् । यतो ह्यग्निपुराणकारो भरतभामहरुद्रटादीनामाचार्याणा श्लोकाननामग्राहमुद्धरति । यदा ध्वन्यालोककारसमानकालभाविना रुद्रटरुद्रभट्टादीना श्लोका अग्निपुराणकारेण संगृहीतास्तदा ध्वन्यालोकस्य कारिकाया अपि किंचित् परिवर्तनोल्लेखः सम्भवः इत्यनुमातु शक्यम् । एवं पुराणकारेणैव ध्वनिलक्षणं ध्वन्यालोकादुपात्तं भवेदिति कल्पना युक्ता ।

किंच

अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं प्रतिपद्यते ।
शृंगारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ।।[4]

---

1 (a) Therefore, the Agnipurāṇa is later than Bhāmaha, Daṇḍin, Dhvanyāloka and probably Bhoja and has no claim to be regarded as the original work on the Alankāraśā tra. Kane, P. V., History of Sanskrit Poetics p 10

(b) Vide-De, Sushil Kumar Sanskrit Poetics, Vol 1 p. 98

(c). Vide:, Shankaran A., The Theories of Rasa and Dhvani, p. 39.

2 अग्निपुराणम् ३४५,१५

3 आनन्दवर्धनः ध्वन्यालोकः १,१३

4 शास्त्री, पट्टाभिरामः, आनन्दवर्धन-ध्वन्यालोकः, पृ० ४६८.

इत्यानन्दवर्धनाचार्यलिखितं श्लोकद्वयमभिनवगुप्तपादाचार्येण स्पष्टमभिनवभारत्यां नाट्यशास्त्रटीकायां समुट्टङ्कितम् ।[1] इद श्लोकद्वयमग्निपुराणेऽपि यथा लिखितरूपेणाकितं समुपलभ्यते ।[2] तेनैतत् स्पष्टं यदग्निपुराणकारेणैव ध्वन्यालोकाच्छ्लोकद्वयमुद्धृतं स्यात् । अतोऽग्निपुराणस्य काव्याङ्गविचारपरोऽध्याय. ध्वन्यालोकात् पश्चाल्लिखितोऽभूदिति प्रतीयते ।

एवमग्निपुराणस्य काव्यशास्त्रविषयकस्याध्यायस्यानन्दवर्धनाचार्यानन्तरं जातत्वात्, आनन्दवर्धन एव ध्वनेः काव्यशास्त्रे लिखितरूपेण व्यवस्थापक आद्य आचार्यः सिध्यति ।

**व्यञ्जनाया महत्त्वम्**

आनन्दवर्धनव्यवस्थापितोऽयं ध्वनिसिद्धान्तः सर्वथा व्यजनानुप्राणित इतिकृत्वा काव्यशास्त्रे व्यंजनायाः प्रधानत्वमक्षुण्णम् । व्यजनेय ध्वनिसिद्धान्तस्य सुदृढस्तम्भभूता । व्यजनामहिमैव ध्वनिसिद्धान्तः सब्रह्मचारिभ्यो गुणालङ्कार-रीत्यादि-प्रस्थानेभ्योऽतिशयानः काव्यजगति उद्धुरबन्धुरः सन् विराजते । व्यंजनां विना विशालो ध्वनिप्रासादः निराधारो भूत्वा भूमौ समापतेत् । अत एव प्रतीयमानार्थमाहात्म्यं स्वीकुर्वद्भिरपि महिमभट्टादिभिर्ध्वनिविरोधिभिर्ध्वनिसिद्धान्त-जीवातुभूता व्यजनावृत्तिरेव समुत्पाटिता व्यक्ति-विवेकादिषु ग्रन्थेषु । अतो व्यंजनयैव ध्वनिसिद्धान्त पूर्णता प्राप्तः । अत एवानन्दवर्धनाभिनवगुप्तप्रभृतीनां व्यजनायाः प्रबलपरिपोषकाणामाचार्याणां पश्चात् मम्मटहेमचन्द्रविद्याधरप्रभृति-भिराचार्यैर्नैकोऽपि नवीन. सिद्धान्त आविष्कृत, प्रत्युत युक्तिपुरस्सरं ध्वनिसिद्धांत एव परिपोषितः । वस्तुतस्तु व्यजनामहिम्ना ध्वनिसिद्धान्ते पूर्णता गते नास्ति किमपि काव्यतत्त्वरत्ननिकषोपलान्तरम् । ध्वनौ सर्व काव्यसौन्दर्य परिपूर्णम् ।

आनन्दवर्धनाचार्यात् प्राक् भरतमुनेः रसप्रस्थानम्, भामहोद्भटादीनामलङ्कारप्रस्थानं दण्डिनो गुणप्रस्थानं वामनाचार्यस्य रीतिप्रस्थानञ्चेमानि प्रस्था-

---

[1] व्रत एवोक्तम् शृंगारी चेत (ध्व० ३, ४२) इत्यादि. आनन्दवर्धनाचार्येण पृ० ४६८ ।

सम्पा० नगेन्द्रः, अभिनवगुप्तपादः अभिनवभारती, पृ० ५१५

[2] अग्निपुराणम्, ३४५,१८

नानि काव्यलक्षणग्रन्थेषु ख्यापितान्यासन्। परमिमानि प्रस्थानान्यपूर्णान्यासन्। दृश्यकाव्यविवेचनपर रसप्रस्थान श्रव्यकाव्यमुपेक्षते। रत्यादयः स्थायिभावा विभावानुभावाना समुचितयोजनया रसे पर्यवस्यन्त सहृदयानानन्दाकूपारे प्लावयन्तीति रसप्रस्थानं भरतमुनिना नाट्यशास्त्रे तत्सूत्रितम् परं कथ स्थायिभावा रसतामायान्ति, परमाह्लाददायकाश्च भवन्तीति मुनिना स्पष्ट नोक्तम्। केवलं विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरित्येव भणितम्।

भरतमुनिप्रोक्तस्यास्य रसस्य स्वरूप ध्वनिसिद्धान्त एव सम्यग्विवृतं विभाव्यते, व्यञ्जना विना रतिशोकादीना स्थायिभावानां रसतानुपगमात्। रत्यादीनां भावाना व्यञ्जनयाभिव्यक्तिरेव सहृदयहृदयानुरञ्जिका। रत्यादीनां भावाना केवल स्वशब्देनावेदने कृते न काचित्सरसता। एवं विधोऽर्थोऽहृद्यो नास्वादकोटिमारोहति। परमसावेवार्थो यदा विभावानुभावादिभिरभिव्यज्यते, तदा तस्याभिव्यक्तिरेव परमानन्ददायिनी भवति। एव व्यञ्जनाबलेनैव भरतमुनिव्यवस्थापितो रससिद्धान्त पूर्णतामुपयाति। व्यञ्जनामहिम्नैव ध्वनिवादिभिः रससिद्धान्तो ध्वनावन्तर्भावित. परिपूर्णताञ्चानीत.। आनन्दवर्धनाभिनवगुप्तादीना ध्वनि - प्रस्थानसंस्थापकानामाचार्याणा रस एव दृढो निर्भर.[1]। पर रसोऽसौ व्यञ्जनयाभिव्यज्यत इति तै सयुक्तिकं सिद्धान्तितम्। यथोक्तमभिनवगुप्तपादाचार्येण—

'प्रतिपत्तुश्च रसावेशो रसाभिव्यक्त्यैव। रसश्च व्यङ्ग्य एव। तस्य च शब्दवाच्यत्वं तेनापि नोपगतमिति व्यंग्यत्वमेव'[2]।

एव व्यञ्जनाव्यापारबलेनैव रसाभिव्यक्तिर्भवतीति व्यञ्जनायाः काव्यशास्त्रे परम माहात्म्यम्।

—लेखक : **रविशङ्कर नागरः**

---

[1] 'कविना काव्यमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्। तत्रेतिवृत्ते यदि रसाननुगुणा स्थिति पश्येत् तदेमा भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत्'।

शास्त्री, पट्टाभिरामः, आनन्दवर्धन–ध्वन्यालोक, पृ० ३३६

[2] तत्रैव, लोचन–भाष्यम् पृ० ६८–६९

# कविकलानिधिः श्रीकृष्णभट्टः तस्य 'सुन्दरीस्तवराजश्च'

डा० प्रभाकर शास्त्री

जयपुर-नगर-संस्थापकस्य महाराजाधिराजस्य सवाई-पदधारकस्य जयसिंह-द्वितीयस्य नामधेयं जयपुरीय-कच्छपघाटीय-शासकानां वंशावल्यां स्वर्णाक्षरैः उत्कीर्णमिति नाविदितं विद्वद्भिः। कविकलानिधि. श्रीकृष्णभट्टमहाभागाः एतेषां जयसिंह-महोदयानां सभायां व्यराजत। राज्ञा जयसिंहेन महत्त्वपूर्णं कार्यत्रयं कृतम् — (१) अश्वमेध - ज्योतिष्टोमादि-यज्ञानामनुष्ठानम् (२) भारतस्य पञ्च - विभिन्न- स्थलेषु सुप्रसिद्धनगरेषु (दिल्ली-मथुरा-जयपुर-उज्जैन-काशी) सुप्रसिद्धाया ज्योतिष-वेधशालाया· स्थापनम् (३) नगर विन्यासादर्शभूत-जयपुरस्य निर्माण च। भारत-प्रसिद्धस्याश्वमेधयज्ञस्य अनुष्ठानावसरे तैः श्रौतस्मार्तक्रियानिष्णाता अनेके विद्वास· ससम्मानमाहूता इति श्रूयते। महाभागोऽयं कविकलानिधिरपि एतस्मात् कारणादेव आमेर समाजगाम इति निश्चप्रचम्।

## वंशपरिचयः

गोतमऋषे. वंश्याः वेल्लवाटीय-तैलंग - ब्राह्मणाः मद्रासप्रान्ततः तैलग-प्रदेशात् उत्तरभारतं प्रति समाजग्मुः। आसीदिय पुरातनी घटना। चरितनायकस्य कविकलानिधे. सगोत्रीय· श्रीहरिहर-भट्ट· "कुल - प्रबन्ध" नामके स्वकीय-रचिते ग्रन्थे वशपरिचयादिकमुल्लिखितवान्। तेन 'श्रीबाबाजी दीक्षिताः मूलपुरुषत्वेन स्वीकृताः। सर्वप्रथमं तेषा पूर्वजा दक्षिणत. काशीं काशीतः प्रयागं ततश्च बान्धव-देशं प्रापुः। श्रीमन्तो मान्या· मण्डलदीक्षित-महाभागा बान्धव - देशाधिपतेः गुरव आसन्। तैश्च राज्ञ उपहाररूपेण देर्वाषप्रभृतयो ग्रामाः समासादिताः। ततश्च एतेपा वंशजा अस्मात् स्थानात्-अनूपशहर दिल्लीनगरं भारतपुरं कामा, बून्दीनगरी च गतवन्तः।। श्रीमन्तो कविकलानिधिमहोदया अपि स्वकीये जीवने भारतपुरं, बून्दीनगरीं, जयपुर-

नगरं च अलंकृतवन्तः। स्वीयायां "पद्यमुक्तावल्या" कविकलानिधि भरतपुरस्य शासकं श्रीसूर्यमल्लाभिधं वर्णयति—

"इतो हैन्दवी सृष्टिमानन्दयन् स्वै-
र्गुणोघैस्ततो यावनीं सृष्टिमुच्चैः ।
महेन्द्रास्पदे श्रीयुतः- सूर्यमल्ल –
स्तटद्वन्द्व – सयत्तरङ्गः समुद्रः ॥"

ततश्च बून्दीनरेश श्रीबुध सिंह स्तौति येन ज्ञायते तेषा तत्रावस्थानम् ।

पद्यमुक्तावल्यां लिखितमस्ति—

"देव श्रीबुधसिंह ! त्वदसिजलधरोल्लासि सत्कीर्तिनीरे ।
तुङ्गप्राच्यादितीरे भवसरसि भवत् साधुवादोर्मि सघे ॥
नक्षात्राण्येव हंसाः परिलसितनभो नीलिमा शैवलौघ ।
पूर्णेन्दुः पद्ममस्मिन् मधुर -मधु सुधा देव-वृन्दा मिलिन्दाः ॥"

पद्यमुक्तावली पद्यसं० १३७पृ० ६३

कविकलानिधिः हिन्दीभाषायां "लालकवि" नाम्ना प्रसिद्धोऽभूत् । अनेन "अलंकार-कलानिधि" इतिरचनाया बुधसिंहस्य विस्तृत वर्णन कृतम् । कविकलानिधेः पौत्रेणदेवर्षि-वासुदेव-भट्टेन राधारूप - चन्द्रिकाया वश-परिचयेन साकमेव लिखित कविकलानिधे विषये—

"बुन्दीपति-बुधसिंह सों लाये मुख सो जाचि ।
रहे आइ आमेर मे प्रीति रीति बहु भाति ॥"

अर्थात् सवाई जयसिंह बुन्दी - नरेशात् बुधसिंहात् याचन कृत्वा कवि-कलानिधिं आमेर - नगरीमानीतवान् । महाकविना कविकलानिधिना सवाई-जयसिंहस्य यशःप्रसारार्थमनेके ग्रन्था विरचिताः । सुप्रसिद्धे ऐतिहासिक-महाकाव्ये 'ईश्वरविलासाख्ये' तस्य स्वाश्रयदातुर्वर्णनमुपलभ्यते । अश्वमेधस्य वर्णनं करोति सः—

"गव्यूत्यर्द्धोपरि जयपुरादुत्तरत्र प्रदेशे
श्रीगोविन्दालय-विलासितोद्यद्-ध्वजच्छाय-जुष्टे ।
पूर्वं मानक्षितिपतिकृतेः सागरस्य प्रतीरे
राज्ञा तेन व्यरचि विभवैर्मण्डितो• यज्ञवाटः ।।
(ईश्वरविलासः ४।४८)

सेयं राजस्थानस्य वर्तमाना राजधानी जयपुर–नगरी कविकलानिधेः सम्मुख एव संस्थापिता निर्मापिता चासीत् । तेन लिखितम्—

नित्यज्यारूढचापा "स्थिरतरवरधानुष्कता सध्वजाढ्या
नि सान. श्रीसमन्ताद् वशितजनमना व्योम्नि नग्नासिधारा
प्रोदञ्चच्छक्तिलीला मदजगजतियुग् जैत्रवाद्यानुनादा
जाग्रत् कामाधिराज्या जयति जयपुराख्या नवा राजधानी ।।"

वैक्रमीय- संवत् १७८२ समयेऽब्दे जयपुरस्य संस्थापनाभवदिति प्रसिद्धस्य अश्वमेधस्य यज्ञस्यानुष्ठानञ्च १७६२ वैक्रमाब्दे समभवदिति •च प्रसिद्धम् ।

कविकलानिधीनां जन्म- समयस्य विषये नास्ति सुनिश्चितं मतम् तथापि भवतां जन्म संवत् १७३५ वैक्रमाब्दस्य समीपमेवासीत् इत्यनुमीयते । महाप्रयाणस्य विषये च कल्पनाया अवलम्बनं नैव युज्यते, यतो हि—"प्राचीन-रिकार्डे 'राजस्थान - अभिलेखागारे विक्रमपुरे (बीकानेर) "रजिष्टर - दस्तूर कौमवार-रदीफ नाम 'द' पृ. ७२१ नाम जात ब्राह्मण "इत्यत्र स्पष्टं लिखितं वर्तते यत् श्री द्वारकानाथ - भट्टाय कविकलानिधिमहोदयस्य सुपुत्राय राज्ञा श्री-माधवसिंहेन कवीश्वरेभ्यः समर्पणीयार्हं द्रव्यादिकं पितुः स्थाने पुत्राय प्रादात् मिति भादपद सुदि ५ सं. १८१८" । अनेन ज्ञायते यदिदं द्रव्यादिकमितः पूर्वं कविकलानिधि-महाभागेन प्राप्यते स्म ।

कविकलानिधिः सवाईजयसिंहस्य ज्येष्ठपुत्रस्य श्रीईश्वरीसिंहस्य कृपा-पात्रतां प्राप्तः । तस्य चासामयिकमृत्युना नितरा चिखेद सः । राजकीय-चक्रव्यूहात् राजनीतेश्च दूरप्रसर्पणार्थं तेन चिन्तितमपि वृन्दावनगमनार्थम् । परं श्रीमाधव-सिंहेन बलान्निवर्तितः सम्मानितश्च । तेन लिखितम्—

"कालिन्दीतट–निकट–स्फुट–कुटज–कुटी–निवास–सौख्याय ।
व्यरचि मृषाभापणमपि न तदजनि हृदि महत् कष्टम् ॥
राज्ञा सदस्सुगमनं कविताकरण मृषाऽऽकलनम्
वृन्दावनवासार्थं व्यरचि विधे किं न तदपि संपन्नम् ॥
मिथ्या - कथनदुरत्यय नृपवरकृत - रक्षण - व्यथा दुष्टः ।
हा वृन्दावन भवता सम्प्रति दूराद् विमुक्तोऽस्मि ॥"

कविकलानिधे. श्रीकृष्णभट्टस्य वंशजेन स्वर्गतेन मान्येन भट्ट–मथुरानाथ-शास्त्रि–महाभागेन एतद् विषये लिखितमिद पद्यं साहित्य - वैभव नामके ग्रन्थे वशवीथ्याम्—

"ये काव्य प्रकाशमूचुरलङ्कार-कलानिधौ
श्रीमज्जयसिंह – भूपमान – समुदावहे ।
रामायणं कृत्वाऽवहन् रामरासाचार्यपदं
वीणा संनदन्ति येषां काव्ये माधुरीवहे ॥
बुन्दीनरपाल – बुद्धसिंह – यशोविख्यापकान्
"लाल" कविनाम्ना कृतकाव्यान् प्रमिमीमहे ।
श्रीमज्जयसिंह – दत्तकाव्य – कलानिध्यभिधान्
श्रीकृष्णाभिधान् कविविबुधान् स्तुवीमहे ॥"

साहित्य–वैभव–वंशवीथी–१।५५७

कविकलानिधिना स्वकीयस्य गुरोः श्रीलक्ष्मणाख्यस्य पितुः महाप्रयाणावसरे पद्यमिदं निर्माय प्रस्तुतीकृतं - पद्यमुक्तावल्यां समुपलभ्यते । ज्ञायते चानेन श्री लक्ष्मणभट्टस्य वैदुष्य पाण्डित्यञ्चासीत् लोके—

"गच्छत्यान्वीक्षिकीयं क्षयमथ विशति व्याकृति र्वह्निमध्ये ।
मीमांसा मूर्च्छिताभूदनिशमुपनिषत् खेदिता वेदनाभिः ॥
मग्ना सा कापिलीभिर्गुरु - विरहगता योगगीर्भग्नयोगा- ।
याते निर्वाणमातेजित सुभृतफले श्रीगुरौ लक्ष्मणाख्ये ॥"

## साहित्य – रचना

कविकलानिधि रासीत् हिन्द्याः संस्कृतस्य व्रजभाषायाः प्राकृतादीनाञ्च भाषाणां पण्डितः । अत्र तावत् संस्कृत- भाषात्मकाः ग्रन्थाः नामतः प्रदर्श्यन्ते—

१- ईश्वर–विलास–महाकाव्यम्–प्रकाशितम्
२- पद्य–मुक्तावली (मुक्तक–काव्यम्) प्रकाशिता
३- वृत्त–मुक्तावली (छन्दः शास्त्रीया रचना) ,,
४- राघवगीतम् - (गीति-काव्यम्) अप्रकाशितम्
५- प्रशस्ति–मुक्तावलिः (पत्रलेखन- प्रकारः) ,,
६- सुन्दरी–स्तवराजः (स्तोत्र साहित्यम्) ,,

एतेषु ग्रन्थेषु ये प्रकाशिता अभूवन् , ते राजस्थान-प्राच्यविद्या-प्रतिष्ठान-पुरातत्त्व-मंदिर जोधपुरतः प्राप्या सन्ति। अप्रकाशितेषु काव्येषु सुन्दरी-स्तवराजस्यात्र परिचयो दीयते।

## सुन्दरी-स्तवराजः

तान्त्रिकाणामुपास्या श्रीविद्या त्रिपुरसुन्दरीति नाम्नापि प्रसिद्धा शिवस्य पत्नी, शक्तिरूपे विख्याता वर्तते। सैव 'सुन्दरी' इति समासेनोच्यते। उपासकैः तस्या. ध्यानमेवं क्रियते—

"लौहित्यनिर्जितजपा - कुसुमानुरागां
पाशाकुशौः धनुरिषूनपि धारयन्तीम् ।
ताम्रेक्षणामरुणमाल्य–विशेषभूषा
ताम्बूलपूरितमुखीं त्रिपुरां नमामि ।।

आदिगुरुणा जगद्गुरुरूपेण प्रसिद्धेन भगवता शंकराचार्येण सर्वप्रथमं स्तोत्रमेकं निर्मित भगवत्या त्रिपुरसुन्दर्या उपासनार्थं तत्सुप्रसिद्धर्थं। "सौन्दर्य-लहरी" नाम्ना च विख्यातम्। कविकलानिधिना श्रीकृष्णभट्टेनापि अस्य स्तोत्रस्याधारेण "सुन्दरीस्तवराज" नामकमपर स्तोत्रं रचितम्। उन्मेषद्वये विभक्तमेतत्। प्रथमोन्मेषे भगवत्या. त्रिपुरसुन्दर्याः स्तवनं वर्तते, द्वितीये च तस्या. नखशिख–वर्णनम्। सेयं कविता मनोहारिणी, प्रसादगुणयुक्ता, कोमलकान्त-पदावली - शोभना, काव्यदोष - रहिता चाभाति। लौकिक-संस्कृत-साहित्य-रचनासु अस्य स्तोत्रस्य वर्तते महत्त्वपूर्णं स्थानम्। तन्त्रशास्त्रानुसारमस्य स्तोत्रस्य प्रत्येकं पद्यं रहस्यप्रकटनसमर्थम्। तान्त्रिकाः संसारेऽस्मिन् तत्त्वद्वयं स्वीकुर्वन्ति (१) शिवः (२) शक्तिश्चेति। एतयोर्द्वयोरैक्यमेव परमार्थप्राप्तौ परमं ध्यानम्।

'सुन्दरीस्तवराजस्य' प्रारम्भे कविकलानिधिना एका पंक्तिरुल्लिखिता यया किञ्चना ज्ञाततत्त्वं संकेतयति । तद्यथा- "ॐ श्री १६ कस्मैचिन्महसे नमः" इति। स्तवने उपासकस्य भावना स्फुरति यत् भगवान् शंकर एकाकी अस्य संसारस्योत्पत्ति कर्तुं नैव समर्थः । यावत् तावत् भगवत्या. कृपा–कटाक्ष नैव लभते, तावदुत्पत्तिस्थितिसंहारात्मके कार्ये तस्य साफल्यं कठिनमेव । विना शक्त्या न कोऽपि शक्तिमान् भवितुमर्हति । स प्रमाणयति—

"शिवः शुद्धो बुद्धः शमितगुणवृन्दव्यतिकर.
समर्थः किं सर्गस्थिति–विलय–सस्था. कलयितुम् ।
तवैवायं मातर्विधुकर परीरम्भसदृशः
कटाक्षः व्याक्षेपो जलधिमिव विक्षेपयति तम् ॥१॥"

पद्येऽस्मिन् तन्त्रशास्त्रस्य गूढतापि दर्शनीया । वर्णबीजं वर्तते "शि"। अस्यापि रूपद्वयम् - 'श् + इ'। शकारस्य ध्यान तन्त्रशास्त्रे—

"चतुर्भु[ज]ां चकोराक्षी चारुचन्दनचर्चिताम् ।
शुक्लवर्णत्रिनयनां वरदां च शुचिस्मिताम् ॥
रत्नालंकारभूषाढ्यां श्वेतमाल्योपशोभिताम् ।
देववृन्दैरभिवन्द्यां सेविता मोक्ष–कांक्षिभिः ॥
शकारं परमेशानि शृणु वर्ण–शुचिस्मिते ।
रक्तवर्णं प्रभाकारं स्वयं परमकुण्डली ॥
चतुर्वर्गप्रदं देवि शकारं ब्रह्म–विग्रहम् ।
पंचदेवमयं वर्ण पंच - प्राणात्मक प्रिये ॥
रत्नपंचतया युक्तं त्रिकूट–सहितं सदा ।
त्रिशक्ति–सहितं वर्णमात्मादि–तत्त्वसयुतम् ॥

'इ' कारस्य ध्यानम्—
'ईकारं परमानन्दं सुगन्धं कुकमच्छविः ।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ॥

कवि - कलानिधिना स्थाने स्थाने सौन्दर्यलहर्याः साम्यमुपस्थापितं स्वीयेऽस्मिन् सुन्दरी - स्तवराजग्रन्थे । यथा—

**सौन्दर्यलहर्याम्—**

अविद्यानामन्तस्तिमितमिहिरद्वीपनगरी
जडानां चैतन्यस्तबक - मकरन्दस्रुतिझरी।
दरिद्राणां चिन्तामणि गुणनिका-जन्म-जलधौ
निमग्नानां दंष्ट्रा मररिपुवराहस्य भवति ।।"

**सुन्दरीस्तवराजे—**

"अविद्यान्तर्ध्वान्त-द्युतिहरण - विद्यारविरुचि-
र्जगज्जाग्रज्जाड्येन्धन-दहन-चित्पावकशिखा ।।
हरन्ती दारिद्रयं सुरतरुफलस्फूर्तिरमला
भवाब्धौ भीतानां त्वमसि तरणिस्तारणकरी ।।४।।"

यथा स्तोत्रान्ते भगवता शकराचार्येण नकारानुप्रासमयं पद्यं प्रस्तुतं तथैव कविकलानिधिरपि प्रस्तौनियथा

"निधेः नित्य स्मेरे निरवधिगुणे नीतिनिपुणे
निराधारज्ञाने नियमपरिचित्तैक - निलये ।।
नियत्या निर्मुक्ते निखिल - निगमान्तस्तुत-पदे
निरातङ्के नित्ये निगमय ममापि स्तुतिमिमाम् ।।सौन्दर्य-लहरीतः १०२।।"

"नराणा निष्ठायै निगम - निरतायै नयमते
नुतीना निघ्नायै निहित-नयनायै निजजने ।
निरूढायै नाना ननु निगदितायै नवगिरा
नुतायै नित्यायै निभृत-निभृतायै नम इदम् ।।सुन्दरी-स्तवराजतः१०७।।"

अस्मिन् स्तोत्रे कवि-कलानिधिना भगवता शकराचार्येण तुल्यं भगवत्याः नखशिखवर्णनं नैव सम्पादितम् । तेन तु भगवत्या नखशिख-वर्णनं कृतम् । चरणौ, गुल्फौ, ऊरू, जघने, नितम्बौ नाभिः, त्रिबलिः, स्तनौ, उरः, वाणी, भुजौ, चत्वारः हस्ताः, मुखमधरः, नासिका, कपोलः, कर्णौ, नेत्रे, कटाक्षः, भालम्, भ्रूयुग्मम्, भालस्थितश्चन्द्रः,

वेणी, सिन्दूरम्' इति क्रमश: पद्यै: वर्णयामास । भगवत्या भक्ति प्राप्त: कवि-कलानिधि: तस्या: स्तवनं करोति—

"दरिद्रं दुश्शील दुरधिगमकं दु ख - दलितं
दुराचारं दूरे पतितममरैर्दु र्भरतरम् ॥
जनैर्मुक्तं मुक्ति - प्रमुख - सुख - सम्पत् - समुदया:
पुमांस सेवेरन् भगवति ! भवद् दृष्टिभरितम् ॥१३॥

कवि - कलानिधि श्रीकृष्ण-भट्ट भगवती सर्वतोभावेन भजते । स्तवनावसरे स तामेव चिन्तयति । सैव धनं सैव धाम, सैव कला, सैव शक्ति:, तस्य कृते मातापित्रो: कार्यमपि सैव सम्पादयति । तद्यथा-

"धन त्वं धाम त्वं त्रिभुवन - निधिस्त्वं बहुविध:
कलात्वं शक्तिस्त्व गुण समुदयस्त्वं बहुतर: ।
पिता त्व माता त्व स्वजन - निवहस्त्वं हितमति:
शिवे सर्वस्वं त्वं किमपि मम दीनस्य परमम् ॥१०६॥"

एषा रचना १०७ पद्येषु रचिता वर्तते । प्रथमोन्मेषे ५२ पद्यानि द्वितीयोन्मेषे च ५५ पद्यानि सन्ति । पुष्पाञ्जलि समर्पयन् कविकलानिधि: भगवत्याश्चरित स्मरति—

"विरञ्चाद्या मातर्निखिलनिगम - स्तोत्र - निवहै:
स्तुवन्ति त्वां नित्यामविरतमशेषात्मकतया ॥
अतस्त्वामुद्दिश्य प्रहित इह पुष्पाञ्जलिरयं
त्रयस्त्रिंशत् - कोटि - त्रिदशवर - पूजाधिक - फल: ॥२५॥"

भगवत्या: त्रिपुरसुन्दर्या: कपोलौ वर्णयन् कविकलानिधि: लिखति —

"कपोलौ ते स्वच्छौ ललित - ललितान्दोलदलक-
श्रियो लाभादाभासित - बहुतराभा - भर - भृतौ ॥
त्रियामा प्रेयस्था प्रतिपद - परीरब्ध - वपुष:
कलानां नाथस्य द्यु तिमपि दरिद्रा कलयत:" ॥८७॥

**अन्यच्च** —

"त्विषाऽतन्द्रौ चन्द्रौ स्मरहरचकोराक्षि सुखदौ
त्रिलोकी - मीनाक्षी - मुखकमल - माधुर्य- मुकुरौ ।।
स्मरस्य स्वाध्यायाध्ययनफलकाभौ विलसत
कपोलौ ते लोलौ ललित-हर-लावण्य - कलितौ ।।८८।।"

स्वर्गतानां मथुरानाथशास्त्रि - महाभागानां कविशिरोमणि - विरुदधारिणां कवि-कलानिधेर्वंशजानां समीपे अस्य ग्रन्थस्य पाण्डुलिपि मया दृष्टा। इयं ग्रन्थकर्तुः श्रीकविकलानिधे. स्वहस्त - लिखिता। समाप्तौ उल्लिखित वर्तते—"इति श्रीकृष्णभट्ट कविकोविद–कलानिधि - विरचित. सुन्दरीस्तवराजः समाप्तिमगमत्। संवत् १७६६ वर्षे भाद्रपद कृष्णा १३ लिखितमदः पुस्तकं स्वयमेव ।।" अनेन अस्य ग्रन्थस्य रचनाकालः सुस्पष्ट एव। जयपुर - संस्थापकस्य जयसिंहस्य शासनकालः १७५६ संवत्सरादारभ्य १८०० वैक्रमीयासंवत्सरा ब्दं यावदासीत्। अत तस्य शासन-समये एव अस्य रचना सजातेति नास्ति संदेह-लेशावकाश।

# आदर्शदम्पती–उपन्यासिका

*श्री पुष्कर शर्मा*

'आदर्श–दत्पती' इत्येषा उपन्यासिका १९३७ तमे ख्रिष्टाब्दे 'संस्कृत-रत्नाकर' इत्यस्यां पत्रिकाया क्रमशः प्रकाशिता संजाता । अस्या लेखकाः स्वर्गीयाः पण्डितवर्या श्री वृद्धिचन्द्र-शास्त्रिमहाभागा सन्ति । अनया रचनया लेखकस्य न केवल भाषा-सौष्ठवम्, अपि तु कल्पनावैचित्र्यमपि स्फुटीकृतम् । उपन्यासिकाया. शीर्षकमपि इदं तथ्यं स्पष्टतयोद्घाटयति यदस्याः कथानके दाम्पत्यविषयक आदर्श· प्रतिष्ठापितो विद्यते । एतदनुरूपमेव चरित्राणां वैविध्यमत्र प्रकाशतामगमत् । नृपतेर्दुष्टता नापितस्य हरदेवस्य च कुकृत्यसाहाय्यमत्र सशक्तरूपेण चित्रित दृश्यते । सामयिक्योऽन्या. समस्या अपि लेखक–महोदयै र्नोपेक्षिता· । उपन्यासिकाकारेण तद्विषयिका विसंवादिता बहुशः स्फुटीकृता । एतासु सट्टाख्यस्य व्यापारस्य, श्राद्धादिषु अपव्ययस्य चोल्लेखो प्राथम्यं भजते । मनोभावानां विशदे चित्राङ्कनेऽपि लेखकस्य क्षमता प्रशस्या खलु । चरित्रचित्रणस्य क्षेत्रे तु लेखकोऽभूतपूर्वा सफलतां प्राप्नोत् । पात्राणामाभ्यन्तरा भावास्तु तत्र सूक्ष्मदृष्ट्या चित्रिता दृश्यन्ते । औपन्यासिकाना तत्त्वाना संयोजनेऽपि लेखकस्य कौशलविशेषो निदर्शनीयः । घटनाना बाहुल्ये सत्यपि कथावस्तुनो रोचकता निलम्बनाख्य वैशिष्टयं च कुत्रापि न्यूनता न प्राप्नुताम् । एतादृश्या उपन्यासिकाया विभिन्नान्यङ्गान्यत्र सक्षेपेण प्रस्तुतीक्रियन्ते ।

## कथावस्तु

मोहनस्य पिता दलपतरायः सट्टाख्ये व्यापारे संपूर्णा स्वकीयां संपत्ति नाशयामास । एतेनाघातेन स शीघ्रमेव नामशेषता प्राप्त. । पितु· स्वर्गवासेन मोहनोऽस्मिन् संसारे एकाकी समजायत । माता तु तस्य पूर्वतः स्वर्गता । परं तस्य विवाहः पितुर्जीवनकाल एव संजात· । साम्प्रतं तस्य पत्नी स्वपितृगृहे न्यवसत् । गृहस्य निर्जनतां पश्यन् मोहनः स्वकीया भार्या गृहमानेतुं श्वशुरालयं जगाम । श्वशुरेण तत्रैव

वस्तु प्रार्थित स, किन्तु स्वाभिमानेन स एनं प्रस्तावं स्वीकर्तुं न शशाक। तस्य जाया किशोरी अपि पत्यु साहचर्यमेवाङ्गीकृतवती। पुनश्च तावुभौ स्वगृहमाजग्मतु। तस्मिन् समये विंशतिरुप्यकाणि स प्रतिमासं प्राप्नोत् कयाचित् सेवावृत्त्या। आयेनानेन कथञ्चिद् गृहकार्यमचलत्। किन्तु तेनैकदा स्वाभिमानितया एषा सेवावृत्ति परित्यक्ता। पत्न्या दत्तानामाभूषणाना विक्रयेण प्राप्तं धन स एकस्मिन्नापणे नियोजयामास। अनेनापणेन तयोर्निर्वाहः कष्टेन भवितुमशक्नोत्, किन्तु तावुभौ स्वातन्त्र्यलाभवशात्त कष्टमपि नाऽगणयताम्। अनेन विधिना जीवनक्रम संचलितः।

किन्त्वेकदा तत्रत्यो भूपतिर्महेन्द्रसिंहो मोहनं स्वकीय भवनमाहूतवान्। यदा मोहन तत्र गत, तदा नापितो हरदेवोऽपि तत्रैवातिष्ठत्। प्रथमं तु हरदेवेन मोहनस्य राजभक्तिरुदाहृता। पुनश्च स राजभक्ताना कृते पुरस्कारस्योल्लेखं कृतवान्। मोहनस्तु भूमिकामेना सम्यक्तया ज्ञातु नाशकत्। तदा नापित कथितवान् यद् मोहनस्य प्रतिवेशे रामाख्या या सुन्दरी प्रतिवसति, सा राज्ञ समीपे आनेतव्या। अस्मिन्नेव कार्ये मोहनस्य साहाय्यमपेक्षितमासीत्। एतस्मिन् कृते तु स कमप्युल्लेखनीय पुरस्कार प्राप्तु योग्यः। श्रुत्वैनं कुप्रस्ताव मोहनो जडीभूत समजायत। रामा तु तस्य प्रतिवेशिनो मित्रस्यैकस्य स्वर्णकारस्य पुत्री आसीत्। अतः तेन नापितस्य प्रस्तावः तदैवास्वीकृतः।

अल्पसमयानन्तरमेव मोहनो नापितस्य मिथ्याभियोगेन न्यायालये आनीतः तत्र षण्मास यावत् कारावासं लेभे। एतेन तस्य पत्नी किशोरी गृहे एकाकिनी संजात, परं पितृगृह गन्तु नोचितं मेने सा। एव सा तत्रैव दिनानि व्यतीतवती। अत्रान्तरे सा एकदाऽपश्यद् यद् भूपति स नापितस्य हरदेवस्यैव भगिनी भामा बलात्कर्तुमिच्छति। नापितस्य गृहे तु तस्मिन् काले भामा एकाकिनी आसीत्। तदा किशोरी सद्यो गतवती तत्र, राजानं च निष्कासितवती ततः। राज्ञो भुशुण्डीमपि बलाद् जग्राह सा। तदा महेन्द्रसिंहोऽपि ततो गमनमेवात्मकल्याणाय मेने। अनन्तरं तु स स्वकीयान् सेवकान् प्रेषयामास तामानेतुम्। अत्रान्तरे हरदेवो नापितः सर्वामिव तां घटना ज्ञातवान्। पुनश्च क्रोधेनाध्मात स सत्वरमेव यष्टिकामेकामादाय राज्ञ सम्मुखमाजगाम। यदैव स नृपोपरि यष्टिकाप्रहारं कर्तुमियेष, तदैव किशोरी तस्य यष्टिकायुक्त हस्तं जग्राह। अनया अतर्कितया प्राणरक्षया महेन्द्रसिंहो भृशं जग्लौ। पश्चात्तापं कुर्वान् तां भगिनीति स्वीचकार।

स मोहनं सद्य एव बन्धनाद्मुमोच । हरदेवोऽपि तदा हार्दिकं पश्चात्तापं चकार। पुनश्च मोहनो राजकोषाध्यक्षः संजातः। येन तस्य आर्थिकी चिन्ताऽपि सर्वथैव दूराबभूव ।

अस्मिन् कथानके बहूनां घटनानामारोहावरोहेण सार्धं पात्र- वैविध्यमपि सुष्ठुतया निभालितं दृश्यते। कथानकस्य विकासः शनैः शनैः किं वा व्यवस्थितरूपेण समुद्भूतः । परिस्थितिवशात् संघर्षरतौ दम्पती महेन्द्रसिंह सन्मार्गमानेतु प्रतीक्षां कुरुतः। भूपतिः स यावद् हार्दिकं पश्चात्तापं नाऽनुभवति, तावत् तावुभौ प्रयत्नशीलावभवताम् । राज्ञा सह हरदेवस्य हृदय-परिवर्तनमपि एतस्य कथानकस्य विशिष्टोपलब्धिरवगन्तव्या। समासतः कथानकस्य प्रारम्भो मध्यावस्था चरमपरिणतिरन्तश्च कलात्मिकया योजनया सुव्यवस्थिता दृश्यन्ते।

अस्यामुपन्यासिकायां संवादास्तु चरित्रगतं वैशिष्ट्यमेवोद्घाटयितुं परिकल्पिताः। कथानकस्य विकासे त्वेतेषां योगदानं स्वल्पतरं प्रतिभाति। वस्तुतो घटनाबाहुल्ये सति अस्यावश्यकतापि नासीत् । अत चरित्राङ्कनाय संवादानां योजना सर्वथौचित्यं प्रकटयति। उदाहरणतया सेवावृत्तिं कुर्वन् मोहनो भोजनं प्रति किंचिद् विरक्त इव प्रतिभाति स्म। एतद् दृष्ट्वा तु किशोरी दुश्चिन्तया ग्रस्ता समजायत । तदा उभयोर्मध्ये यः संवादोऽभूत्, स तयोरुभयोः चरित्रगतां विशिष्टतां समुद्घाटयति। यथा—

"प्रिये, न कापि चिन्ता त्वयि दृष्टाया चेतसि मे पदं निदधाति, किन्तु जगन्नियन्त्रा यादृशं दीयते वस्तु, तथैवोपभुञ्जीत। व्यर्थाडम्बरेण किम्? आसने उपविश्य चतुरस्रे निधाय राजतं भोजनपात्रं स्वादग्रहणपुरस्सरं भोजनं धनिकेषु शोभते। केवलमुदरभरिष्वस्मासु किं तेन?

तस्या लोचने अश्रुनिमग्ने संजाते। किन्तु तत्क्षणमेव स्वामिनः कष्टमनुध्यायन्ती शनैरञ्चलेन प्रमृज्याश्रूणि सधैर्यमिदमब्रवीत् - 'नाथ। केयं चिन्ता?. जीवन्नरो भद्रशतानि पश्येत्। अस्माकं सुदिवसा अपि आगच्छेयुरेव। धीरेण भाव्यं मनुजेन ।

त्याज्यं न धैर्यं विधुरेऽपि दैवे धैर्यात् कदाचित् स्थितिमाप्नुयात् सः ।

इति नीतिवचनं च न विस्मरणीयम् । इत्थं समाश्वासितवती सा मधुरया गिरा।"

अस्मिन् संवादे मोहनस्योक्तिर्दुर्भाग्यजनितं तदीय कुण्ठभावं प्रकटीकरोति। संघर्षस्य कृते साहसस्याभाव एव दृश्यते तस्मिन् । नैराश्येन पीडितः स आशाया दर्शन कर्तुमशक्त इव प्रतिभाति। अनेनैव कारणेन भोजनादौ तस्य स्वाभाविकी रुचिरपि निर्गता खलु । अल्प भोजनेन त्वेतदपि परिलक्षितं भवति यद् विपन्नतया ग्रस्तस्य तस्यान्तर्मनसि जिजीविषा एव न विद्यते। अतः स्पष्टमेवेदं यद् मोहनस्योक्तिर्भग्नहृदयस्य व्यक्तित्वस्य परिचायिका खलु। एतद्विपरीतं किशोर्याः कथनं भर्तारं धैर्यधारणाय प्रेरयति। वस्तुत. पत्युर्नैराश्य-पूर्णैरुद्गारैरेव तस्या नेत्रयोरश्रुबिन्दव आगता । एतत्तु सर्वविदितं यत् पत्युर्निष्पौरुषत्वं कस्याश्चिदपि स्त्रियाः कृते न खलु प्रसादावहम् । अत एव किशोरी शोकाभिभूता दृश्यते। किन्तु सा साहसे धैर्ये च विश्वसिति । सा जानाति यदेष अवसरोऽश्रुप्रवाहाय नोपयुक्तः । पत्यौ पुरुषोचितस्य धैर्यस्य संवर्धनार्थं सा स्वाश्रूणि प्रमार्ष्टि, कथयति च भर्तारं यद् धैर्यस्य समाश्रयेणैव व्यक्तिर्लुप्ता प्रतिष्ठा पुनः प्राप्तुं शक्नोति। वस्तुत. तस्या. कथने ज्ञानस्य गरिमा धैर्यस्य संबल च स्पष्टतोऽभिव्यक्तौ खलु।

एवमेव यदा नापितो हरदेवो नृपते. सन्निधौ मोहनं पूर्वोक्तसाहाय्यार्थं प्रार्थयते, तदा मोहनस्य निषेधात्मकमुत्तरं नापितस्य राज्ञश्च कृते रोषावहं सजायते । अस्मिन्नवसरे तयोः सवादो विभिन्नप्रकृत्योः परिचायको दृश्यते। यथा—

"मोहनः पुनर्वक्तुमारेभे, महाशय ! सत्यमहं राजभक्तः' किन्तु एतादृशं कार्य मया कर्तुं न पार्येत। रामा मम स्वसृतुल्या अस्ति।

हरदेवेन नापितेन किञ्चिद् गर्वाविष्टेन पुनरुक्तम्, अस्माभिस्तु त्वामकिञ्चनं मत्वोक्तम्, राजकृपयाऽस्य सुदिनानि पुनरागच्छेयुरिति, किन्तु तव भागधेयं क्वैतादृशम् ?

मोहनस्य मनसि कृशानुः प्रज्वलित इव। स तान् भर्त्सयन्निव जगाद, 'एवमन्यायकरणे यदि राज्ञामपि प्रवृत्तिस्तदा प्रजानां तु कथैव का ?

तदुपदेशेन गतसंकोचो राजा प्राह,—'नैते वणिजः सरलेन प्रकारेण पथि आगच्छन्ति। किमरे ! जले वसतो मकरेण वैरम् ? त्वं कीदृग् धार्मिकोऽसीति वयमपि द्रक्ष्यामः।

त्रयाणामप्येतेषां कथनैः त्रिविधा मानवप्रकृतिः प्रस्तुतीकृता । मोहनस्योक्त्या राजभक्त्या सार्द्धमेव कुकृत्यस्य किं वा पापात्मकतायाः विचारेणा-भिव्यञ्जना स्पष्टतया प्रतीयते । एषा व्यक्तिर्धर्मप्राणा खलु, किं च प्रतिवेशिनो मित्रस्य च पुत्री भगिनीमिव मनुते । अतएव भगिनी प्रति कुदृष्टियुक्तस्य जनस्य साहाय्यं तस्माच्च परिणामवशाद् धनग्रहणं पाप–कृत्यमनुभवति । धर्मबलेनानेन तस्यात्मनि विद्रोहशक्तेरुदयोऽपि सञ्जातः । न खलु स स्वकीयाया निर्भीकतायाः परिणामेनापरिचितः । तथापि तस्य विचारणा त्वेषा एव यद् राज्ञा चारित्र्यस्य धार्मिकतायाश्च आदर्शः स्थापयितव्यः। यदि स तत् एव न कुर्यात् तदा प्रजाजनोऽपि कुकृत्यानुसरण एव प्रवृत्तो भवेत् खलु ।

धर्मभीरोर्मोहनस्य तुलनाया नापितो हरदेवः कुप्रेरको गर्विष्ठः प्रलोभदायको मिथ्यासहानुभूतिप्रदर्शकश्च वर्तते । राजभक्तेरवसरप्रदानेन स मोहनस्य कृतज्ञतामाहर्तुमिच्छति । अनयैवान्तर्निहितया भावनया स गर्वमनुभवति । दुर्दिनं स्मारयित्वा स मोहनस्य कृते राज-सेया सौभाग्यप्राप्तेरवसरमभिव्यनक्ति । राजानं प्रति चाटुकारितया अन्याश्च प्रति उच्चत्वप्रदर्शनेन नापितस्य हीन-भावना एव प्रकटिता । चाटुकारिता तु तस्य राजकीयामधीनतां प्रकटी-करोति । अन्यांश्च प्रति तदीयमुच्चत्व - प्रदर्शनं तस्य जातिगतां हीनतां व्यनक्ति । अचेतने मनसि स्थित एष कुण्ठभावः त गर्विष्ठं पापिष्ठ च करोति ।

एवमेव महेन्द्रसिंहस्योक्तौ पराजयवृत्तेरुपस्थापनं संजातम् । मोहनस्य तर्केण पराजित· स भीत्युत्पादनमाश्रयते । वीरत्वं तु नास्त्येव तस्मिन्, यतः कुकृत्यकारकस्य जनस्य हृदये आत्मबलस्याभाव एव भवति सर्वदा । बुद्धिबलेन आत्मबलेन च विरहितः स पराजयवृत्ति नाश्रयेच्चेत् तदा किं कुर्यात् ? कुकृत्यानुसरणेन जर्जरित एष राजा अनया वृत्त्या आक्रान्तः सन् तादृक सिंह इव प्रतिभाति यो वृद्धावस्थायां शक्तिहीनो भूत्वा गर्जनमात्रेण पशून् भयाक्रान्तान् कर्तुं स्वमुखे च तान् पातयितुमिच्छति । महेन्द्रसिंहस्यैषा पुंस्त्वहीना गर्जना व्यर्था एव संजाता ।

उदाहरणैरेतैः स्पष्टमेव यदुपन्यासिकालेखको मुख्यपात्राणां चरित्रवै–शिष्ट्यं प्रदर्शयितु संवादानां समुचितमुपयोगमकरोत् । उपन्यासिकायां यदि चारित्र्यस्याभिव्यञ्जिका अन्या घटना नापि भवेयु., तदापि एतादृशैः संवादैः तदभावो दूरीकर्तुं शक्यते । संवादेषु प्रयुक्ता भाषा समस्तपदैः सामान्यतो

विरहिता, प्रसिद्धाभिर्लोकोक्तिभि. समलकृता च दृश्यते । अतः तेषां सजीवता साफल्य च निर्विवाद खलु ।

अस्यामुपन्यासिकाया प्राभुख्येण चतुर्णां पात्राणामुल्लेखो विद्यते । तेषु नायको मोहन., नायिका किशोरी, खलनायको महेन्द्रसिंहः, खलसहायको हरदेवश्च । एषामेव चतुर्णां कार्यकलापेन कथानकस्य संघटन कृतमस्ति ।

मोहनः किशोरी च आदर्शदम्पती इति प्रस्फुटम् । उभावन्यार्थं जीवितौ स्तः । एकस्य पीडा द्वितीयस्यापि पीडादायिका भवति । उभयोर्धर्मप्राणत्वं निस्सन्दिग्ध खलु । अत एव तयोरात्मबलाभाव. कुत्रापि दृष्टिगोचरो न जातः विपन्नावस्थां प्राप्तावपि तौ जनौ कुकृत्यसहायकत्वेन धनार्जन पापवद जानीत. । अनाचारस्य विरोध कुर्वन्तौ तौ एतत्तु न पश्यत यदनेनोपकृतो जनः तयोर्मित्र शत्रुर्वा जायते । अत एव मित्रपुत्र्याः रामायाः शत्रुभगिन्या. भामायाश्च सतीत्वरक्षणे निरतौ तौ समानतया कष्टमनुभवतः । अनेनेदं स्पष्टं जायते यत्तयोर्मनसि पीडितान् प्रति सहजा सहानुभूतिर्वर्तते । क्षमाभावनापि तयोर्विद्यत एव । पश्चात्ताप कुर्वन्तौ च तौ सहजभावेन ज्ञायतः । अनेनोभयोर्मनस आर्जव प्रकटीभवति ।

स्वतन्त्ररूपेण मोहनस्य व्यक्तित्वं स्वाभिमानेन समुज्ज्वलमस्ति । सेवावृत्ति कुर्वन् स यदा स्वामिनो भर्त्सना प्राप्नोति, तदा तस्य स्वाभिमानः स्फुरति आत्मा तु तेन विशतिरूप्यकेभ्यो नैव विक्रीत. । निश्चयेनानेन सेवावृत्तेः त्यागपत्रप्रदानं न किमपि दुष्कर आसीत् । सत्यं स कार्यरहितो जात एवंविधानुसरणेन, किंतु स्वाभिमानस्य रक्षया तस्य मुखे चिन्तायां सत्यामपि काचिदभिनवा आभा प्रस्फुटिता । यथाः—

"आज्ञाभङ्गेन द्विगुणितरोषोऽध्यक्षस्तस्यावमानं चक्रे । मनस्वी जनो हसन्सिहानने स्वं निदध्यात्, वैश्वानरे पातयेत् शरीरं हसन्नेव, उदधौ निक्षिपेदात्मानं किं बहुना कठिनात् कठिनतरमपि कुर्यात् कार्यम्, किन्तु नात्मावमाननं सहेत ।' तदवमानेन मोहनस्य शान्तगम्भीरेऽपि स्वान्ते विक्षोभेण पदं निहितम् । चिन्तितं तेन 'नाहं विंशत्या रूप्यकैरात्मान विक्रीतवान् । किमनेनोदरभरणमात्रमपि कर्तुमशक्तेन पारतन्त्र्यबन्धनेन ? येन पूर्वजानां निर्मलं यशोऽपि कालुष्यमुपेयात् ।' पारतन्त्र्यबन्धनमुमुक्षा तस्य चेतसि महतावेगेन समुत्पन्ना । तूर्णं स

कार्यालयकक्षायां प्रविश्य एकस्मिन् पत्रे किमपि लिखित्वा 'गृहाणेदं महाशय, यदस्माकमद्यावधि वर्तते वैतनिक द्रव्यम्, देयं तदिति ब्रुवता निक्षिप्तं तत् त्याग-पत्रं तेनाऽध्यक्षकरे। तस्मिन् दिने यदासौ गृहमागतः, तदा तस्य मुखेष्वद्भुतमेकं ज्योतिर्दृष्टं जनै, यद्यपि स गभीरायां चिन्ताया निमग्न आसीत्।"

स्वाभिमानमनुध्यायन्नेत्र स श्वशुरमहोदयकृतं श्वशुरालयनिवाससम्बन्धिन प्रस्तावं न स्वीचकार। अजानात् स यत् श्वशुरालये स्थायिरूपेण निवसतो जामातु दुर्दशा भवति। अन्यच्च तत्र निवसन् स स्वकीयस्य कुलस्य मर्यादा कलङ्कितां कर्तुं नैच्छत्। परमेतत् सत्यं यत् स्वाभिमानेन पूर्णोऽपि स आत्मविश्वासाभावं व्यनक्ति। अनेन कारणेन तस्य विचारधारा हीनभावना-ग्रस्ता दृश्यते। यदा स भार्या स्वकीयां गृहमानेतुमिच्छति तदा एषा आशङ्का त बाधते यत्तस्य भार्या विपन्नताग्रस्ते गृहे आगन्तु प्रस्तुता एव न भवेत्। किं वा तस्याः पितरौ स्वकीयां प्रिया पुत्री तेन सार्धं प्रेषयितु सन्नद्धावेव न स्याता-मित्यादि। एता आशङ्का दारिद्र्यजनितया हीनभावनयैव प्रादुर्बभूवुः। अनेनैव कारणेन युवती पत्नी प्रति स सहजस्य प्रेम्ण उन्मादमप्यनुभवितुमसमर्थ इव दृश्यते। यथाः—

"तद्दिने चिन्तितं तेन, 'वर्षत्रयात्मकः कालो व्यतीतो जातो ममोद्वाहे। किशोरी पञ्चदशायनमुपभुङ्क्ते। तथा शक्यतेऽधुना गृहकार्यं निर्वोढुम्। गत्वा किं न मयानेतव्या? येन कार्यभारोऽपि मे लघुतामियात्। वार्तालापादिभिः समययापनेऽपि न भवेत् काठिन्यम्। आर्यधर्मे श्रूयते किल पत्नीत्वव्याजमित्रं पुरुषस्य। माभूवन्नन्यानि मित्राणि। तया सहैव कथंचित् कालयापनं करिष्ये।' क्षणं स्थित्वा पुनः स चिन्तयितुमारेभे, 'न जाने मामकिञ्चन मन्वाना सा न मया सह समीयात्। अथवा तस्या मातापितरावेव न प्रेषयेतां तामागमनकांक्षिणी-मपि। भवतु नाम, विपत्तौ सुपरीक्षणीयाः सुहृदः। गन्तव्य त्ववश्यमेवैकवारम्। श्वः स्वामिनः सकाशाद् अवकाशं ग्रहीष्यामीति निश्चित्य सुप्तः सः।"

मोहनस्यैभिर्विचारैर्यौवनसुलभायाः शक्तिमत्ताया आवेशस्य च स्थाने दमित-वासनाया एव संकेत उपलभ्यते। मोहनस्य व्यक्तित्व कुण्ठितमिव प्रतिभात्यत्र। विपन्नतया न केवल तस्य गृहं, अपि तु तस्य मनोभावाश्च प्रभाविताः खलु। स मानवस्य निस्सीमां क्षमतां नैव जानाति। अन्यानि मित्राणि मा भूवन्निति विचारे-ऽप्यस्य कुण्ठाभाव एव प्रतिध्वनितो विद्यते। स्पष्टं खल्विद यत् सम्पन्नतायां

समन्ततो वर्तमानानां सुहृदां साहचर्यस्याशा तस्य हृदयेऽवशिष्टा नासीत् । पत्न्या आगमनानन्तरं स मित्राणामुपेक्षां कर्तुमपि शक्नुयादित्येषा विचारणा 'मृद्व्यः अम्ला' इति लोकोक्ति स्मारयति । भार्याया कि वा तस्या पित्रोरस्वीकृति-माशङ्कमानोऽपि स एकवारं तु प्रयासकरणस्यैवौचित्य मनुते । प्रथमप्रयासस्य विफलतायामन्यांश्चोपायानाश्रयितु स सन्नद्धो नास्ति । अनेनेदमेव प्रकटीक्रियते यत् पितुर्मृत्युना निर्धनतायाः आकस्मिकतया च त्रस्तो मोहनो नैराश्येन कुण्ठाभिश्च समग्रतो ग्रस्तो विद्यते । अस्याः दुस्थितेरुद्धर्तुं किशोर्याः आगमनं भवति तस्य जीवने । किशोरी तु धनिकस्य पुत्री आसीत् । तस्या उद्वाहसमये तदीयः श्वशुरालयोऽपि समृद्ध एवासीत् । किन्तु वित्तहीनायां स्थित्या श्वशुरे मृते सति सा नवीनां या विषमस्थितौ वर्तते । यदा तस्या निर्धनः पतिः तामानेतु-मागच्छति, श्वशुरालये निवासं चाऽस्वीकरोति, यदा सा पत्युर्बुद्धिमत्ताया स्वाभिमाने च गर्वानुभवं कर्तुमशकत् । सत्यमेतादृश्यो नार्यो विरला एव स्युः, याः स्वभर्तुः श्वशुरालये उदरपूर्ति उत्सहन्ते किशोरी तु नैवासीदेतादृशी नारी । प्रत्युत सा निर्धनेन भर्त्रा सार्धं गत्वा रूक्ष-मपि भोजनमुचित मेने ।

पत्या सह निवसन्ती सा तं सदैव आशावर्द्धकैर्वाक्यै धैर्यधारणाय समुत्सा-हितवती । यदा मोहनः सेवावृत्ति त्यक्त्वा निर्व्यापारो गृहेऽतिष्ठत्, तदा तदीयां चिन्तां दूरीकर्तुं सा भगवतो दयालुतां विश्वसितु प्रेरयति, यथाः—

"प्राणनाथ ! केयं चिन्ता भवादृशा ज्ञानिनां मनसि समुत्पन्ना ? अद्य कथं विस्मृतं भवद्भिः —

येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः ।
मयूर्यश्चित्रिता येन स मे वृत्ति विधास्यति ॥

इति चिरपरिचितं पद्यम् ! शम्भुः स जगदीश्वरः कथ्यते । किं स आवयोः चिन्तां न विधास्यति ? स सर्वत्र व्यापकोऽस्ति, भवानेव तु मामनेकवारमेव वदति ।"

एवं किशोरी स्वभर्तुरुद्बोधनाय तस्यैवोक्ति स्मारयित्वा स्वकीयस्य चातुर्यस्य प्रदर्शनं चकार इति तु स्पष्टमेव । एतादृश्यां कठिनायामपि परिस्थितौ किशोरी धनिकात् स्वपितुः साहाय्यार्थं तं न प्रेरयति । मोहनोऽपि तस्यां दिशाया-मुन्मुख एव दृश्यते । एतत्तु सुखप्रदमाश्चर्यं खलु । वस्तुतो व्यक्तय एतादृश्यां ईश्वरस्य करुणार्द्रतायामविच्छिन्नरूपेण विश्वसन्ति । किशोरीं मोहनं वा एष एव

विचारो जीवयामास यत् प्रभोरनुकम्पया कष्टस्यैतानि दिनान्यपि शीघ्रमेव व्यतीतानि भविष्यन्ति । कार्याभावे तु यदा मोहनस्य आस्था निर्बला समजायत, तदा किशोरी तदुद्बोधनं सद्य एव कृतवती, येन मोहनस्य विश्वासःपुनरायात। पश्चाच्च आभूषणानां विक्रयेण स्वतन्त्रव्यापारं प्रारब्धुं किमप्यन्तः स्फुरणं तयोः साहाय्यार्थमेव समुद्भवनि । किशोर्या नारीत्वस्योद्घोषकेण मार्दवेन सह अप्रत्याशितं साहसमप्यासीत् । सा हि नापितस्य भगिनी बलात्कर्तुमुद्यतस्य महेन्द्रसिंहस्य हस्ताभ्यां भुशुण्डीमपजहार, इति तथ्यमविश्वसनीयमिव प्रतिभाति । परं सा त्वेतत् कृतवती एव, यथा —

"किशोरी पृष्ठतो गत्वाऽकस्मात् तस्य करात् तामाक्षिपत् उवाच च,–'नराधम ! न जाने त्वं कति गृहान् नाशयिष्यसि पशुवदाचरणेनानेन । गेहाद् बहिर्गच्छ । नो चेत्त्वामधुनैव यमनिकेतनातिथिं विधास्यामि ।"

वीरोचितस्यैतस्य साहसस्य तात्कालिकः परिणामस्त्वेष बभूव यद् मोहनस्तु राजकारागारे आसीदेव, किशोरी अपि राजपुरुषैर्बद्धा संजाता । तथापि स्वकीयेन सदाचारेण सा भृशं सन्तुष्टा आसीत् । विपत्तीनां भयेन सद्व्यक्तयः सन्मार्गाच्च्युता नैव स्युः । अत एव यथा धर्ममार्गानुसरण कुर्वता मोहनेन कारावासो लब्धः, तथैव किशोरी अपि धर्माचरणेन दण्डप्राप्तये सन्नद्धा बभूव । किन्तु साम्प्रतं विधिना एतत् सम्भावितं नासीत् । यदा सा नृपतेः सम्मुखमायाता, तदैव हरदेवः तत्र आगत्य नृपतेरुपरि यष्टिकायुक्तं हस्तमुत्थापयामास । किन्तु क्षिप्रगतियुक्ता किशोरी तस्य हस्तं न्यरुणत् । अनया अतर्किततया प्राणरक्षया राज्ञो हृदयपरिवर्तनं तु जातमेव । हरदेवोऽपि तदीयेन कृत्येन भृशमभिभूतोऽभवत् । ततश्च क्षमां याचमानो राजा किशोरीं पुरस्कारं याचितुं न्यवेदयत् । सत्य किशोरी किमपि ययाच, परं तत्तु सर्वथैव आश्चर्यकरमासीत्, यथाः—

"राजन् ! यद्यसि त्व मयि प्रसन्नस्तदा यथा त्वया मयि भगिनीत्वमुररीकृतम्, तथा परस्त्रीषु सर्वासु मातृवद् भगिनीवद् दृष्टिः कार्या । इतः परं परस्त्रीषु न कदाचिदपि दुर्दृष्टिः विधेया ।"

श्रुत्वेदं राज्ञः शिरोऽवनतं जातम् । स त्वचिन्तयद्, यत् किशोरी कस्यचिद् धनराशेर्याचनां करिष्यति, किन्त्वनया याचनया तु स आत्मानं लज्जितमन्वभवत् । स्पष्टतः अस्यामुक्तौ किशोर्या अर्थविषयिका निरपेक्षा कि वा प्रत्युप-

कारं प्रति तस्या अभीप्सा एव प्रकटिता विद्यते । नारीत्वेन नारीमात्रं प्रति पुरुषैर्दर्शिता किशोर्या: कृते शोभाधायिका प्रतीयते । अन्यथा याचनया मां अनुरागं रागं न विक्रीणाति । तस्याः परित्रमस्तु कष्टकारकः सन्नपि राज्ञो नारीत्व व हृदयपरिवर्तनेनैव पुरस्कृतः समजायत । साम्प्रतं तस्या कृते आर्थिकपुरस्कारादेर्न काप्यावश्यकताऽऽसीत् । सा त्विदमेवैच्छद् यद् राज्ञो हृदये पावित्र्यमिद स्थिरीभूतं स्यात् ।

एवं किशोर्याः चरित्रं स्वभर्तु. चरित्रस्य पूरकमिव प्रतीयते । उभावेव आदर्शदम्पती स्त स्वकीयं कर्तव्यं प्रति तौ सुनिष्ठौ सक्रियौ च दृश्येते । सन्मार्गे चलतो तयोः कृते विपदा सहर्ष वरणं सहजमिव आसीत् । उभावेव स्वजीवने परोपकार सहानुभूति क्षमाशीलता च साक्षादवातारयताम् । तयोश्चरित्रे सद्गृहस्थाना कृते बहु अनुकरणीयमस्ति ।

### महेन्द्रसिंह

एतद्विपरीतं महेन्द्रसिंहस्य चरित्र कामुकतां कातर्य दुष्टतां च परिचाययति । स प्रजाया रक्षको नास्ति, प्रत्युत भक्षक एव । स परकीयाणां स्त्रीणा बालिकानां वा चरित्रनाशन कर्तुमेव समुद्यतः। कृतघ्नोऽप्यासीत् । स आत्मन उपकारिणं जनमपि कारावासे प्रेषयन् अखिन्न एव । कि बहुना, स आत्मनः कुकृत्य-सहायकस्य भगिनीमपि स्वकीयया कुदृष्टया पीडयामास । वस्तुतः स पतित एव । किन्तु अन्ते किशोर्या हस्ताभ्या प्राणरक्षां प्राप्य स्वकीयानि कुकृत्यानि स्मृत्वा च स भृशं जग्लौ ।

### हरदेवः

नापितस्य हरदेवस्य चरित्रे कुकृत्यसंपादनाय प्रवृत्तिः दृश्यते । हीनभावनया ग्रस्तोऽयं जन इति तु पूर्वमिदं प्रतिपादितम् । क्षुद्रजातौ उत्पन्नोऽपि स कथञ्चिद् राज्ञ सान्निध्यमाप । यदा स राज्ञः कामविषयिकां दुर्बलतामजानात्, तदाप्रभृति स तं राजानं सदैव कामात्मके कुचक्रे नियोजयामास । भूपतिरपि पूर्णतया तदाश्रितः समजायत शीघ्रमेव । अनयोपलब्ध्या स नापित आत्मानं बहूच्चतरं मेने । अन्येषां च सम्मुखमात्मानमुच्चतरं प्रदर्शयतः तस्य हीनभावना एव व्यक्ता जायते । अकृतज्ञस्त्वस्त्येव सः । एकदा ग्रामीणजनैर्भृश ताडितः स निःसंज्ञो

बभूव, तदा मोहनः तत्रागत्य तन्मुखे जलं प्रक्षिप्तवान्, येन स पुनः संज्ञा प्राप। किन्तु तृतीय एव दिवसे स मोहनं राजपुरुषैरपीडयामास। वराकोपर्यभियोगस्तु तेन एष जनितो यत् स एव हरदेवं यष्टिकयाऽताडयत् तादृशीं दुर्दशां चाकरोत। फलतो मोहनः षण्मासस्य कारावासं लेभे।

दुष्टः स नापितस्तु तदैव प्रज्ञामाप्नोद्यदा स आत्मनो भगिनीं प्रति राज्ञः कुदृष्टिमजानात्। स तु विश्वसितुमेव नैच्छद् यद् भूपतिः स ममगृह एव कुदृष्टिं पातयिष्यति। किन्तु तथ्य त्विदमेवासीत्। स चानेन कटुसत्येन भृशं चुक्रोध। प्रतिशोधभावनया तस्य वपुः प्रकम्पितमजायत।

हरदेवस्यानया स्वीकारोक्त्या तदीयस्य हृदयस्य कालुष्य कृतघ्नता प्रतिशोधभावना च प्रकटीभवन्ति। तेन त्विदं विस्मृतमासीत् यद् यो वह्निस्तेन प्रज्वालितः, तस्मिन् स्वयमपि ज्वलितुं शक्नुयात् सः। इद खलु संभाव्यते यत् स नापितः स्वकीयस्य गृहस्यैव प्रतिष्ठां कालुष्यहीनां रक्षितुं प्रायतत। न खलु इदमाश्चर्यंकर स्याच्चेत् स आत्मानं भूपतिरिव मनुते स्म। अत एव तत्कृते भामां प्रति राज्ञः कुदृष्टिपातोऽसह्यः सजातः।

एवं किशोरीमोहनयोः नृपतेर्नापितस्य च चरित्रगतं वैभिन्न्यमस्य संवर्धनाय कथानकस्य रोचकता वर्तते। तयोः सच्चरित्रतायाः किं वा आदर्शात्मकतायाः तुलनायां नृपतिनापितयोः कुटिलता दुश्चरित्रता च बहुतरं अङ्कितास्ति। मानव—प्रकृतिर्घटनानामानुकूल्येन प्रतिकूलतया वा प्रभाविता भवतीति तु अस्य कथानके चित्रितैर्नानव—चरित्रैः पूर्णतया स्पष्टं खलु।

## शैली

रचनायामस्या भाषा तु गतियुक्ता अपरं च लोकोक्ति—पूर्णा दृश्यते। सुदीर्घाणां समस्तपदानां दर्शनं प्रायशो न भवति। अनेन कथानकस्य रसास्वादने सौकर्यं समजायत। नवशब्दानां निर्माणे उपन्यासिकाकारस्य रुचिर्न्यूना एवाभाति। 'सट्टा' इति प्रचलितस्याऽऽधुनिक भाषायाः शब्दस्य संस्कृत—भाषायामेवमेव ग्रहणं प्रगतेः सूचकं खलु। लोकोक्तीनां संग्रहैस्त्वेतादृशः कृतः —

"गृहमेकं तु डाकिन्यपि परिज्यति"

"जले वसतो मकरेण वैरम्"

"भुजङ्गविले पाणिः प्रवेशितः"
"कस्य जन्मनो वैर निःसारित तेन?"
"यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः"
"जीवन्नरो भद्रशतानि पश्येत् " इत्यादि ।

लेखकेन समाजगताना कुरीतीनां अथ च दुर्व्यसनाना प्रभावकारि वर्णनं कृतमत्र । श्राद्धभोज्ये कृतस्यापव्ययस्य अनौचित्यमस्या रचनाया सम्यक् प्रदर्शितम्, तद् यथा

"मित्रैः सबंधिभिर्ग्रामस्य प्रतिष्ठितैश्च पुरुषैरभिहितम्– 'नैतावदन्तरेण तव पूर्वजाना स्वरूपयोग्यं भवेत् श्राद्धम् । द्रव्यस्य का चिन्ता, पुरुष एव द्रव्यमर्जयति । प्रतिष्ठां रक्षता त्वया कि न रक्षितं स्यात् ?"

अत्र प्रमुखजनाना पण्डिताना वा कुतर्को गर्हणीय एव प्रतीयते । दुर्व्यसनाना भयावह. परिणामोऽपि लेखकेन चित्रितोऽत्र, यथा---

"समापन्नविपत्तिकाले सुचरितस्यापि पुरुषस्य धियो मलिनीभवन्तीति नीतिविदो जानन्त्येव । दुर्दैवप्रेरितेन दलपतरायमहाशयेन सट्टाख्ये व्यापारे दत्ता दृष्टिः । एकः स समय आगत., यस्मिन् सर्वा खलु संपद् विलयं जाता । अवशिष्टा केवलं तस्य प्रसृमरा कीर्तिः, अन्यश्च विशालः करनालस्थ. प्रासादः । वार्द्धक्ये तादृशीमाकस्मिकी विपत्तिमसहमानो दलपतरायः रुदन्तं मोहनदेव-मेकाकिनं परित्यज्य स्वर्गत. ।"

ज्ञायतेऽनेन वर्णनेन यदेष न खलु व्यापारः कोऽपि । एतत्तु द्यूतमेव स्पष्टतः । अतः खलु दुर्व्यसनमेतत् सर्वथैव त्याज्यम् ।

अस्यामुपन्यासिकायामुद्देश्यरूपेण तु दम्पत्योरादर्श एव प्रतिष्ठापितो दृश्यते । एतच्च रचनाया. शीर्षकेऽपि प्रस्फुटितं खलु । आदर्शस्थापनातिरिक्तं दुष्टपुरुषाणां हृदयपरिवर्तनमपि लक्ष्यरूपेण प्रस्तुतीकर्तु शक्यते । अस्मिन्नुद्देश्ये लेखकः सफलता भजते इति तु निर्विवादमेव ।

रचनायां विचारोत्तेजकता, मननीयता अनुकरणीयता च उपन्यासकलायाः समुचितोपयोगेन संप्रशस्याः सन्तीति सत्यमेव ।

# ऊनविंशशताब्द्या एकाङ्करूपकाणि

शिवदर्शन तिवारी

संस्कृत-नाट्यसाहित्ये एकाङ्करूपकं सुदूर पूर्वमेव भासस्य 'मध्यमव्यायोगे' प्रथमं परिलक्ष्यते । अतः विंशशताब्द्यामेकाङ्करूपकाणि प्रादुर्भूतानि इत्याधुनिकानां वक्तव्य न समीचीनम् । भरतधनञ्जयविश्वनाथादिभिः नाट्यशास्त्रकारैः प्रदर्शितेषु रूपकोपरूपकभेदेष्वपि सन्ति रूपकाणि एकाङ्कानि । अतः एकाङ्किरूपकाणां प्राचीनत्वस्यविषये न कोऽपि सन्देहः । किन्तु तथाप्येतेषा संख्या पञ्चदशशतकात्पूर्वमतिन्यूनासीत् । किमस्ति कारणमिति जिज्ञासायां प्राक्तन-नाटककाराणामेतत्प्रणयने नासीदास्था बलवतीत्येव प्रथमो हेतुरिति प्रतीयते । अथवा लोकानुरञ्जनाय लघूनामेतेषामुपयुक्ततासमर्थता वा तद्धेतुः । यद्भवतु तद्भवतु, पञ्चदशशतकानन्तर नाटककाराणामेकाङ्करूपकरचनायां अधिकादरो दृश्यते । भाणप्रहसनव्यायोगादीनामेकाङ्करूपकाणां सख्यानन्त्यमिव गता । ऊनविंशशतके तु प्राय. सर्वासु एकाङ्करूपकविधासु रचना. विद्यन्ते । किमस्ति कारणमस्या वृद्धेरिति विवेचनीयो विषयः ।

एकाङ्क रूपकं नाम नाटकस्यैकमशमात्रम् । नाटकस्य कथावस्तु विशालकायमतिदीर्घञ्च भवति । अतोऽस्याभिनयार्थं रङ्गमचस्य दैर्घ्यं पात्राणाञ्चाधिक्यमपेक्ष्यते । सामाजिकानां कृते दर्शनाय कालाधिक्यमपीष्यते । आधुनिकौद्योगिकविकासयुगे दर्शकानां सामाजिकानाञ्च समयाभाव', चलचित्राणां आदरभावश्च प्राक्तनसंस्कृतनाटकाना विकासपथे महान्तौ प्रत्यूहौ । अतः सस्कृतरूपकप्रणेतृभिरप्येतदभिलक्ष्य लघूनामेकाङ्करूपकाणा प्रणयनमेव संस्कृतप्रचारप्रसारयोः शोभनं साधनमिति स्वीकृतम् । परिणामतः पञ्चदशशतकादारभ्योनविंशशतकपर्यन्त बहूनामेकाङ्करूपकाणां रचना कृता । किन्तु प्राचीनानामेकाङ्करूपकाणां यद्रूपं परिलक्ष्यते तस्मादेतान्याधुनिकानि नाटकानि पर्याप्तं भिन्नानि । एष्वपि ऊनविंशविंशशतकीयानि एकाङ्करूपकाणि पूर्वतो वैलक्षण्यं भजन्ते । किमस्त्येतेषां वैलक्षण्यमिति प्रतिपादनीयो विषयः ।

संस्कृतनाट्यशास्त्रे पुरातनानामेकाङ्करूपकाणां यद्रूप सम्यक् निर्धारितं विद्यते, तदनुसारमाधुनिमैकाङ्का न प्रवर्तन्ते कथमपि इति निःसन्दिग्धम्। यतो ह्येतेषां कथावस्तुसघटने, पात्राणा चयने, चरित्रचित्रणे, कथोपकथने, भाषाशैल्यो प्रयोगे च पर्याप्तं वैभिन्यं परिवर्तनञ्चाप्यवलोक्यते। आधुनिकैकाङ्करूपकाणां रचना सरलसुबोधसंस्कृतभाषया क्रियते। प्राचीनैकाङ्कवत् प्राकृतस्य प्रयोगः कुत्रापि नोपलभ्यते। तेषु पद्यापेक्षया गद्यस्य प्राधान्यं वरीवर्ति। केषुचिदेकाङ्केषु केवलं गद्यस्यैव प्रयोग. प्राप्यते। प्राचीनवदत्रालङ्कारस्य वैचित्र्य चमत्कारित्वञ्च, पूर्वरङ्गेण बहुपृष्ठात्मकमभिरञ्जन शाब्दीक्रीडया प्रकृतिवर्णनस्य प्राचुर्यञ्च नैवावलोक्यते। प्राचीना एकाङ्किप्रणेतारः अपि साहित्यकारा, कवयः, पण्डिताश्च भवन्ति स्म। किन्त्वाधुनिकास्तु छन्दसा ज्ञानाभावेऽपि अतिसौकर्येण काव्यप्रणयने साफल्य भजन्ते। एतादृशी रूपकरचना अपि प्रभावहीना न भवति। प्राचीनार्वाचीनैकाङ्कयो. शिल्पविधानदृष्ट्यापि महदन्तरं परिलक्ष्यते। प्राचीनानामेकाङ्कानां शिल्पविधान भरतधनञ्जयविश्वनाथादिभि नाट्यशास्त्रकारै प्रतिपादितान् सिद्धान्ताननुसृत्य कृतं विद्यते। किन्त्वाधुनिकानामेकाङ्कना शिल्पविधानोपरि पाश्चात्यानामेकाङ्कविधायाः प्रभाव. परिलक्ष्यते।

एतादृशान्येतल्लक्षणवैशिष्ट्यानि आधुनिकैकाङ्करूपकाणि ऊनविशशतकस्योत्तरार्द्धे सामाजिकानां पुरत समागतानि। मानवजीवनस्य यथार्थचित्रणेन इमानि नाटकानि सामाजिकानां प्रमोदकराणि जातानि। अत जीवनस्य साधारणाना विशिष्टानाञ्च सवेदनानां यथार्थचित्रणात् जनप्रियत्वमासाद्य एतेषां बाहुल्यमपि सञ्जातम्। विशशताब्द्यां तु भारतीयाः कवय एकाङ्कस्यैव रूपकस्य प्रणयन वरं मन्यन्ते। एतेषा वृद्धेरन्यत् कारणमभिनयसौकर्यं प्रतीयते। एतादृशेषु रूपकेषु वस्तुसंघटनाविस्तरभयात् रूपकविषयत्वाच्च जीवनस्य मुख्यघटनानामेव चित्रण जायते। फलतः कथावस्तु लघुकायं सक्षिप्त च भवति। अतोऽस्याभिनयोऽपि सुकरः जायते।

ऊनविंशशतके एकाङ्करचनायामुत्साहाधिक्यहेतुषु संस्कृतस्य प्रचारप्रसारभावनासीदन्यतमः। अनयैव सार्द्धम् प्राचीनकथानुरागात् महाभारतरामायणादीन्युपजीव्यानि बभूवुः तदनुसारं। कुम्भकोणम्निवासिना भट्टश्री सी. आर. नारायणशास्त्रिमहाभागैः 'मुक्तकेशी' 'शरभविजयम्' 'महिषासुरवधञ्च' रूपकत्रयम् विरचितम्। इमानि रूपकाणि-

न लभ्यानि यावत्[1]। केरलप्रदेशान्तर्गत - चन्नानसेरिनगरस्य लक्ष्मीपुरमिति नाम राजप्रासादे १८६३ ऐशवीये जनिभुवा श्री ए. आर. राजराजवर्ममहोदयेन १८९० ई० वर्षे 'गैर्वाणीविजय' इति नामैकाङ्क रूपकं व्यरचि[2]। रूपकस्यास्य प्रथमं प्रकाशनं 'विज्ञानचिन्तामणि' नाम पत्रिकायां १८९० ई० वर्षे ग्रन्थलिप्यां जातम्[3]। किन्त्वस्मिन्नेव वर्षेऽस्य पुस्तकाकार–प्रकाशनमपि विद्यालता कल्पतरु प्रेस, कल्पडी, पालघाटतः समजायत[4]। प्रसिद्धस्यास्य नाटककारस्य विषये पर्याप्त-सूचना प्राप्यते[5]।

## कथावस्तु

रूपकेऽस्मिन् 'गैर्वाण्याः विजयः' प्रतिपादितः। रुदन्ती विलपन्ती च 'भारती' ब्रह्मणः समीप समागत्य अभियोगमिमं श्रावयति यन्नाहमिदानीमस्मिन् देशे स्वामिनी प्रत्युत आङ्गलभाषाया दासीति। ब्रह्मा अतिशीघ्रं ट्रावनकोर-केरलयोः प्रदेशयोः संस्कृतभाषायाः विकासं विज्ञाप्य तां सान्त्वयति आङ्गल-भाषया सममेव संस्कृतं प्रयोक्ष्यते विकासं गमिष्यति चेति ब्रह्मणः उद्घोषणेन नाटकस्यास्यावसानं जायते।

---

1 History of Classical Sanskrit Literature, by M. Krishnamachariar, PP. 667-69

2 Kerala Contribution to Sanskrit literature, by K. K. Raja, P. 257

3 History of Classical Sanskrit litt by M. Krishnamachariar, P. 683

4 Catalogue of Books, Printed in Madras Presidency, Fort St. George Gazette Supplement, October 23, 1890, No. in each class 145, Registration No 140, PP. 104-5

5 (A) The History and Culture of the Indian People British Paramountcy and Indian Renaissance, Pt. II, chapter, V (XLIII), Literature (Malayalam) by P. K. Parameshwaran Nair, P. 206-7

(B) Bibliography of Sanskrit Drama, Columbia University, Indo – Iranian Series, Volume III, P. 26

एकाङ्कस्यास्य कथानकं रोचकं, वास्तविकम्, उत्तेजनापूर्णमेकरूपञ्च । कथोपकथनं कौतूहलप्रद विस्मयकारक चानुमीयते । गैर्वाणीहौण्यो पारस्परिक-कलहेन भयमापन्नाः सामाजिकाः, कस्या. विजयो भविष्यतीति समुत्सुका ब्रह्मणोः निर्णयस्य शैघ्रचमेवाभिलषन्ति । सामाजिकानामिदमेव कौतूहल कथा-वस्तुनः सघटना–कार्यव्यापारयोश्च द्वारेण ब्रह्मण. पुरोगच्छद्वुद्धोपणपर्यन्तमक्षुण्ण विराजते ।

## नेतृपरिचय

पात्राणि मुख्यगौणयोर्भेदेन द्विधा विभक्तानि सन्ति रूपकेऽस्मिन् । मुख्येषु पात्रेषु भारतीगैर्वाणीहौणी ब्रह्मादीनि, गौणेषु च ऋषय·, नारदः गरुत्माश्च वर्तन्ते । भारतीगैर्वाण्यौ आदर्शवादिन्यौ नायिके । स्वाधिकार–सम्मानयोश्च रक्षार्थ द्वे एव सन्नद्धे स्त । ब्रह्मा एकः सफलो निर्णायकः, दुर्वासाश्च आङ्गलभाषानिन्दकः क्रोधाविष्टश्च महर्षिः ।

रूपकस्यास्य मूलमवेदना राष्ट्रिया सस्कृतिसम्बन्धिनीच । अनया चेतनया रूपकेऽस्मिन् गैर्वाण्या चरमोत्कर्षत्व नीयते । दुर्वासोनारदगरुत्मदादय. गैर्वाणी प्रोत्साहयन्ति साहाय्यं चापि दधति । परमेकाङ्कस्यास्य विधानकौशलं क्वचिदभावग्रस्तम् । पूर्वरङ्गविधानात् देशकालस्थितीनां सहसा ज्ञानं न जायते । परन्तु घटनानां विकासः चरमोत्कर्षश्च युक्तियुक्तः निर्दोषश्च । आदौ कौतूहलस्य जिज्ञासायाश्च सुनियोजितः प्रयोगो दृश्यते ।

## शैली

एकाङ्कस्यास्य भाषा सरला, भावानुरूपा, पात्रोचिता च । गम्भीरविषयाणा द्योतनेऽस्याः गम्भीरत्व प्रभावोत्पादकत्वञ्चापि परिलक्ष्येते । ब्रह्मणो भाषा गम्भीरा । एकतो गैर्वाण्याः कथने आग्रहो बालसुलभप्रगल्भता च दृश्येते । अपरतः हौण्याः कथने अपराधिन्या वैवश्यम् दैन्यञ्च । छन्दःसु अनुष्टुभ. प्राधान्यं वर्तते । शार्दूलविक्रीडितार्या–स्रग्धरा–वसन्ततिलकादीनामपि विरलप्रयोग. परिलक्ष्यन्ते । हौणीं विहाय सर्वाणि पात्राणि विशुद्धेन संस्कृतेन वदन्ति । गद्यपद्ययोः प्रयोगसाम्यो वर्तते । पद्यापेक्षया गद्यांशे प्रवाहाधिक्य दृश्यते । भावानुसारं यत्र तत्र गाम्भीर्य मान्थर्य चापि रूपकस्योत्कर्ष द्योतयति । अनलंकृतोऽपि सन् पद्यभागः प्रभावोत्पादकः ।

रूपकस्यास्य रचना भौतिकवादस्य विकासकाले संजाता । एकाङ्का-विहितसांस्कृतिकवर्णनेनानुमीयते, यदस्मिन् काले धर्म क्रमेणोपक्षीयमाण आसीत् । सामाजिकेषु पारस्परिकविद्वेषभावना आसीत् । रूपकेऽस्मिन् प्रकृतिवर्णनस्य

प्रायः अभावः परिलक्ष्यते । केवलमाकाशमार्गेण आगच्छतो गरुत्मतो वर्णनेन पक्षिणः वर्णनमुज्जृम्भते ।

अनया रीत्या रूपकमिदं सर्वथाऽऽधुनिकैकाङ्कपदवीमधिरोहति । यद्यप्याधुनिकैकाङ्क रूपकस्य प्रादुर्भावे न किमपि निश्चितं मतं निर्णेतुं शक्यते, तथाप्यूनविंशशतकस्यपूर्वमाधुनिककोटिकानामेतादृशानामेकाङ्क रूपकाणामभावात् शतकेऽस्मिन् सम्भवाच्चाधुनिकैकाङ्करूपकाणां सूत्रपात. मया शतकेऽस्मिन् स्वीकृतः ।

# 'मेलनतीर्थ-भारतम्'

**मनोरमा सक्सेना**

डा० यतीन्द्रविमलचतुर्धुरीणेन विरचितं 'मेलनतीर्थ-भारतम्' ऐतिहासिकं नाटकमस्ति । भारतवर्षमादिकालादेव विभिन्नसंस्कृतीनां मेलनक्षेत्रमस्ति । वैदिककालादद्यावधि भारतवर्षे नैकदेशीयसंस्कृतयः समागताः सर्वा अपि ता भारतभूमौ परस्परं सम्मिश्रिताः । हिन्दु-मुस्लिम-सिख-ख्रिष्टादिविभिन्नधर्मावलम्बिनः जनान् भारतभूः स्वक्रोडे निर्विशेषमपालयत् । विभिन्नदेशीयसंस्कृतीनां मिश्रणार्थं बहूनां प्रयत्नानां निर्देशनं नाटकेऽस्मिन् विद्यते । यथा—

विस्मृत्यम्भोधिगर्भे विलयमुपगतादायुगाद् वेदपूतात्
आ पौराणाच्च, यावत् प्रचलितसमयं कर्तृकालादिभिन्नः ।
यो यः कर्मप्रपञ्चो भरतभुवि बभूवैक्यहेतोर्जनानाम्
एकस्मिन् दृश्यकाव्ये स स इह निहितः किं भवेत् तोषदायी ।

सांस्कृतिकस्य सम्मेलनस्येदृशं प्रकल्पनं जगति नान्यत्र दृश्यते ।

अस्य नाटकस्य नान्दीपाठे भारतवर्षस्य वन्दना कृता । तद्यथा—

कृत्वा काञ्चन मातरं कमपि वा तातं कमप्यात्मज
तत्सम्बन्धितयेतरानपि नरानायोजयन् सज्जया ।
विश्वे शाश्वतसूत्रधारपदवीमाधाय यो बालवन्—
नित्यं स्वप्रतिबिम्बकैरिव नरैः क्रीडत्यमु सन्नुम ॥
आसीद् यस्य निराकुलं गुरुकुलं शिक्षार्थमाविंशते—
र्वर्षाणां परतस्तु संयमधनः पुण्यो गृहस्थाश्रमः ।
यस्यासन् वनभूमयो बहुमता वार्धक्यकालोचिता—
स्तज्जीयाद् वर्षमतुलं ज्ञानोज्ज्वलं त्रैदशम् ॥

## कथावस्तु

नाटकस्य कथावस्तु दशाङ्केषु विभक्त वर्तते । प्रथमाङ्केऽथर्ववेदस्य सर्जकोऽथर्वा ऋषि स्वशिष्यांनुपदिशति यत् पृथिव्या. सर्वेषा जनाना महा-मेलनं प्रेमद्वारा, भक्तिमार्गेण वा सिध्यति । अथर्वाणिमपीप दिग्दिगन्तरात् बहव शिष्या ज्ञानार्जनायागता । ऋषि तान् सर्वानिति स्नेहेन शिक्षयति । द्वितीयाङ्के मलयपर्वते ऋषिरगस्त्य. स्वपत्न्या शिष्यैश्च समावृत आसीनो विद्यते । स आर्यसभ्यताया विस्ताराय प्रयत्नशीलोऽस्ति । तृतीयाङ्के सम्राडशोको बौद्धधर्मानुयायी भूत्वा बौद्धधर्म भारतवर्षे विदेशे च प्रचारयति । तस्य भ्राता महेन्द्रः भगिनी संघमित्रा च धर्मप्रचाराय सिंहलदेशं गच्छत । चतुर्थाङ्के गुरुनानक बालानाम्ना हिन्दुसहचरेण, मदीनानाम्ना महम्मदीयसहचरेण च सार्ध ससारस्य पापं विनाशयितु तत्परोऽस्ति । पञ्चमाङ्के सम्राडाकवरः सर्वजनहिताय हिन्दु–महम्मदीयख्रिष्टादिधर्माणा मूलसिद्धान्ताना समन्वयं कृत्वा "दिन-इ-इलाहि" नामक नवीनं धर्म प्रवर्तयति । षष्ठाङ्के श्रीमहाप्रभुश्चैतन्यो महम्मदीयहरिदास हिन्दुजातीयरूपगोस्वामिनं च नीत्वा अस्पृश्यतानिवारणाय अति प्रयत्नशीलोऽस्ति । सप्तमाङ्के स्वामी शारदानन्द, स्वामी विवेकानन्दश्च विश्वमैत्र्याः पाठं जनान् पाठयतः । अष्टमाङ्के रवीन्द्रनाथो जगतः पर्यटनं कृत्वा विद्यार्थिना हिताय "विश्व–भारती" सस्थामुद्घाटयति । सर्वे प्राणिनः विश्वमैत्री प्रति अग्रेसरा भवन्तु इत्यर्थं स प्रयतते । नवमाङ्कस्य प्रथमे दृश्ये महात्मा गान्धी नौआखालीनगर्या शान्तिस्थापनार्थ हिन्दुमुस्लिमैक्यसपादनार्थं सर्वान् जनानुपदिशति । नवमाङ्कस्य द्वितीये दृश्ये महात्मा गान्धी दिल्लीनगर्या एशियामहाद्वीपस्य विभिन्नदेशानाञ्च प्रतिनिधिभिः सह विश्वैकतासम्बन्धे विमर्श करोति । नवमाङ्कस्थ - तृतीयदृश्ये दिल्लीनगर्या 'विडला-भवने' डाक्टरो राजेन्द्र-प्रसादः, हिन्दुमुहम्मदजैनबौद्धधर्मावलम्बिनश्चोपस्थिताः सन्ति । गान्धी हिन्दु-मुस्लिमैक्यसपादनाय उपोषणं करोति । मौलानाबुलकलामाजादस्याग्रहेण उपोषण-भङ्गं करोति स. । 'बम्बईनगर्या मदनलालनामिक. कश्चिद् दुष्टो नरो गान्धिनः उपरि 'बम्बाख्य' मारणास्त्र क्षिपति' इति नवमाङ्कस्य चतुर्थे दृश्येन ज्ञायते ।

---

1 मेलनतीर्थ–भारतम्,, १. ४"

2 ,, ,, १. १, २."

भगवत्कृपया रक्षितो गान्धी तं मर्षयति । नवमाङ्कस्य पंचमदृश्ये सायं प्रार्थनासमये विडलाभवनं प्रति गच्छतो गान्धिन उपरि कश्चिद् दुःसाहसिको नर आग्नेयास्त्रं क्षिपति। तेनाहतो गान्धी "राम रामेति" उच्चार्य निधनं प्राप्नोति। सम्पूर्णजगत् भृशं शोकाकुलं जायते। दशमाङ्के श्रीनेहरुः विश्व-मेलनप्रयत्नं करोति। एतदर्थं स इण्डोनेशियानगर्यां एकस्मिन् सम्मेलने सभापतिसुकर्णं प्रधानमन्त्रिणं डा० आलिशास्त्रमिद्जोजोमहोदयं, चीनदेशस्य प्रधानमन्त्रिणं श्री चउन एन-लाइ महोदयं च मिलति। 'विश्वस्य कल्याणाय सर्वेषु राष्ट्रेषु पारस्परिकैक्यमत्यावश्यकम्' इति स कथयति। सर्वेऽपि प्रतिनिधयः तस्य मत समर्थयन्ति।

## चरित्र-चित्रणम्

### अथर्वा

अथर्वर्षिः अथर्ववेदस्य रचयिताऽस्ति। स ज्ञानागारो वर्तते। तत्समीपं ज्ञानार्जनाय देशदेशान्तराद् विद्यार्थिन. समागच्छन्ति। स तान् सर्वान् शिष्यान् विश्वमैत्रीपाठ पाठयति। ऋषिः मुक्तकण्ठेन भारतवर्षस्य नैसर्गिक सौन्दर्यं भारतस्नेहं च प्रशंसति।

### अगस्त्यः

ऋषिरगस्त्यः आर्यसभ्यताया विस्ताराय प्रयत्नशीलो वर्तते। अस्मिन् विषये स शिष्यानुपदिशति। शिष्याणामध्यवसायबलेनार्यसभ्यता दिग्दिगन्तरेषु तथा प्रसरति यथा 'अगस्त्यादेशात् समुद्रोऽपि शुष्कतामगमत्' इति लोकमतम-भवत्। तथाहि—

> तेनेय किंवदन्ती प्रचरति चतुराङ्कपकाश्लेषरम्या
> पीतोऽगस्त्येन सिन्धुः शिखरमपि गिरेर्नामितं छद्मनेति॥[3]

---

[3] मेलनतीर्थ–भारतम् —"२·१४"

ऋषिरगस्त्यो विश्वबन्धुत्वभावनोत्फुल्ल - हृदयोऽस्ति । स कथयति—

न मेऽस्ति भिन्नो मनुज पशुर्वा
न स्वेदजो वा न तथाण्डजो वा ।
अह हि सर्वं ननु सर्वमप्यहं
सर्वञ्च विश्वं किल गेहक मम् ॥[4]

**अशोक**

अशोक पाटलिपुत्रस्य शासकोऽस्ति । कलिङ्गविजयानन्तरं स बौद्धधर्मानुयायी संजात । पश्चात् आचार्योपगुप्तस्य शिष्यो भवति । स सत्यपालको धर्मरत–शासकोऽस्ति । सत्यपालनेन, धर्माचरणेन च सोऽतीव शान्ति प्राप्नोति । स कथयति––

"सत्यपालने, धर्माचरणे, धर्मप्रचारणे मैत्रीसप्रसारणे यथा शान्तिर्न तादृशी शान्तिरन्यत्र कुत्रापि लभनीया ।"

अशोकस्य प्रयत्नेन बौद्धधर्मः संसारे क्षिप्रं प्रसरति । अशोकस्य तु कथनमिदम्––

"राज्यं मम न भारतवर्षे सीमाबद्धम् । मम राज्यं निखिलजगद्व्यापि, यत्र वायुर्धावति, अग्निर्ज्योतिविकिरणं करोति, सूर्याचन्द्रमसौ भातश्च । मानवमात्र मम भ्रातृस्थानमाधत्ते, प्राणिमात्रं शाश्वतस्नेह- ममत्व- स्थानम् । हिसाविवर्जितं भवतु निखिलं विश्वम् ।"

**गुरुनानकः**

गुरुनानको भारतीयसंस्कृतेरुपासकोऽस्ति । जीविकोपार्जनात् विरक्त एव स नवाबबहादुरशाहाय त्यागपत्रं ददाति, सर्वत्र पापस्य विनाशाय च देशान्तरं गच्छति । साम्प्रदायिकताया भावनां दूरीकर्तुं स हिन्दुबालां महम्मदीयमदीनां च नीत्वा गच्छति । स कथयति—

---

मेलनतीर्थ–भारतम् २–१७

"सम्प्रदायविशेषं प्रति नास्ति मे पक्षपात, न वा धनि--दीनदरिद्रान् प्रति। मन्मते नास्ति कश्चन भेदो हिन्दु-महम्मदीययो। पश्यामि देशेऽनु कमपि हिन्दु न वा महम्मदीयम्। देशोऽयं सर्वथा हिन्दुमहम्मदीय-विवर्जितः एव।

गुरुनानकस्य विषये नवाबदौलतखानः कथयति-"नूनमेष भागवत-शक्तिधुरं-धरो मुनीन्द्रो योऽन्तर्यामिवत् सर्वं जानाति।

**आकबरः**

सम्राट् आकबरः प्रजाहितचिन्तकः शासकोऽस्ति। आबुलफजलः कथयति—

"सम्राट् न केवलमस्माकं जागतहितस्यैव प्रवर्तकः अपि च, पारमार्थिकहित-स्यापि।"

आकबरः स्वयमपि कथयति—

"नृपोऽहं मम प्रजाजनस्य पिता, तस्य सर्वविधं हितं कामये, नक्तंदिव-मतन्द्रितमहं प्रजानां सेवां कुर्वे, न मम कातर्यम्"।

आकबरोऽहर्निशं प्रजासुखमेव कामयते। प्रजारञ्जनमेव तस्योद्देश्यम्। तस्य प्रजाः सुखिन्यो भवन्तु, इयमेव तस्य कामना। स कथयति—

"नाहं कामये आत्मसुखम्। मम प्रजानां सुखमेव मम केवलं सुखम्। सर्वेषां हासमनन्तोल्लासञ्च प्रार्थये"।

**महाप्रभुः**

महाप्रभुः साम्प्रदायिकताया विरोधकोऽस्ति। हिन्दु-मुस्लिमैक्यसंपादनार्थम्, अस्पृश्यता-निवारणार्थं च स भृशं प्रयतते।

यवनहरिदासो महाप्रभुं कथयति-"जगत्कल्मषहरणाय भवतो लीलावतारः। हिन्दु-महम्मदीयानां मेलनार्थं भारते भवत एव देव! प्रथमः प्रयत्नः।

## स्वामी विवेकानन्दः

स्वामी विवेकानन्दः श्रीरामकृष्णपरमहंसस्य परमो भक्तः। विवेकानन्दस्य हृदयमेतत् दृष्ट्वा नितरां दूयते यत् मानवैक्यादयो ये सिद्धान्ता हिन्दु-धर्मशास्त्रेषु बृहद्रूपेण वर्णिताः सन्ति, हिन्दुधर्मावलम्बिनो जनाः तान् मिद्धान्तान् स्वदैनिकजीवने नानुसरन्ति। स कथयति—

"हिन्दुशास्त्रं मानुषेष्वैक्यं ब्रह्मस्वरूपत्वान्मानुषाणामेकत्वं नितरां प्रोद्घोषयति। किन्तु परितापविषय एव यत् स्वल्पसंख्यका एव हिन्दुधर्माव-लम्बिनो मतमिदं दैनदिनजीवनेऽनुसरन्ति"।

निखिलविश्ववासिषु ऐक्यं स्थापयितुं स्वामी विवेकानन्दो विशेषप्रयत्न-शीलो वर्तते। स भगवतो रामकृष्णस्य मातः सारदामणेश्च प्रेमसिद्धान्तं जगति प्रचारयति।

## रवीन्द्रनाथः

विश्वकवी रवीन्द्रनाथो जगतो भ्रमणं कृत्वा तपोवनादर्शानुसारं शिक्षां प्रदातुं "विश्व–भारती" इति संस्थां स्थापयति। भारतवर्ष शिक्षायाः क्षेत्रे जगद्गुरुर्भवतु इत्युद्दिश्य स "विश्व–भारती" सम्यक् वर्धितवान्। स कथयति—

"भारतवर्षमेवैकदा निर्देक्ष्यति जगत्समक्षं पन्थानं सर्वेषां स्वीकरणाय, सर्वेषां स्वस्वप्रधानप्रतिष्ठोपलब्धये च। प्रयोजनेऽस्मिन् मया परिकल्पिता 'विश्वभारती' भवतु सोपानमन्यतमम्"।

## महात्मा गान्धी

महात्मा गान्धी अहिंसाया: साक्षान्मूर्तिरस्ति। स हिन्दु–मुस्लिमैक्यस्थाप-नार्थयाजीवनमनवरत प्रयतते। गान्धी सम्पूर्णविश्वेऽखण्डशान्तेः कामनां करोति। एतदर्थं स उपोषणं करोति। बम्बईनगर्यां कश्चन दुष्टो नरः तस्योपरि बमाख्यमस्त्रं प्रक्षिपति। दैवयोगाद् रक्षितो दयालुः गान्धी तं मर्षयति। पुनः गान्धिनः शान्तिप्रयत्नेन, हिन्दुमुस्लिमैक्यसम्पादनेन चेर्ष्यालुना केनचित्

नाटकेऽस्मिन् विभिन्नरसानां शोभनः परिपाको दृश्यते । प्रार्थनागीते शान्तरसो दर्शनीयः —

चिरदिनं याति न समानम्
एकदा नृपते राजप्रासादे वित्त यस्य मेरुसमानम् ।
अन्यदा स पुनर्वसनाशनदीनो निरम्बरो याति श्मशानम् ॥७८॥

गान्धिनिधनावसरे सम्पूर्णसंसारो दुःखाभिभूतो जायते । निम्नलिखितोद्धरणं करुणरसस्योदाहरणमस्ति—

दीपो जीवनमन्दिरस्य निरवादस्माकमुद्दीपनः
सूर्यश्चास्तमनाचलं प्रचलितो धिग् भारताकाशतः ।
यः सत्याग्रहमन्त्रदर्शक - ऋषिर्देशस्य तातोपम—
स्त कालोऽकलयत् स्मितोज्ज्वलमुख हा बापुजि-गान्धिनम् ॥८६॥

# संस्कृतिः खलु परिपालनीया

संस्कृतिस्तु मानव-व्यक्तित्व-विकासस्य सा प्रक्रिया भवति, यया कश्चिज्जनः स्वकीय जीवनोद्देश्यमधिगच्छति। जीवनोद्देश्यं नाम भारते चतुर्वर्गप्राप्तिरेव। धर्मार्थकामादीना सेवनेन सह परमं पदं प्रापयति भारतीया सस्कृतिः। तदधिकृत्य कालिदासेनादर्शभूतानां रघुवंशनृपाणां जीवनविधि वर्णयन्नाह—

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्धक्ये मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्॥

अत्रास्मिन् श्लोके व्यक्तित्व-विकासस्य सोपान-परम्परा सम्यङ् निर्दशिता।

आधुनिकयुगे न केवलं भारतेऽपितु समग्रे विश्वेऽस्मिन् प्रायशो जनाश्चतुर्वर्गेषु धर्मस्य मोक्षस्य चावश्यकतां न मन्यन्ते। नूतनपण्डितैर्धर्मस्य प्रवृत्तिस्तु पुराणपुरुषाणामेव निधिरितिमन्यते। सा तु नापेक्षितास्माकमभ्युदयाय सुखलाभाय वेति तेषां मतम्। अतो भारतीयसंस्कृतेर्मूलभूतं किञ्चित् सर्वोच्चतत्त्वमेव तैर्न गृह्यते।

कथमीदृशी शोच्या स्थितिः संजाता, यद्भारतेऽपि मोक्षविमर्शकारिणां भारतीयसंस्कृति-निषेविणां चादर्शा उपेक्ष्यन्ते। कारणं नास्ति दूरम्। सरलसरलतया सुखप्राप्तिर्येन पथानुभूयतेऽधुना, स एव स्वीकरणीयो भवति सर्वेषां गुरुजनानाम्, शिक्षकाणामाचार्याणा तेषा च पार्श्ववर्तिना विद्यार्थिनां युवकानाञ्च। तथाहि ब्रह्मचर्येण शरीरे किञ्चिदनन्य सौष्ठवं सजायते शरीरस्य। तद्ब्रह्मचर्य तु तपोमयेन्द्रियनिग्रहेण सम्भवति। तपो वेन्द्रियनिग्रहो वा दु.साध्यो भवति। तर्हि 'ब्रह्मचर्य विनापि शरीरसौष्ठवमात्मनीनं भवतु' इति समस्या-समाधानार्थ शरीरस्य कृत्रिमसौन्दर्यप्रसाधनानि बहूनि संगृहीतानि। तथाहि आकल्पानुलेपन-चूर्ण-पटवासाभरण-मालादीनां सम्प्रयोगेण शरीरस्य शोभा-संवर्धनं जायते। एतेषा प्रसाधनद्रव्याणां केवलं धनद्वारानायासेनेव प्राप्तिर्भवति। अतस्तानि सुलभान्येव मन ईप्सितं शरीरसौन्दर्य प्रसाधयन्ति। अस्या स्थितौ न कश्चिद्दुर्बलेन्द्रिय आधुनिकसुकुमारयुवको ब्रह्मचर्यस्यावश्यकतां मन्यते। यथा ब्रह्मचर्येण, तथैव

भारतीय-संस्कृतिनिषेवणेन यानि कानिचिदनुत्तमोपशमः, प्रसादः सौमनस्य च प्राप्यन्ते, तानि दुःसाध्येन तपसा प्राप्याणि मत्वा स्वल्पा एव जना तदर्थं प्रयतन्ते। अतो हिमहतवृक्षका इव पाश्चात्यदेशोपचितबाह्यचाकचक्यसम्भृतदेहा अपि भारतीयसस्कृतेर्दूरीभूता युवका हतश्रियो लक्ष्यन्ते ।

अस्माकं देशे सा मोक्षपरायणासंस्कृति पुरा सम्यक् परिपालितासीत् । ये केचित् सर्वोच्चसाहित्यकारा बभूवुः, ये च ग्रन्थास्तैर्विनिर्मिताः, ते सर्वे मोक्षमेवजीवनस्य परमोद्देश्यमामनन्ति । ये केचिद्भारतीया महापुरुषा अद्य स्मरणीया मन्यन्ते, ते सर्वे मोक्षपथानुयायिनो मोक्षपथाख्यातारो बभूवु । आधुनिकयुगेऽपि महात्मगान्धि-विवेकानन्द-दयानन्दादीना नेतृत्वं तस्या दिशि वर्तते, यस्या भारतीया संस्कृति पुरा प्रावर्तत ।

'भारतीयसस्कृतौ कामार्थौ समुपेक्षितावास्ताम्' इति न सत्यम् । कामार्थ - सेवन तु गृहस्थानामावश्यकवृत्तिरिति नियतमासीत् । अत्र केवलमिदमेव वक्तव्य वर्तते यत् कामार्थयोर्बहुत्वाद् धर्ममोक्षयोरुपेक्षा न कृता । धर्मस्तु मोक्षपथ-प्रदर्शक आसीत् । स एव धर्मः कामार्थयोस्तथा नियमनमकरोत् , यथा मोक्षपथे काचिद्बाधा ताभ्यां न समुपस्थापितासीत् ।

'के ते सन्तु जनाः संस्कृति-परिपालकाः' इति समाधानार्हं प्रश्नः । 'सर्वे जनाः संस्कृति-परिपालका भवन्तु' इति निर्देष्टव्यम् । संस्कृतिपालनार्थमेव वस्तुतः कस्यापि देशस्य राष्ट्रस्य वास्तित्वमुपयुज्यते, यत कस्यापि देशस्य सर्वोच्चो यो निधिः, स सांस्कृतिको निधिः । नान्यत् किञ्चिद् द्रव्यं वा धनं वा तावन्मात्र देशस्योत्कर्षमावहति, यावन्मात्र सा संस्कृतिः

अस्माभिः सर्वैः सदैव देशस्य रक्षा कर्तव्या, यतो देश विना तु सस्कृतिरेव न भविष्यति । अत्रापि निःसशयमेव मन्तव्य यत् सा देशरक्षा तु संस्कृतेः सम्मानार्थं भवतीति संस्कृतिरेव परं रक्षणीया । समाजस्य शासनतन्त्रस्यात्र कर्तव्यं दिङ्मात्रेण निर्दिशितम् ।

सस्कृतेः सम्यक् परिपालनं तु साधारणतः सर्वैः सुविचारकैर्विशेषतः साहित्यकारैः, आचार्यैः साधुभिश्च कर्तव्यम् । अद्य खलु अङ्गुलिगणनीया एव, एतेषु जनेषु तादृशः सन्तः सन्ति, येषा वृत्तिर्वस्तुतो मोक्षपरायणा वर्तते ।

साधवोऽपि स्वल्पा एव ते सन्ति, ये मनसा कर्मणा च मोक्षपरा सन्ति। तेषां व्यक्तित्वे जीवने वास्तवत्वस्य विकसनं स्वल्पमेव दृश्यते । इमे साधवः स्वकीयव्यक्तित्वस्याचार्यपरम्परानुसारं विकासं कृत्वा स्वकीयादर्शैरेव न केवलं वाङ्मात्रेण समाजमुद्बोधयन्तु यत् 'लोकैश्वर्यगृहीतास्तावन्मात्रं सफलाः सुखिनो वा न सन्ति, यावन्मात्रं परिग्रह-विरहिता जना लोकैषणां परित्यज्यात्मारामा एव भवन्ति ।'

भारतीयसंस्कृतेः सम्यग्ज्ञानं तावत् सर्वाधिकमपेक्षितं वर्तते । संस्कृतेर्वास्तविकस्वरूपमविजानाना केचन लघुवृत्तयो जनास्तस्या अनुपयोगित्वं प्रमाणयन्ति । भारतीयसंस्कृतिपोषका अपि तस्याः संस्कृतेर्विशुद्धं सुप्रतिष्ठितं रूपमपरिजानाना स्वव्यक्तित्वे तच्चमत्कारपूर्णं प्रभावशालित्वमुपनेतुं न समर्था जायन्ते, येन तेषामादर्शस्य ग्रहणं कृत्वा भारतीयसंस्कृतेः श्रद्धापरायणा अनुयायिनः पोषकाश्च जायेरन् ।

## जननी जन्मभूमिश्च स्वर्गादपि गरीयसी

स्वर्ग एवाभीष्टतम इति साधारणतः संसारिणो मन्यन्ते। स्वर्गे खलु सर्वं सुखमेव । तत्र दुःखं नाम न वर्तते। स्वर्गे सर्वाणि जीवनोपयोगीनि भोगविलासोपभोग्यानि च वस्तूनि धनं श्रमं वा विना यथेष्टं प्राप्यन्ते । तस्मादपि स्वर्गादुच्चतरा जननी जन्मभूमिश्चेति आदिकविना वाल्मीकिना प्रमाणीकृतम् । किमेतत् कविकल्पनामात्रम्, उताहो सत्यमिदं रामवचनम् । ननु सत्यमेव । जननीक्रोडे यत्सुखमनुभूयते शैशवे, यः परमाभ्युदयकारी परामर्शो गृह्यते कैशोरके, यावज्जीवं च निःस्वार्थमेव तस्या जनन्याः प्राणपणेन संरक्षणं च लभ्यते—किमेतत् सर्वं स्वर्गे विद्यते । नहि, नहि। अतः प्रोक्तं तस्या मातुः स्वर्गादपि गरीयस्त्वम् । न तत्र स्वर्गे स्नेह इति स्निग्धः पदार्थः श्रूयते दृश्यते वा, नास्ति वा तत्र त्यागस्य कल्पना । किं पुनः तत्र मातुस्तुलना पर्यवस्येत् ।

नास्ति मातृसमो गुरुरिति प्रतिपादयन् व्यासः प्रोक्तवान्

> दशाचार्याननुपाध्याय उपाध्यायान् पिता दश ।
> पितॄन् दश तु मातैका सर्वां वा पृथिवीमपि ॥
> गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः ।

एतदेव समर्थयन् भास· प्राह—

माता परं दैवतम्

इयमेव माता कार्य-सन्दर्भादुच्चोच्चतरा प्रतिष्ठां लभते। तथाहि

कुक्षौ सन्धारणाद् धात्री जननाज्जननी तथा।
अङ्गानां वर्धनादम्बा वीरसूत्वेन वीरसूः॥
शिशोः शुश्रूषणाच्छक्तिर्माता स्यान्माननाच्च सा।

किमिदं मातृत्वं नामेति कल्हणेन राजतरगिण्या कथामुखेन सम्यग् व्याख्यातम्। कश्मीर-प्रदेशे 'सूय्या' इति ख्याता चाण्डाली राजमार्गस्य मार्जनं कुर्वाणा नवजातं शिशुमेकं मृण्पात्रेऽपश्यत्। तस्या स्तनाभ्या स्तन्य-धारा प्रावहत्। सा तं शिशुं कस्यचित् शूद्रस्य गृहे रक्षयित्वाऽपालयत्। अथ शिशुः संवर्धित एव सूय्य इति महान् वैज्ञानिकोऽभवत्। तस्य विज्ञान - पाटवेन कश्मीरस्य महती समृद्धि· सजाता। अनेन निदर्शनेन मातृत्वस्य बहुगुणाः त्यागभावना च स्पष्टीभवन्ति।

जन्मभूमिरिति कस्यापि पुरुषस्य जन्मस्थानं निगद्यते। सा तु प्रायश. स ग्रामस्तन्नगरं वा मन्यते, यत्र कश्चित् पुरुषो जायते। मातृत्व नाम तस्य ग्रामस्य नगरस्य वान्नेन जलेन च शरीर–सम्पोषेण तत्रत्यपक्षिवृक्षादिभिश्च सह क्रीडनेन च प्रसाधितम्। तद्यथा कालिदासोऽयोध्यायाः सरय्वा धातृत्वं रामोद्गारेण प्रमाणीकरोति—

यां सैकतोसङ्गसुखोचितानां प्राज्यैः पयोभि· परिवर्धितानाम्।
सामान्य - धात्रीमिव मानस मे सभावयत्युत्तर-कोसलानाम्॥
सेयं मदीया जननीव तेन मान्येन राज्ञा सरयू वियुक्ता।
दूरे वसन्तं शिशिरानिलैर्मां तरङ्ग-हस्तैरुपगूहतीव॥

तद्यथा जन्मस्थानीयस्य ग्रामस्य नगरस्य वा सविशेषं माहत्म्यं विद्यते कस्यचित् पुरुषस्य व्यक्तित्वस्य निर्माणे, तथैव यस्मिन् देशे पुरुषो जायते, तस्य देशस्य साधारण्येन प्रभावो वर्तते तस्य पुरुषस्य व्यक्तित्वस्य निर्माणे इत्यत्र नास्ति मनागपि संशयः। तथा हि बाल्यत एव कथामुखेन तस्य देशस्य महर्षीणां महावीराणां महापण्डितानां महाराजानां चोदात्तकार्यततिभिश्चारित्र्य-गुणैश्च शिशोर्मनो वासितं भवति, तस्य देशस्य सूर्यचन्द्र - नक्षत्रादिभिः स चमत्कृत एव तेषां सान्निध्यं समाप्नोति। बाल्यादनन्तरं स तस्य देशस्याचार्य-

पादाना शरण गृहीत्वा स्वजीवनं कृतार्थ करोति, तीर्थ–समुद्र–नदी–वन–पर्वतादीनामञ्चले विहरति च । एतेषा सर्वेषा कापि विशिष्टा छाया कस्यापि पुरुषस्य यशःशरीरे प्रतिफलत्येव । अतो जन्मभूमिस्तु पर्यायेण स देशोऽभिधीयते, यस्मिन् पुरुषो जायते वर्धते च । अस्माकमिह जन्मभूमिर्भारतदेशो वर्तते । भारतमधिकृत्य विष्णुपुराणे प्रोक्तम्—

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्ष तद् भारत नाम भारती यत्र सन्तति ॥

गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषा. सुरत्वात् ॥
जानीम नैतत् क्व वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम धन्या. खलु ते मनुष्या ये भारते नेन्द्रियविप्रहीना ॥

इति श्लोकाभ्यां भारतभूमे. स्वर्गादपि गरीयस्त्वमभिप्रेतम् ।

वैदिकसाहित्ये पौनपुन्येन भूमे· प्रशसा विद्यते । एतेषु प्रसंगेषु प्रायशः भूमिस्तु जन्मभूमिरेव । तथा हि

भूमे मातर्निधेहि मा ।
माता भूमिः पुत्रोऽहं पृथिव्याः ।
माता पृथिवी महीयम् ।
'भूर्भुवः स्वः तत्सवितुर्वरेण्यम्' ।

एतासु सूक्तिषु भूमिर्माता एवाभिमता । गायत्रीमन्त्रे यत् भूः भुव· स्वरिति-गीयते, तत्रापि भू पदेन जन्मभूमिरेव व्यज्यते । मन्त्रेऽस्मिन् भूः स्वर्लोकात् प्राथम्यं दधाति ।

मातरं प्रति जन्मभूमि प्रति चास्माकं विशेषोत्तरदायित्वं वर्तते । सा माता तु परमं सेव्या' इति शास्त्रेषु काव्यादिषु च प्रपञ्चितम् । अधुना मातुः सेवकाः क्वचिदेव वर्तन्ते इति दुरन्ता स्थितिः कलिकालस्य । महामोहान्धकारे विमूढा इमे साधारणजनाः पशुवत्मातरं विस्मरन्तीति धिक् तान् दुर्विदग्धान् ।

मातृभूमिस्तूदात्तपराक्रमेण, वीर्येण, शौर्येण, विज्ञानबलेन मनोज्ञव्यक्तित्वेन चालङ्करणीया नित्यमेवेति व्रत भवतु सर्वेषाम् । ते जना मानव-

नामार्हा अपि न सन्ति येषां कार्येण, चरित्रेण, प्रवृत्त्या वा देशस्य हानिर्भवति यशो वा वैभवं वा क्षीयते च । अस्माकं दुर्भाग्येण तादृशानाम-सद्वृत्तानां जनानां सख्याऽधुना नाल्पीयसी । तथापि भारतमिदं पूर्वाचार्याणां महर्षीणां महावीराणां सुधियां च तपोभिः त्यागैः शौर्यगाथाभिश्च परं परिपूतं वर्तते । आधुनिकयुगेऽपि प्रातःस्मरणीयानां विवेकानन्द-दयानन्द-गान्धीमहो-दयादीनां चरितगाथा तादृशी उदात्ता वर्तते । न तेषां महापुरुषाणां सन्ति सत्यानुकारिणो बहवः इति मानसं दूयते । तथापि 'एकश्चन्द्रस्तमो हन्ति' इति चेतसि समुल्लासं जनयति ।

## ३. देशरक्षा परो धर्मः

धर्मस्य बहवः परिभाषा वर्तन्ते । तथाहि -

यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ।

'धारणाद् धर्मः' ।

धर्मो धारयते प्रजाः ।

एतासु परिभाषासु प्रजानामभ्युदयः, धारणं चेति धर्मस्य प्रथमं लक्षणं प्रोक्तम् । यदि केवलमात्मनोऽप्यभ्युदयो धारणं च धर्मेण साधनीयं मन्येत, तर्हि तत्रापि 'देशे नष्टे कुत आत्मनः स्थितिः' इति विचार्य देशरक्षा परं कर्तव्यं मन्यामहे ।

अधुना भारते स्वतन्त्रे जाते देशरक्षाया महान् प्रश्न एवास्माकं समक्षं वर्तते । प्रथमं तावत् चीनदेशवासिभ्यो भयं वर्तते । तेऽस्माकं सीमाभूत हिमालय-प्रदेशं ग्रहीतुमिच्छन्ति । अपरं च पाकिस्तानशासकाः सीमान्तप्रदेशानां क्षेत्राणि ग्रहीतुं चेष्टन्ते युद्धं कुर्वन्ति च । कश्मीरदेशस्यार्धभागं प्रागेव गृहीत्वापि न सन्तुष्टास्ते शेषं श्रीनगरस्योपत्यकाभागं ग्रहीतुं प्राणपणेन यतन्ते । नागादेशवासिनस्तु स्वकीयं पृथक् राष्ट्रं निर्मातुं चेष्टन्ते । एतेभ्यो वैदेशिकेभ्यः स्वदेशिभ्यश्च शत्रुभ्यो देशस्य रक्षास्माभिः कर्तव्या ।

स्वदेशेऽपि ऐक्यविघटनहेतवोऽस्माकं दुर्भाग्य-विलसितेन समुत्पन्नाः । तथाहि राष्ट्रभाषाप्रश्नं समाश्रित्य दाक्षिणात्यैरान्दोलनं क्रियते । राष्ट्रस्यैक्यजातान् बहून् लाभानपरिगणयन्निव विवादं रचयन्तस्ते स्वदेशं विघटनमुखे पातयन्ति ॥

भारतस्य बहुषु प्रान्तेषु विभाजनं निःसंशयमेव हानिकरम् । न केवलं भाषामाश्रित्यैव बहुप्रान्तानां विभाजनमिष्यते, अपि तु, धर्मस्यापेक्षयापि प्रान्तानां विभाजनस्य विप्रतिपत्तिः समुपस्थापिता । पंचनदप्रदेशस्य विभाजनं सिख सम्प्रदायस्य कतिपयनेतृणामाग्रहेणाक्रियत । मम मते तु देशस्याभ्युदयार्थं केवलं शासनदृष्ट्यापेक्षितं प्रान्तविभाजनमेव स्वीकरणीयम् । तद्यथा आस्ट्रेलियामहाद्वीपे सरलरेखाभिरेव प्रान्तविभाजनं दृश्यते, तथैव भारतेऽपि भवितव्यम् । अन्यच्च प्राकृतिकसीमानामाधारेणापि यथावश्यकं विभाजनं कर्तुं शक्यते । किन्तु भाषाया धर्माणा वाधारेण देशस्य विभाजनं तु भारतीयैकत्वस्य विनाशकः एव प्रतीयते । सर्वेषु प्रान्तेषु सर्वासां भाषाणां वक्तारः, सर्वेषां धर्माणामनुयायिनश्च वसन्ति । ते सर्वे भाषाधर्मव्यपेक्षिप्रान्तेषु कथं सुखं वत्स्यन्ति ।

अथ किं, सर्वेषु प्रान्तेष्वपि महानगराणि अवश्यमेव केन्द्रीयशासनाधिष्ठितानि भवेयुः । अनेन प्रकारेण देशस्यैक्यं प्रस्फुटं भविष्यति । अथ च भारतस्य केन्द्रशासनं सर्वेषु प्रान्तेषु अधिकतमं प्रबलं व्यापकं च भवेत् । केन्द्रव्यवहारेण राष्ट्रस्यैक्यं स्पष्टं प्रतिफलति । प्रदेशेषु यत्र कुत्रचित् दुस्तरं वैषम्यमुपजायते, तत् केन्द्रशासनेन झटिति दूरीकरणीयम् । अस्यां स्थितौ प्रान्तेषु केन्द्रं प्रति सद्भावः समुपजायेत । इदमेवोद्दिश्य प्रदेशानां समृद्ध्यर्थं केन्द्रस्य शाश्वतयोजना भवेयुः । 'सर्वे प्रदेशा एव सर्वानपरान् प्रदेशानुपजीवन्ति' इति भावना सर्वप्रदेशवासिनां प्रजानां मनःसु द्रढीयसी कर्तव्या । देशस्यैक्यमेवास्माकं सर्वार्थसाधनमिति 'अनेन विना विनंक्ष्यामोऽथवा विषमे समुपस्थिता भविष्याम इति च विचाराः सर्वेषां मानसे प्रतिफलन्तु । प्रतिप्रदेशं केन्द्रीयसंस्थाभिः भवितव्यम् । एतादृशीषु संस्थासु सर्वेषां प्रदेशानां कर्मचारिणो वा विद्यार्थिनो वा शिक्षका वा भवेयुः ।

न कोऽपि देशः भौगोलिकसीमाभिः प्रतिष्ठाप्यते । देशस्य प्रतिष्ठा अस्तित्वं च तस्य संस्कृत्या भवति । देशस्यास्तित्वमेव वस्तुतः संस्कृतिसर्जनार्थं, संस्कृति - संवर्धनार्थं संस्कृति - रक्षणार्थं च भवति । सा राष्ट्रिया संस्कृतिः सर्वेषां देशवासिनामेकत्वं सुसंघटनं वा प्रमाधत्तेति । तथाहि

समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा व सुसहासति ॥

इति यत्किञ्चित् प्रोक्तं तत्सर्वं संस्कृतिरेव जनमनःसु लिखति । सा राष्ट्रिया

संस्कृतिः राष्ट्रस्य सर्वेषां नागरिकाणां सत्प्रयत्नैरेव संवर्धनीया संरक्षणीया च भवति । तस्याः संरक्षणेन देशस्यैकत्वे समुपजाते देशवासिनां देशरक्षार्थं भावनोत्कटा जायते। पुरा राष्ट्रस्याभ्युदयकारिणो महान्तो विचारका बहुभिर्योजनाभिः संस्कृतेस्तानि तानि स्वरूपाणि विकसितवन्तो याभिः सा संस्कृतिः सर्वं च भारतं सर्वेषां भारतवासिनां प्रेमास्पदं समजायत। तया संस्कृत्या भारतस्य सर्वे भूभागाः सर्वेषां निवासिनां दर्शनीयाः रक्षणीयाः उत्साहवर्धनाश्चाभिमताः ।

दुर्भाग्यवशात् आधुनिकयुगे देशस्य राष्ट्रिया संस्कृतिः का' इत्यस्मिन् विषये न किञ्चिज्ज्ञानं प्रायशो देशवासिनां वर्तते । केवलं येन केनोपायेन धनमर्जित्वा ससुखं जीवनं यापयित्वा अन्ते मरणमेव शरणं भावयन्ति जनाः । न केवलमाधिभौतिकमैन्द्रियकं वा सुखं सारभूतम्, अपि तु यथोचितव्यक्तित्वविकासेनाध्यात्मिक-शान्तेः, समाजसेवासुखस्य, काव्यकलादीनां रसज्ञापनस्य च प्रवृत्तिर्जीवनमस्माकं सत्यमेवोल्लसितं करोति' इति सत्यमेव। प्रत्येकदेशस्येमाः प्रवृत्तयो भिन्ना भवन्ति । भारतस्य च सुदूरप्राचीनकालत एका सुसमाहिता संस्कृतिरस्माकं निधिरेवे येषां नोपभोग्या वर्तते, ते जनाः अर्धं जीवन्तीति मन्यामहे ।

अस्माकमनवधानात् सा भारतीया संस्कृतिर्विस्मृतिपथं समायाता उपेक्षितेव वर्तते। अस्यां संस्कृतौ देशस्य संरक्षणार्थं ये गुणाः सन्ति ते सर्वे न स्वायत्तीकृता अस्माभिः । देशस्य रक्षार्थं य उत्साहोऽपेक्ष्यते, स तु देशस्य संस्कृत्या उद्दीप्यते। अतः सा संस्कृतिः कस्यचिद्राष्ट्रस्य प्राणभूता आत्मशक्तिः संवर्धनीया रक्षणीया चेति व्रतं भवेत् सर्वेषां भारतवासिनाम् ।

कथं तावत् देशरक्षा कर्तव्या ? अधिकाधिककर्मसम्पादनेन, शत्रुभिः सह युद्धकरणेन, राष्ट्रस्य विघटन - हेतूनामुद्धरणेन, सम्यग्बलवर्धनेन च देशरक्षा करणीया। स्वार्थपरायणत्वं तु देशस्य दौर्बल्यं जनयति । सर्वे राष्ट्रवासिनः एकीभूय देशस्य समुत्थानाय यदि नाम सचेष्टा भवेयुस्तर्हि अचिरमेव न केवलं वयं भारतीया अपि तु सर्वे विश्ववासिनः कथयिष्यन्ति— अपूर्वबलशालिन इमे भारतवासिनोऽप्रधर्षणीया इति ।

राष्ट्ररक्षायोग्यपराक्रमाणां सिद्धिः कथं भविष्यतीति मदनमोहन-मालवीयेनाधोलिखिते श्लोके प्रतिपादितम्—

सत्येन ब्रह्मचर्येण व्यायामेनाथ विद्यया ।
देशभक्त्यात्मत्यागेन सम्मानार्हः सदा भव ॥

देशरक्षा विद्यार्थिना परं कर्तव्यं भवति । नित्यनूतनप्रयत्नैर्वयं देशस्य शक्तिं वर्धयिष्यामः' इति प्रतिज्ञा परिपालनीया । 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' भवति ।

## ४. संस्कृतज्ञ-जीवन-दिग्दर्शनम्

पुरा विद्वत्तासीदुपशमवतां क्लेशहतये ।
गता कालेनामौ विषय-सुखसिद्धयै विषयिणाम् ॥

गीतायामर्जुनो भगवन्तं कृष्णं पृच्छति—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥

श्लोकेऽस्मिन् प्रपञ्चितं यत् स्थितप्रज्ञस्य भाषा, आसनम्, गमनं वा सर्वसाधारणं न भवति, किञ्चिद्विशिष्टमेव स्यादिति । तथैव संस्कृतज्ञानां जीवनं किञ्चिद्वैशिष्ट्यपरं भवेदिति सम्भावनीयम् । 'आधुनिकसंस्कृतज्ञा अपि तादृशं संस्कृतजीवनमात्मनीनं कुर्वन्तु ।'

जीवनं कीदृशं भवेदिति जीवनस्योद्देश्यं परीक्ष्यैव समाधेयम् । संस्कृतसाहित्यकारैः सुदूरकालत एव जीवनस्यैहामुष्मिकत्वं प्रतिपादितम् । इह जीवनं तु साधकभूतं परस्मिञ्जीवने उत्कर्षं विधातुं समर्थं भवति । परस्मिञ्जीवने मोक्षो वा स्वर्गो वा जीवनस्योद्देश्यं भवति । एतयोर्द्वयोर्मोक्षस्य श्रेयस्त्वं निर्विवादमेव । स्वर्ग-सुखभोगानन्तरं पुनरपीह लोके आगमनं लोकयात्रानुसरणं च नैं तावन्महनीयं यतो लोकयात्रेयं यथाशीघ्रं समापनीया । तर्हि प्रश्नः समुदेति—किं करणीयं वर्तमान-जीवने, येन मोक्षस्य मार्गोऽनवरुद्धः स्यादिति ।

न केवलमेकस्य जीवनस्य कर्मभिर्मोक्षावाप्तिर्भवेत् । जीवनस्य परम्परायामुत्तरोत्तरोपचितसंस्कारप्रभावेण कस्यचित्पुरुषस्य मोक्षो जायेत । किंविधा सा संस्कारततिरिति प्रसङ्गेऽपरिग्रहस्य माहात्म्यं सर्वैः स्वीकृतम् । परिग्रह एव सम्मृतिमोक्षयोरन्तरमिति निःसंशयम् । परिग्रहस्तु भवति दुस्त्याज्यः साधारणजनैः । केवलमाधिभौतिकजगतो मायात्मक-स्वरूपं जानन्त एव जनाः परिग्रहेभ्यः किञ्चिद्वितृष्णा जायन्ते । अयं परिग्रहस्तु वस्तुतो मोक्षमार्गानुसन्धित्सूनां गिरिमिव महत्तमो भार इव न केवलं दुर्वहोऽपि तु गतिरोधको भवति । अहो, महद् दुर्भाग्यमेव संस्कृतज्ञानां यत्तेष्वपि बहव आजीवनं पृथग्जनवत् संग्रहणे व्यापृता भवन्ति । किं किं न कष्टं स्वीकुर्वन्ति ते शक्तिहीनेऽपि वार्धक्ये, तदेव प्राप्तुं यत्परित्यज्य संसाररंगमञ्चाच्छीघ्रमेव विनिर्गमनं जायेत ।

अयं परिग्रहस्तु दुर्वार एव महता कष्टेनेह जीवने प्राप्यते, तथापि मरणानन्तरं न सह गच्छति । तस्मिन्नेव परिग्रहे धनकोशे वा यदा मृत्युकाले सतृष्णं मनो लगति, तदा पुनरपि जननी-जठरे पचनं भवति । अत्र प्राक्तनानामादर्शभूतानां महात्मनां चरितमनुसन्धेयम् । यावज्जीवमनायासेनैव यत्किञ्चित्प्राप्यते, तेनैव जीवनयापनं कुर्वन्तस्ते कदापि आधिभौतिकैश्वर्यं न समीहमानाः समाधिपरा आसन् । ऐश्वर्यपरायणा जनास्तु न तथा भवितुं समर्थाः । विदुषामपि तेषां परिग्रह एव समाधिभूमिर्जायेत मृत्युकाले ।

परिग्रहो नाम कैश्चिद्विद्वद्भिः समाजे सम्मान-प्राप्तये स्वीक्रियते । ते विचारयन्ति— न धनहीनः कश्चित् सम्मानास्पदं भवतीति सत्यमेव । धनेन लौकिकसम्मानं तु प्राप्यते किन्तु तस्मादेव कारणात् परमपदस्यानवाप्तिर्जायते । अतः ब्रवीमि—

'संस्कृतज्ञानां जीवनेऽनार्षोऽयं परिग्रहः इति ।

यदि नामैक एव संग्रहः पण्डितानां करणीयः, स तु लोकसङ्ग्रह एव । ज्ञानाग्निदग्धकर्माणस्ते पण्डिता भवन्ति । न तु तत्त्वतः किञ्चिदपि करणीयं विद्यते तेषां यतः कर्मणो निस्सारत्वं प्रतिपादितं शास्त्रेषु । तथा हि आवश्यकत्वात् निष्कामबुद्ध्या नित्यमेव लोककल्याणं पण्डितैर्विधेयम् । इदं लोककल्याणं कर्म तु भगवतः कर्म । न तेन कर्मणा कश्चिद्विदग्धो जनो बद्धो भवति जन्ममरणादिषु पाशेषु ।

तथापि किं दृश्यतेऽधुना, केचन संस्कृतज्ञा अपि तथैव धनसंग्रहादिषु

लिप्ता दृश्यन्ते यथापरे साधारणजना । इय स्थिति. सस्कृतस्य विनाशाय वर्तते। संस्कृतस्य निष्प्रभावत्व पण्डितानामुपरि दृष्ट्वा साधारणलोकस्येयं मतिर्जायते, यन्नास्ति खल्वस्या विद्यायाः किञ्चिद्विशिष्ट फलम्। को लाभ. संस्कृताध्ययनस्य यदि नाम संस्कृतज्ञानेनापि जीवनस्य कापि विशिष्टा आदर्श-भूता लोकोत्तरा वा दिशा न गम्यते । यदि कश्चित् संस्कृतज्ञोऽसस्कृत पन्थानमनुसरति, किंचिदनार्य वाचरति, तर्हि तस्य जीवन - विधिना सस्कृतस्य प्रतिष्ठा क्षीयेत। 'स न केवलमात्मान हन्ति, अपि तु सस्कृतस्यैवापकरोति स' इत्यवधार्यस्माभिः संस्कृतज्ञैः कश्चिदनुत्तमो वा लोकोत्तरो वा पन्था आत्म-नीनः कर्तव्यः। स तु शास्त्रेषु प्रतिपादित. सनातन एवाश्रम-धर्मो येन कश्चिज्जनो गृहस्थाश्रमे सरल-सरल जीवनं यापयित्वा वानप्रस्थे तपश्चरित्वा योगेनान्ते शरीर त्यजत्यपुनर्भवाय।

संस्कृतज्ञानामाचारव्यवहाराश्चात्मगुणैर्भाविता भवेयु । ते इमे आत्मगुणाः सन्ति—दया, क्षमा, अनसूया, शौचम्, अनायास, मङ्गलम्, अकार्पण्यम्, अस्पृहा च। एतेषु गुणेषु अनसूया नाम गुण पण्डितानां मध्ये न साकल्येन राजते इति महान् विसवाद । ज्ञानप्रकाशेन सर्वान् प्रति समभावस्य प्रतिष्ठा भवेदिति वाञ्छनीयमेव। अथकिम्—

त्वयि मयि चान्यत्रैको विष्णु ।
व्यर्थं कुप्यसि मय्यसहिष्णु ॥

तथापि सर्वज्ञाः सन्तोऽपि पण्डिता इमे परदोषगणने निपुणा इव किंचिद-समीचीनमेवाचरन्ति । दोषदर्शनं तु कस्यापि पुरुषस्य पतनमेवेति परमं सत्यम्। तद्यथा भासेन प्रोक्तम्—

न न्याय्यं परदोषमभिधातुम् ।

इदं दोषदर्शन तु प्रायशोऽसूयाजन्य भवतीति शोकावहमेव। परस्परं विगर्ह-यन्तः पण्डिताः किं न जानन्ति यत्ते सर्वेऽपरेषां सामाजिकानां मतेनानादर-णीया एवास्मात् कारणात् भवन्ति । अन्यच्च, यदि परस्परमिमे पण्डिताः प्रशंसापरा भवेयुस्तर्हि अचिरमेव तेषां सर्वेषा प्रतिष्ठा समाजे वर्धिष्यते । असूया-ग्रस्ता इमे पण्डिताः संस्कृतस्य शत्रव इव भवन्ति, यतस्तान् परीक्ष्यैव

कस्यचित् सामाजिकस्य मतिर्भवति यत् सस्कृते एव कश्चित्तादृशो विकारो वर्तते, येन संस्कृतज्ञानामीदृशी दोषदर्शननिपुणा मनोवृत्तिः जायते ।

साधारणत समाजे जना आदरास्पद भवितु काक्षन्ति । किन्तु कस्यादरपात्रमिति विवेचनीय प्रश्नः । अत्र मम सम्मतिरियमेव वर्तते यत् पण्डितः केवल पण्डितानां सम्मानास्पदं भवितु चेष्टेत । न तु येन केनोपायेन धनीभूतानां जनेश्वराणां सुसंस्कृतिव्यतिरिक्तानां सम्मानं प्राप्तु स यतेत ।

इमे सस्कृतज्ञाः सन्तो भवन्तु इति भर्तृहरिणा प्ररोचितम्—

मनसि वचसि काये पुण्यपीयूषपूर्णा
स्त्रिभुवनमुपकारश्रेणिभि प्रीणयन्त. ।
परगुणपरमाणून् पर्वतीकृत्य नित्य
निजहृदि विकसन्त सन्ति सन्तः कियन्तः ।।

## ५. अन्तरं महदन्तरम्

द्वा सुपर्णा सयुजा सखाया समान वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति ।।

इति ऋग्वेदमन्त्रानुसारं यः सुपर्णोऽस्ति, तस्य महदन्तरं विद्यते तस्मात् सुपर्णात् यो नाश्नाति, केवलमभिचाकशीति । यद्यपि शरीरतस्तयोरन्तर नास्ति, एतौ द्वौ सखायौ सन्तौ समान वृक्षमपि समाश्रयतस्तथापि प्रवृत्तिभेदनिमित्तात् तयोरन्तरं प्रतिपादितम् । अथ किम, एकोऽस्ति, अन्यो नास्ति, प्रत्युताशने किञ्चिद्दोषं पश्यति ।

प्रकरणेऽस्मिन्नदन् सुपर्णः सांसारिक - भोगविलासादिव्यासक्तस्य मानवस्य प्रतीकम् । ये केचिद् बाह्यचक्षुष्मन्तः शरीरमेव पश्यन्ति, ते द्वयोः सुपर्णयोरिद महदन्तरं न पश्यन्ति ! किन्तु जाबालिवत् येषां योगदृष्टिः परिनिष्ठता, तेषां ध्यानमार्ग-प्रहितेन चक्षुषा तदन्तरं शिलाशकलसम प्रत्यक्षं भवेत् । उपर्युक्तयोर्द्वयोर्मनसो व्याख्यानमुपनिषदि कृतम्—

बन्धाय विषयासङ्गि मोक्षे निर्विषयं स्मृतम् ।

अनश्नन् सुपर्णो विषये प्रसक्तो विद्यते । यतो हि नाम भवबन्धनस्य कष्ट स न स्मरति, अपरश्च निर्विषयो भवति मोक्षकारणात् ।

जगत्यस्मिन् भोगविलासादीना सम्यग् रसास्वादनाय प्रथमतरमिदमेवावश्यकं भवति यत् कश्चिज्जन प्रत्यक्ष जानन्नपि अज्ञ इव समाचरेत् । अन्यथा

जरा व्याधिं च मृत्यु च को हि जानन् सचेतन. ।
स्वस्थस्तिष्ठेन्निषीदेद्वा शयेद्वा किं पुनर्हसेत् ॥

ते हि भोगविलासादयो येषां स्वास्थ्यादीनां कारण भवन्ति, न ते सन्ति वस्तुतो बुद्धिमन्तः । अन्यथा कथं तेषां जीवन-विधि. पुन पुन भवकूपे पतनस्य कारणं प्रभवति । तदेवावलोक्य गौतमबुद्धेनानुमतम्—

अनित्यं तु जगन्मत्वा नात्र मे रमते मन· ।

तत् समर्थितं कालिदासेन—

मरणं प्रकृतिः शरीरिणा विकृतिर्जीवनमुच्यते बुधैः । इतिधिया जनाः कथमिह जीवने रंस्यन्ते । अवश्यमेव ते रममाणेभ्यो जनेभ्यो नित्यमेव दूरतरं भविष्यन्ति । ते जानन्ति निश्चप्रचम्—

आपातरम्या विषया· पर्यन्तपरितापिनः ।

अभिज्ञानशाकुन्तले कालिदासेनेदमन्तरं सम्यग् निर्दशित शार्ङ्गरवमुखेन यदिदं जनाकीर्ण जगत्तु बहूनां लोकानां नयनोल्लासं जनयति, किन्तु तत् सर्वं जाज्वल्यमानमेव दृश्यते साधुभि. । तथा हि

महाभाग· काम नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत् परिचितविविक्तेन मनसा
जनाकीर्ण मन्ये हुतवह - परीतं गृहमिव ।

ये तु पुनः तथात्व न पश्यन्ति, तेषां जीवनं कीदृशं भवतीति प्रोक्त भारविणा—

नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते ।
आसक्तास्तास्वमी मूढा वामशीला हि जन्तव ॥

तदेवान्तरमेकस्मिन्नेव पुरुषेऽवस्थाविशेषेण सजायेतेति भर्तृहरिणा स्पष्टं निगदितम्—

यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवम्
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित् किंचिद्बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ।

पूर्वतरमात्मानं सर्वज्ञं मन्यमान कश्चिज्जन कालान्तरे मूर्खोऽस्मीति विश्वस्त । पुनश्च भर्तृहरिमतानुसारम्—

येषा न विद्या न तपो न दान
ज्ञानं न शील न गुणो न धर्मः ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥

शरीरतो द्विपदा अपि सद्वृत्तिसौष्ठवविहीना जनाश्चतुष्पदा इति परिभाविताः ।

गृह प्रति साधारणजनानामासक्तिर्भवति । ते ऐश्वर्यादिकमधिकं वाञ्छन्ति । तथैव स्वकुलसंवर्धनार्थं सद्गुणोपपन्नपुत्राणां प्राप्तये तेषामाकांक्षा भवति । महात्मनां प्रवृत्तिस्तादृगी न भवति । ते हि कुपुत्र-जन्म वैराग्योत्कर्षाय वरदानमिव मन्यन्ते । भागवतेऽपि प्रोक्तम्—

कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात् ।
निर्विद्येत गृहान्मर्त्यो यत्क्लेशनिवहा गृहाः ॥

कुपुत्रात् शोको जायेत । ततो गृहे क्लेशो वर्धेत । परिणामतो वैराग्य-बुद्धिरुत्पद्येत ।

अन्यच्च साधारणजना इह जगति आत्मसुखलाभायापरेषां हानिमपि कुर्वाणा दृश्यन्ते । ते प्रायः परोपकार-परायणा न भवन्ति । विपरीतास्सन्ति साधवः । ते खलु

तप्यन्ते लोकतापेन साधव. प्रायशो जनाः ।

**अथवा**— त्रिभुवनमुपकार श्रेणिभिः प्रीणयन्त.

**अथवा**— एके सत्पुरुषा परार्थघटका. स्वार्थं परित्यज्य ये ।

अर्थार्थिनो जना नित्यमेव वित्तापत्यपशूना लाभाय प्राणपणेन यतन्ते । न तथा सन्ति सन्तः । तेषां मते तु

नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलै. ।।

**अथकिम्**— परिग्रहो हि दु.खाय यद्यत् प्रियतमं नृणाम् ।
अनन्तसुखमाप्नोति तद्विद्वान् यस्त्वकिञ्चनः ।।

**अथवा**— न हि गणयति क्षुद्रो जन्तुः परिग्रह-फल्गुताम् ।

**यदि** कथञ्चिद् विभवाः प्राप्तास्तर्हि यथाशीघ्रमेव तेषा प्रदानं कृत्वा
'तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जना' ।

**यतः** — विभान्ति काय' करुणापराणा परोपकारैर्न तु चन्दनेन ।

**तथैव प्रोक्तम्** — राज्यं हि बहु मन्यते नरा विषयलोलुपाः ।
मनीषिणस्तु पश्यन्ति तदेव नरकोपमम् ।।

अपरञ्च यशः शरीर नाम पार्थिवशरीरतोऽपि किञ्चिदधिकतरं महत्त्व-पूर्णं भवति विपरीतदृशां महापुरुषाणामिहलोके । यश.कामास्ते स्वशरीरपातमपि कर्तुं समुत्सुका भवन्ति यथा समीरित कालिदासेन—

अपि स्वदेहात् किमुतेन्द्रियार्थात्
यशोधनानां हि यशो गरीय. ।

**अन्यच्च**— किमप्यहिंस्यस्तव चेन्मतोऽहं यश शरीरे भव मे दयालुः ।
एकान्त-विध्वंसिषु मद्विधाना पिण्डेष्वनास्था खलु भौतिकेषु ।।

तादृशानेव जनान् प्रमाणीकरोति भारविरधोलिखितैश्लोकदृशा—

अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशु-विलास-चञ्चला ननु लक्ष्मीः फलमानुषंगिकम् ।।

साधारणजनास्तु शरीर–रक्षार्थं यशोहानिं कुर्वाणा अपि न विचिकित्सन्ते। 'कथमेतादृशा विपरीतभावापन्ना भवन्ति महापुरुषाः' इति महदाश्चर्यकरम्। तत्र तेषां योगेश्वराणां रहस्यं न जानीम इति कारणम्। तथाहि

योगेश्वराणां गतिमन्धबुद्धिः कथं विचक्षीत गृहानुबन्धः।

## ६. सत्सङ्गतिः

सद्भिरध्युषिता धात्री सम्पूज्येति किमद्भुतम्।
कालायसं हि कल्याणं कल्पते रसयोगतः॥

सत्सङ्गतिस्तु मनुष्याणां किञ्चिदपूर्वरूपं कल्याणं करोतीति कवेरभिप्रायः। मानवास्तु साधारण्येनार्थ-कामपरेषु व्यापारेषु निमग्नाः प्राकृतं जीवनं यापयन्ति। यदि नाम तत्र किमपि स्थानं धर्मस्य मोक्षस्य वा वर्तते, तत्तु सत्सङ्गति-प्रभावेणैव सम्भवति। 'अर्थकामप्रवृत्तयस्तात्कालिक–फलवत्यः' इति कस्यचित्पुरुषस्य तत्राकर्षणं भवति। न तथा भवति धर्मस्य मोक्षस्य वा प्रवृत्तीनां तावन्मात्रं साक्षात् फलम्। अतो जीवनस्योदात्तप्रवृत्तिं प्रति अभिमुखीकरणे सत्सङ्गतेर्माहात्म्यं स्पष्टमेव।

'प्रकरणेऽस्मिन् के ते सन्ति सन्तः' इति प्रथमतरं विवेचनीयम्। असाधारणाः खलु ते सन्तो येषां संगतिरसम्भवमपि सम्भवम्, असाधुमपि साधुम्, अकर्मण्यमपि कर्मण्यं करोति। अथ च लोकापहारकमपि लोकोपकारकं विदधाति। व्यवहार-पक्षे तु सन्तो भर्तृहरिणा निपुणं व्याख्याताः। तथा हि—

मनसि वचसि काये पुण्य–पीयूष–पूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।
परगुण–परमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः॥

एतदेव समर्थितं कल्हणेन

त्यक्त्वाप्यसून् परहितं घटयन्ति सन्तः।

सिद्धान्त–पक्षे तु सन्त तत्त्वज्ञानविशदचक्षुषो लोके स्वस्माद् नान्यत् किञ्चिज्जागतिकमात्मसात्कर्तुं समीहमाना आत्मकामा ब्रह्मसंस्था भावितात्मानो वा भवन्ति ।

एतादृशा सता संगतिर्दर्शनं वा पुण्येन भवति । यदा कस्यचित् पुरुषस्य भाग्योदयो जायते, तदा येषा सता दर्शनेन तस्य मानसे काचिदपूर्व-जिज्ञासा जागर्ति, श्रेयोऽभिलाषो वा उदेति तत पर स स्वयमेव लोकातिग सन्नुद्योगेन तपसा, सत्येन, ब्रह्मचर्येण च कार्य कर्म समाचरन् लोकमूर्धन्यो भवति ।

यथा स्वभावतो रवे प्रकाशो जायते, तथैव सत्पुरुषेभ्यो लोक-सन्धारणीया उदात्तप्रवृत्तिरुदेति । परिणामतो न केवलमेको द्वौ वा तेषा साक्षात् संगत्या सनाथा भवन्ति, अपितु समग्र विश्वमपि न्यूनाधिकमुत्कर्ष परोक्ष-सगत्या लभते । तथा हि गौतमबुद्धः स्वजीवनकालेऽसख्यान् धर्म–सघ–बुद्ध–शरणागतान् भिक्षून् निवार्णपथमगमयत् । बुद्धस्योपदेशैस्तत्कालीनविश्वस्य सर्वेषु भागेषु ज्ञानप्रकाश, सुसंस्कृति–प्रसारश्चाभवताम् । श्रीकृष्णस्य गीताधर्मोपदेशेन न केवलमर्जुनस्य मोहो विनिष्टोऽपितु भारते विदेशेषु च लोकसंग्रहस्यानुत्तमोपदेश. प्रसारित । शङ्करस्य प्रतिभाया अलौकिकत्वं सुविदितमेव । समग्रभारतमेव स्वकार्यक्षेत्र विधाय स सर्वत्र वेदान्तस्याद्वैतचिन्तनस्य धारा प्रवाहितवान् । स भारतमद्वैत विधातुमस्य देशस्य चतुर्दिग्भागेषु विश्वविद्यालयरूपान् मठान् स्थापितवान् । तथैव ख्रीष्ट–विवेकानन्द–गान्धिमहोदयप्रभृतीना प्रभावेण जगति आत्मगुणानां चिरन्तनमाहात्म्य सर्वेषा कृते प्रतिष्ठितम् । उपरिष्टात् निदर्शनात् स्पष्ट प्रतिभाति यत् सता प्रभावस्तु तेषा जीवनावधिमतिवर्तते । ते महात्मानोऽस्माक मध्ये भूयो जीवन्ति । सप्तर्षीणा सगत्या स्वयमेव ऋषिः सञ्जातो वाल्मीकिः किं नाधुनापि सर्वानस्मान् राममयान् विदधाति । ते सन्तो ज्ञानामृतशरीरा एवास्माभि· सङ्गमनीया आत्मलाभाय । ते एव सन्तः साधव इति व्यासेन व्याख्याता–

यथा गङ्गा मनुष्याणा पापनाशस्य भाविनी ।<br>
तथा मन्दसमुद्धारस्वभावा साधव स्मृता ।।

लोकेऽस्मिन् सङ्गस्तु त्याज्य एव श्रेयोऽर्थिभि । तत्रापि सता सङ्गोऽपवाद एवेति प्रमाणीकृत केनचित् कविना—

संगः सर्वात्मना त्याज्य स चेत् त्यक्तु न शक्यते ।<br>
स सद्भि सह कर्तव्यः सता सङ्गो हि भेषजम् ।।

महाकवि - बाणस्तु सत्सङ्गतौ वाणी–माधुर्यं निदर्शयन्नाह—

मनस्तु साधुध्वनिभि पदे पदे ।
हरन्ति सन्तो मणिनूपुरा इव ॥

सता सङ्गतिस्तु गुणानपेक्ष्यैव प्रादुर्भवति, वर्धते च, नान्यथा । तथा हि श्रीहर्ष

धनिनामितर सता पुनर्गुणवत्सन्निधिरेव सन्निधिः ।

खलाना सङ्गतिस्तु सतामपि कष्टं समुत्पादयति । तद्यथा —

मुखेनैकेन विध्यन्ति पादमेकस्य कण्टका. ।
दूरान्मुखसहस्रेण सर्वप्राणहराः खलाः ॥

यदि कथञ्चित् निगुर्णोऽपि कश्चिज्जनोऽनुरक्तस्सन् सतामाश्रयं तेषां कृपावशात् प्राप्नोति सोऽपि नित्यमेवाभ्युदय लभते । तथा हि—

निर्गुणमप्यनुरक्तं प्रायो न समाश्रितं जहति सन्तः ।
सहवृद्धिक्षयभाज वहति शशाङ्कः कलङ्कमपि ।

प्रत्यक्षं परोक्षं वा सन्तोऽसंख्येया सन्ति समाजे, तथापि तेषां सङ्गतिर्नास्माभिः प्रायश प्राप्यतेऽनुभूयते वा । केवल परमभाग्योदयेनैव सतामनुग्रहेण वा तेषां सगतेर्लाभा आत्मसात् क्रियन्ते नागरिकैः । कि न सत्यमेव समुद्घाटितम्—

सतां सद्भिः सङ्ग. कथमपि हि पुण्येन भवति ।

सत्सङ्गतेरभावात् व्यक्तिश समष्टिशश्च लोकस्य चारित्रिकभ्रशः प्रत्यक्ष एव । भोगविलासादीनां भृशं प्रसारः, आध्यात्मिकवृत्तीनां ह्रासश्च सतां प्रभावस्य विलोपेन सम्भाव्येते । अस्माकं सास्कृतिक - सस्थासु राज्य - संस्थासु वाधुना सतां प्रभावः स्वल्प एव वर्तते । इय स्थितिर्भयावहा, महानर्थकरी च वर्तते । अस्माकं देशे लोकसच्चारित्र्य–विनाशिनी आधिभौतिकी या धारोद्दामं प्रवहति, तस्या निरोधो यदि परमावश्यको मन्येत, तर्हि सतामादर्शाः समाजस्य समक्षं यथा प्रतिफलन्तु तथा साधु प्रयतनीयमस्माभिः ।

## ७. पुरा भारते नारीणां प्रतिष्ठा

प्राचीनभारते प्रतिष्ठा–दृष्टया द्विविधा नार्यो विमर्शनीया— प्रथमं कुलाङ्गना, या मातृ–स्वसृ–कन्या–पत्नी–पितृस्वसृ–भ्रातृजायादिसम्बन्धै कस्यापि पुरुषस्य गृहे वसन्तिस्म तस्याधोनत्वे, द्वितीय तु सर्वसाधारणा स्त्रियो बभूवु यासां कश्चित् कुल–सम्बन्धो नासीत् । एतयोर्द्वयोर्नारीप्रकारयो कुलाङ्गनाः सम्यक् परिभाषिता अधोलिखितश्लोकेन—

धर्ममर्थ तथा कामं लभन्ते स्थानमेव च ।
नि.सपत्न च भर्तार नार्य. सद्वृत्तमाश्रिता. ।।

सर्वसाधाणस्त्रीणां स्थितिस्तु शोचनीयैव । तद्यथा—

पक्वान्नमिव राजेन्द्र सर्वसाधारणाः स्त्रिय ।
तस्मात्तासु न रज्येत नाश्वसेत् न च विश्वसेत् ।।

या खलु कुलाङ्गना. सन्ति, तासा मातृत्व प्रकल्पितमेव । न तत्सम्भवति सर्वसाधारण–स्त्रीणाम् । एतदेव महदन्तरम् । मातृत्व नाम भारतीयविचारानुसार पूज्यतम विद्यते । तथाहि

जननी जन्म-भूमिश्च स्वर्गादपि गरीयसी । मातृदेवो भव इति महानुपदेशः तदेव समर्थयति । मातु पूजया सर्वे लाभा सम्भाविता । अथकिम्, नास्ति मातृसमो गुरुः ।

अथवा— प्रीणाति मातरं येन पृथिवी तेन पूजिता ।

एतत्सर्व मनुना श्लोकेनैकेन प्रतिपादितम्—

प्रजनार्थ महाभागा पूजार्हा गृहदीप्तय ।

स्त्रियश्च श्रियश्च गेहेपु न विशेषोऽस्ति कश्चन ।

कन्या नाम शाश्वतविचारानुसारं—

पुत्रीति जाता महतीह चिन्ता कस्मै प्रदेयेति महान् वितर्क ।

दत्त्वा सुखं प्राप्स्यति वा नवेति कन्यापितृत्वं खलु नाम कष्टम् श्लोकोऽयं कन्या-विषयक-चिन्तामेव निदर्शयति । सा चिन्ता कन्यां प्रति पितु स्नेहेनोपजायते । किञ्चन तत् समर्थित कालिदासेन—

अर्थो हि कन्या परकीय एव तामद्य सम्प्रेष्य परिग्रहीतुः।
जातो ममाय विशद प्रकाम प्रत्यर्पितन्यास इवान्तरात्मा ।।

एताः कुलस्त्रियो विवाहात् प्राक् ज्ञान - विज्ञानादिविषयेषु सम्यक् शिक्षिता आसन्। वैदिकसंहितासु ऋषिकाभि रचितानि बहूनि सूक्तानि सन्ति। बहव कन्या. ब्रह्मचारिण्यो बभूवु। 'ब्रह्मचर्येण कन्या युवान विन्दते पतिम्' इति वेदवाक्येन कन्याना ब्रह्मचर्यव्रतकाले वेदविद्याग्रहण प्रसाधितम्। यज्ञादिषु धार्मिकविधानेषु पत्नीना साहचर्यमपेक्षितमासीत्। पत्नीनाम्न सार्थकता एतेन साहचर्यपदेनोपकल्पितम। मनोरञ्जनादिकार्येषु पत्न्यः पतिभि· सह सुसङ्गता आसन्।

उपनिषत्सु मैत्रेयी, गार्गी, वाचक्नवी च प्रात स्मरणीया विदुष्यो वर्णिता। पाणिनि स्त्रीणामाचार्योपाध्यायादीना पदानामुल्लेखं करोति। तदनुसार स्त्रीच्छात्रास्तु 'अध्येत्री-माणविकाश्च विख्याता। ता. साङ्गोपाङ्गवेदादीनामध्ययन कुर्वन्तिस्म। कतिपय-स्त्रियोऽस्त्रादिविद्यासु निष्णाता बभूवु। बहव स्त्रिय आजीवनमविवाहिता एव कुमारश्रमणा·, कुमारप्रव्रजिताः कुमाराध्यापिकाः कुमार-तापसी, कुमार-पण्डिताश्चासन्।

महाभारतानुसार स्त्रियो ललितकलासु प्रायशः शिक्षिता आसन्। राजकुलदास्योऽपि चतुष्षष्टिविद्याविशारदाः, नृत्य-सगीतकलासु सुशिक्षिता बभूवुः।

परवर्तियुगे सुशिक्षिताना कवयित्रीणां काव्य-रचना· अद्यावधि बहुशः प्राप्यन्ते। गाथासप्तशत्या तासा पञ्चाशत्प्राया गाथाः सन्ति। भवभूतिर्मालतीमाधवे कामन्दकीति ख्याता बौद्ध-विदुषी निवर्णयति, यस्याः समीपं राजानो मन्त्रिणश्च शिक्षामाधातुं समागता.। राजशेखरस्तु स्त्री-शिक्षाप्रवृत्ति निदर्शयन्नाह-पुरुषवद्योषितोऽपि कवयित्र्यो भवेयुः। सस्कारो ह्यात्मनि समवैति। न स्त्रैणं पौरुष वा विभागमपेक्षते। शङ्करमण्डनमिश्रयोर्विवादे मिश्रस्य पत्नी निर्णायिका नियुक्तेति प्रथितमेव।

-शास्त्रविद्याध्ययनेन समाजे स्त्रीणामुच्चत्वं प्रायश आसीत्। अन्यतोऽपि तासामुच्चत्वं सम्यक् प्रसाधितम्। तथा हि– न केवल कौटुम्बिकव्यवस्थायामपितु राष्ट्रसूत्रसञ्चालनकार्येषु युद्धभूमौ वा तासां सुकृतानि स्मरणीयान्येव। महाभारतस्य विदुलोपाख्यान विश्रुतमेव। कैकेयी युद्ध-भूमौ दशरथस्य साहाय्यमकरोत्। ऐतिहासिक-युगीनानां नारीणां विषये उदात्ताश्चरितगाथाः सुविख्याता

एव । तथाहि कश्मीराणां सूर्यमतीदेवी राजकार्य सम्यक प्रसाधितवती । तत्रत्या रट्टाख्या राज्ञी तु—

विन्ध्याद्रिमार्गा पर्याप्ता निष्पर्यन्तप्रभावया ।
दुर्गयेव तया देव्या कृता निहतकण्टकाः ।।

कश्मीरेषु सुगन्धा प्रजाभि शासकपदे नियोजिता । सिन्धुप्रदेशस्य महाराज-दाहरस्य राज्ञी पत्युर्मरणस्य पश्चादारव्याक्रमणकारिभि. सहायुध्यत । यदा भोजनसामग्री समाप्ता, सा अन्याभिः स्त्रीभि सहाग्नौ प्राणांस्त्यक्तवती ।

दाम्पत्यस्य भारते सदैवादर्श आसीत्—एकपत्नीव्रतमिति । 'न चान्यनारीषु मनो दधे क्वचिदिति राज्ञामपि प्रशस्तिवचनमभवत् । तदनुसृत्य अजस्य वाक्यं वर्तते—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ
करुणाविमुखेन मृत्युना हरता त्वा वद कि न मे हृतम् ।।

सीतारामयोर्दाम्पत्यमेव सदैवानुकरणीयमिति साहित्ये प्रतिपादितम् । सपत्नी-सङ्कुल गृह कलहस्थानमिति निदर्शित सर्वत्र । तथाहि

धर्मप्रजासम्पन्ने दारे नान्या कुर्वीत ।

यत्तु पत्नीनां बहुत्व दृश्यते क्वचित् , तद् बहुदोपदिग्धमेवेति शास्त्र-विदुषा सम्मतम् । स तु एकपत्नीव्रतादर्श पण्डितराजेन जगन्नाथेन बहुलीकृतः—

मन्दस्मितेन सुधया परिषिच्य या मां
नेत्रोत्पलैर्विकसितैरनिश समीजे ।
सा नित्यमङ्गलमयी गृहदेवता मे
कामेश्वरी हृदयतो दयिता न याति ।।

उपरि वर्णितेषु प्रसङ्गेषु स्त्रीणा माहात्म्ये प्रतिष्ठिते सत्यपि नारीणां यदसंख्यस्थलेषु विगर्हणं वर्तते, तत्र साधारणस्त्रीणा॰ कुप्रवृत्तिरेव कारणम् । राष्ट्रस्याभ्युदय - पथे ताभि साधारण-स्त्रीभिरुपस्थापिता विघ्ना. प्रत्यक्षा एव वर्तन्ते । तदेकपदेन विष्णुपुराणे प्रोक्तम्—

व्रतानि वेदविद्याप्तिकारणान्यखिलानि ।
नरकग्राममार्गेण सङ्गेनापहृतानि मे ।।

अपरञ्च, भारते साहित्यकारेषु तेषां विदुषां वैपुल्यमासीत्, ये वैराग्य-परायणा आसन् । स्त्रीणां दर्शनं स्मरणं वा पतनस्य कारणमिति तेषां मतं विशुद्धमेव । यदि ते स्त्रियं निन्दन्ति तर्हि स्वाभाविकमेतत् । तथापि तेषां मतं न सामग्र्यचनामार्हं । यदि अश्वघोषः कथयति—

अशुचिर्विकृतश्च जीवलोके वनितानामयमीदृशः स्वभावः ।
वसनाभरणैस्तु वञ्च्यमानः पुरुषः स्त्रीविषयेषु रागमेति ।।

किं न भागवताः प्रवदन्तु

शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम् ।
हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ।।
न हि कश्चित् प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम् ।
पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च ।।

न तेषां मतं सर्वथा सम्माननीयं नैष्पक्ष्याभावात् ।

तथापि बहवो नार्यो विषकन्यका इव प्रयुक्ताः श्रूयन्ते । तासां कृते आसृष्टेर्युद्धसमारम्भाः प्रचेलुः । ललनारूपेण विष्णोरप्यसुरप्रतारणं सुप्रसिद्धमेव । नाटकादिषु स्त्रीकृतप्रपञ्चैः सतामपि दुःस्थितिं को न जानाति । यद्वा कथयति वात्स्यायनः—

विधवेक्षणिकादासी–भिक्षुकी–शिल्पकारिका ।
प्रविशत्याशु विश्वासं दूतीकार्यं च विन्दति ।।

तपोधनानां सर्वस्वहरणं तु नैकवारमप्सरोभिः कृतमेव । एतत् सर्वं साधारणस्त्रीभिः प्राकृताभिः नारीभिर्वा कृतम् । अतः विलासोन्मुखीनां ललनानां निन्दा तैः साधु कृता ।

तथापि भारते पुरा स्त्रीणां यावन्मात्रं स्वातन्त्र्यमासीत्, तासां व्यक्तित्वविकासस्य यानि द्वाराणि बभूवुः यथा वा तासां सामाजिक–प्रतिष्ठा-सीत्–एतादृशं किञ्चिदपि विश्वस्य कस्मिंश्चिद्देशे नाभवत् इति तु निर्विवादमेव ।

## ८. दारिद्र्ये बहवो गुणाः

दारिद्र्य भो त्वं परमं विवेकि गुणाधिके पुंसि सदानुरक्तम् ।
विद्याविहीने गुणवर्जिते च मुहूर्तमात्रं न रतिं करोषि ॥

ते पुरुषा अपवादरूपा अङ्गुलिगणनीया एव सन्ति, ये दारिद्र्यस्य विषये किञ्चित् प्रशंसनीय वदन्ति । तथापि न वयं दारिद्र्यं किञ्चिद् दोषावहं मन्यामहे, प्रत्युत दारिद्र्ये बहून् गुणान् पश्यामः । अथवा यदि नाम दारिद्र्यंकिञ्चिद् दोषावहं, तर्हि धनिकत्वमपि तस्मात् न्यूनतर दोषावहं नास्ति

'के ते भवन्ति दरिद्राः' इति सम्यक् पर्यालोचितं सुकविना

परीक्ष्य सत्कुलं विद्यां वयः शौर्यं सुशीलताम् ।
विधिर्ददाति निपुण कन्यामिव दरिद्रताम् ॥

सत्यमेवेद मत कविप्रवरस्य । धनार्थं स्वस्य कुलस्य, विद्यायाः, वयसः, शौर्यस्य, सुशीलतायाश्चोपयोगो न क्रियते सत्पुरुषैः । तत्र किं कारणम् । महाभारते निदर्शितं हि तत्—

न छित्त्वा परमर्माणि न कृत्वा कर्म दुष्करम् ।
न हत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥

इदं धन-सम्पादनं नाम न पुण्येन सम्भवतीति सुनिश्चितम् । केनचित् सम्यक् प्रथितम्—

अधोऽधः पश्यतः कस्य महिमा नोपचीयते ।
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥

अस्यां स्थितौ स्वाभाविक एव विदुषां निर्णयः—

प्राप्ताः श्रियः सकलकामदुघास्ततः किम् ।
दत्तं पदं शिरसि विद्विषता ततः किम् ।
सम्मानिताः प्रणयिनो विभवैस्ततः किम् ।
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥

अतएव तेषा व्रतं भवति–

अशीमहि वय भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरै ॥

न खलु दर्शनमपीश्वरस्य निष्पापमिति तेषा निर्णय ।

धनार्थं ते एवाल्पमतय प्रपञ्च रचयन्ति, ये लोकादर वाञ्छन्ति । लोकस्तु धनै प्राप्याण्यैश्वर्याणि प्रायश आदरस्थान मन्यते । इदमेव प्रमाणित केनापि कविना जडमते समुद्रस्य निदर्शनमभिलक्ष्य–

पीताम्बराय तनया प्रददौ पयोधि.
तत्कालकूटगरलं च दिगम्बराय ।
तत्रानयोर्वद कस्य गुणातिरेक:
प्राय परिच्छदकृतादर एव लोक: ॥

'अनृतमेव स परिच्छदादर:' इति सवित्रादिभि. स्वकीयचरित्रेण प्रमाणितम् । तथा हि

येनाम्बर–खण्डेन दिवा संचरते रवि: ।
तेनैव निशि शीतांशुरहो दौर्गत्यमेतयो: ॥

इयमेवावरणोपेक्षा तयो. प्रकाशस्य कारणम् । लक्ष्मीकलङ्कमलिना नि:सत्त्वा भोगपरायणा वा तुन्दिला: कथं प्रकाशमया. संचरण–कर्तव्यपरायणा वा भवितुमर्हन्ति ।

धनार्थं कि क्रियते जनै: ? प्रायश आत्मसम्मान विक्रीयैव धनं सगृह्यते । सर्वोच्चपदाधीशा वा महत्तरा वा सर्वे ते श्ववृत्तिमनुसरन्त एव स्वपदे चिरस्थार्यित्वं प्रतिष्ठापयन्ति नान्यथेति परमं सत्यम् । कश्चित् कविर्धनार्थिनां वृत्तिं कुत्सयन् प्राह—

कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्न - सुलभेन ।
विदधति धनिषु न दैन्य ते किल पशवो वय सुधिय: ॥

पुरा विद्वांसोऽपि ब्राह्मणा· स्वकीयज्ञानशक्त्या विश्वमधीन कर्त्तु समर्था अपि स्वीकुर्वन्तो परिग्रहव्रतमाजीवन समाजे सर्वोच्च प्रतिष्ठिता आसन् । 'परिग्रहे तत्र वर्तते कश्चिन्महान् दोष.' इति तेषां विदितमासीत् । कि न प्रोक्त भागवते—

परिग्रहो हि दु खाय यद्यत् प्रियतम नृणाम् ।
अनन्तसुखमाप्नोति तद्विद्वान् यस्त्वकिंचन ।।

पुन. भागवते कृष्णस्योपदेश -- येन पुरुषेण पर प्रीतोऽस्मि तस्य पुरुषस्य पुत्र धन दारान् बन्धुबान्धवादीन् सर्वमपहरामि । यत एतै सर्वैः विहीन स सम्यक् प्रकारेण मम भक्तो भवतीति ।

'धनेन सर्वथा सुख प्राप्यते' इत्यपि न सत्यम् । सन्तोष एव सुखस्य परमं कारण भवति । तद्यथा प्रोक्तं भागवते—

सदा सन्तुष्टमनस. सर्वा सुखमया दिश· ।
शर्कराकण्टकादिभ्यो यथोपानत्पद. शिवम् ।।

'तृष्णाया अपररूपमेव दारिद्र्यम्' इति दृष्ट मनीषिभिः । तथाहि

तृष्णा चेह परित्यज को दरिद्र. क ईश्वरः ।
तस्याश्च प्रसरो दत्तो दास्यमेव शिर स्थितम् ।।

ख्रीष्ट - संस्कृतावपि धनिना काचिद् हानिर्निर्दशिता । वाइबिल-ग्रन्था-नुसारमुष्ट्रस्य सूचीछिद्रे प्रवेशः सम्भवति, न तु धनिकस्य स्वर्गे प्रवेश. इति ।

'तपसा चीयते ब्रह्म' इत्यत्र स्वशक्तीना य सम्यक् विकासः परिलक्षितः, तन्न साध्य भवति धनिनाम् । तपस्तु दरिद्राणामेव सहजातमिति नि·संशयम् । अथ किम्, 'इह जगति काव्य–कलानुसन्धान–ज्ञान–विज्ञानादिक्षेत्रेषु लोक-कल्याण–भूमिषु यत्किञ्चिन्महत् कृतम्, तत्र प्रायशो दारिद्र्यगुणोपेतानां तपः-शालिनां महात्मनामेव कृतित्वं सविशेष राजते' इति सांस्कृतिकेतिहासस्य पर्यालोचनेन स्पष्टीभवति । लोकसेवा कर्त्तु दरिद्र एव स्वकीयेन यत्किञ्चित्केन समुत्सहते । धनिकस्तु नित्यमेवात्मसिद्धि समीहमानो नोपकारपरो भवति ।

अपूर्णमेव जीवन भवति लक्ष्मीसनाथाना जनानाम् । तथाहि यदि कश्चिद-

किश्चन काशीतो रामेश्वरं पद्भ्या गच्छति, मार्गे स बहु पश्यति, बहु अनुभवति, अथकिम्–बहु जीवति । किन्तु लक्ष्मीपुत्रस्तु वायुयानेन गच्छन् स्वल्पमेव पश्यति, वानुभवति वा मार्गे । अनया दिशा प्रपञ्चयितु शक्यते यद् जीवनस्यासख्यक्षेत्रेषु लक्ष्मीनिरीक्षिताना जनानामनुभव–संस्पर्शोऽपि न जायते । अतोऽपूर्ण स जीवति । नि.स्वानामपि धनव्यपेक्षिषु कतिपय - क्षेत्रेषु भवत्यज्ञानम्-तत्तु सत्यमेव । तथापि तादृशानि कृत्रिमक्षेत्राणि स्वल्पसंख्यकान्येव ।

श्रीमता भोगशक्तिर्न विद्यते । दरिद्रस्तु स्वल्पादपि श्रेष्ठतरं भोगसुखं लभते । तद्यथा समर्थित केनापि सुकविना---

प्रायेण श्रीमता लोके भोक्तु शक्तिर्न विद्यते ।<br>
काष्ठान्यपि हि जीर्यन्ते दरिद्राणां च सर्वशः ।।

अतः ब्रवीमि गान्धिमार्गमनुसृत्य—

सर्वदा सेवितव्यो दरिद्रनारायणः ।

## ग्रन्थसमीक्षणम्

**अलंकारसर्वस्वसंजीविनी**-अनुवादकसम्पादकः डा० रामचन्द्रद्विवेदी; मोतीलाल बनारसीदास, वाराणसी, १९६५, मूल्यम्—रु १५, पृष्ठसंख्या ३०+३९६.

काव्यप्रकाशकृन्मम्मटाचार्यानन्तर येषामालंकारिकाणां सम्प्रदाय - प्रवर्तन-गौरवमैतिहासिकैः स्वीक्रियते तेषु रुचकापरनामा काश्मीरिको राजानकरुय्यकः प्रामुख्यं भजते। अलकारसर्वस्वमिति स्वोपज्ञवृत्तिसहित. सूत्रात्मकोऽय ग्रन्थो विद्वत्समाजे परमादृतः, शब्दार्थोभयालकारनिरूपकेभ्यो ग्रन्थान्तरेभ्य स्वगुणातिशयेन भिद्यते। सोऽयं ग्रंन्थः सम्प्रत्येव श्रीमता डा० रामचन्द्रद्विवेदिमहामागेन अप्रकाशितचरया श्रीविद्याचक्रवर्तिप्रणीतया सञ्जीविन्या टीकया समलंकृतः सम्पादकोपज्ञेन हिन्दीरूपान्तरेण च भूपित· प्रकाश्यता नीत।

दाक्षिणात्योऽयं टीकाकारः श्रीविद्याचक्रवर्ती सर्वस्वव्याख्यातृभ्या जयरथ-समुद्रबन्धाभ्यामर्वाचीन ख्रीस्तीयचतुर्दशशतकभव सहित्य—व्याकरण-नाट्यशास्त्रादिषु कृतगभीरसंचारस्तत्तद्विषयेषु टीकादिग्रन्थान् बहून् जग्रन्थ। साहित्य-विषये काव्यप्रकाशस्य टीकाद्वयं सर्वस्वटीका चेय टीकाकृतोऽस्य बहुज्ञता साहित्यमर्मज्ञता च स्फुटं प्रमाणयन्ति। अस्या सञ्जीविन्याख्यायाष्टीकाया उल्लेखमात्रमेवाद्यावधि विदुषा शरणमासीत्। श्रीमता द्विवेदिमहाशयेन श्रमसाध्यं तट्टीकासम्पादनं कृत्वा बहूपकृत सस्कृतसाहित्यस्य। सममेव टीकया मूलपाठोऽपि सर्वस्वस्य तेन सावधान प्रकाशितपूर्वाणा ग्रन्थानामप्रकाशिताना च तिसृणा मातृकाणामालोचनेन सम्यङ् निरणायि; भाषान्तरेण टिप्पन्या च मयोज्य न केवलं विशेषज्ञानामपितु सामान्यपाठकानामपि महदुपकृतम्।

डा० द्विवेदी अलकारशास्त्रे कृतबहुश्रम, तदधिकृत्यैव शोधकर्म कृतवान्। 'अलंकारमीमांसा' अलंकारशास्त्रस्य तत्त्वाना सूक्ष्मविवेचनपरा तस्य वैदुष्येण विदुषां प्रिया सञ्जातैव। एषोऽपि ग्रन्थो विशेषज्ञस्य द्विवेदिमहाभागस्य वैदुष्यप्रकर्ष सूचयति इति महत्प्रमोदस्थानम्। ग्रन्थसम्पादने, अनुवादकर्मणि, टिप्पन्यां च यादृशी जागरूकता सम्पादकस्य दृश्यते, तेन स्फुट प्रतीयते यददेन विदुषा बहूपकरिष्यते सस्कृतसाहित्यस्य।

सुमुद्रितः सुदृश्यश्च ग्रन्थोऽयं विषयमहत्त्वेन सर्वत्र ग्रन्थागारेषु विद्वद्भवनेषु स्थानमर्हतीति नि संशयम्।

**भृङ्गसन्देशः श्रीकृष्णपञ्चाशिका च**-कविताकान्तै कविरत्न साहित्यरत्नं माङोट्टुश्शेरि कृष्णनम्पूतिरिपादः, करिक्काट्, केरल। मूल्य १).; आणकद्वय च। १९३३; १९४२.

सन्देशकाव्यपरम्परायामालोच्यमानो ग्रन्थो भृङ्गसन्देश केरलदेशीयस्य कवेः कृष्णनम्पूतिरिपादस्य काव्यकौशल प्रदर्शयति। अत्र यथापारम्पर्य पूर्वभागे

३९ श्लोका उत्तरे च ३४ श्लोकाः सन्ति । सन्देशकाव्यप्रवर्तकं महाकविं सस्मरन् कविना श्लोका अपि मन्दाक्रान्ताच्छन्दसा निबद्धा ।

उडुपतिपुरे प्रियाविरहितो भृश विरहतप्तः प्रेमी तत स्यानन्दूरवसत्यै स्वकान्तायै सन्देशप्रेषण चिकीर्षन् भृङ्गमेव दूतीकरोति, प्रार्थयते च —

ख्यातादस्मादुडुपतिपुराद्धश्चिभूमण्डन तत्
स्यानन्दूर प्रति जिगमिषोर्मार्गमादौ वदामि । इत्यादि

मार्गवर्णनेन पूर्वभाग समाप्य कवि स्यानन्दूर पुरवर वर्णयति, तत्र च स्वगृह यत्र कविकान्ता राजते । काव्येऽस्मिन् सर्वत्र कविना कालिदास आदर्शीकृत., श्लोकेष्वपि महाकविच्छाया सुस्पष्ट दृश्यते । यथाहि—

पुष्पे हास विधुमुखि, वच कोकिलाना निनादे
वायौ गन्ध तव तनुसुखस्पर्शन पुष्पवल्ल्याम् ।

काव्येऽस्मिन् पदशय्यातीव मधुरा, सरससरला च । सर्वजनहृद्य लघुकाव्यमेतत् ।

श्रीकृष्णपचाशिका, पञ्चाशच्छ्लोकनिबद्धा । कविः स्वाभीष्ट देव श्रीकृष्ण भावसमृद्धैः पदैः स्तौति । अस्मिन् काव्ये सरला वाग्रीतिमाश्रित्य स्वकीयमौचित्यज्ञानं प्रकटीकृतवान् । भक्तिभावेन न खलु भाषाकाठिन्य संवदति । प्रसादगुण एवेदृश्या रचनायां हृदयावर्जने समर्थ । पञ्चाशिकायाः श्लोकाः सारल्येन भाषाया., भावस्य स्वाभाविकोल्लासेन च नितरा मनोहारिणः ।

परं ग्रन्थोऽयं केरललिपिनिबद्धत्वात् न सर्वप्रदेशवासिना सुखपाठ्य । लिपिभेदे जाते सस्कृतस्य सार्वभौमत्वं न स्यात्, सापीतरभाषावत् 'सर्वभारतीया न विराजेत ।

अस्माभिरालोचिते ग्रन्थेऽस्मिन् केचन श्लोका नितरा मनोहारिण प्रतीताः । यथा —

शुभद सुरपूजित शिशु सुभगं देवकनन्दिनी सुतम् ।
जगतीशरण हृदि स्मरन् सगद कश्चिदुवाच साञ्जलि. । १

कविना स्थाने स्थाने काव्यकलाकौशलमपि प्रदर्शितम् , यथा—

कमलेक्षण मामकीनहृत् - कमले तिष्ठ शुचिस्मितानन ।
कमलेश्वर षट्पदो यथा कमले नूतनमेघमेचकः ।। ५६

कवेरात्मसमर्पणमपि मनोरमम्—

वपुषा मनसा गिरा धिया करणैर्यत् कृतमात्मनानिशम् ।
विदितं यदि वापि विस्मृत सकल तद् भवदर्पणं भवेत् ।।

विश्वनाथ भट्टाचार्य

## विषयानुक्रमणिका

# कालिदास-भारती

## डा० रेवाप्रसाद द्विवेदी

रघुवंशस्य दशमे सर्गे रावणोपप्लुता दिवौकसः कालिदासशब्देषु—

प्रबुद्ध-पुण्डरीकाक्षं बालातप-निभांशुकम्।
दिवसं शारदमिव प्रारम्भ-सुख-दर्शनम्॥१०-९—इत्येवविधं भगवन्त लक्ष्मीपतिमक्षिलक्षीकुर्वन्ति। अत्र सुमतिविजयश्चारित्र्यवर्धनश्च बालातपपदमेवं विवृण्वाते—

"बाला कन्याराशिः तत्र आ समन्तात् तपतीति—[बालातपः]। कन्याराशिस्थस्य आदित्यस्य नितरां भासो दीप्तयस्ता एव अंशुक वस्त्रं यस्य तं वा"।

[द्रष्टव्यं रघुवंशस्य नन्दर्गीकरसंस्करणपरिशिष्टम्]।

नन्दर्गीकरमहोदयो व्याख्यानस्यास्य रघुवंशदर्पणकृद्भट्टश्रीहेमाद्रिस्वीकृतत्वमपि प्रतिपादयते किन्तु व्याख्यानमिदं रघुवंशदर्पणस्यास्मदनुशीलिताना दशमसर्गीयाणां १०-प्रतीनां मध्ये भण्डारकरप्राच्यविद्याया. पूनास्थे प्रतिष्ठाने १६१। १८८२-८३-क्रमांकितायामेकस्यामेव प्रक्षेपबहुलायां प्रतौ विद्यत इति तादृशं प्रतिपादनं वस्तुवृत्ताद् दूरस्थितमेव मन्यामहे। मल्लिनाथस्य सजीविन्यामपि व्याख्यानमिदं न दृश्यते। नन्दर्गीकरमहोदयस्य टिप्पन्यां व्याख्यानस्यास्योपर्युद्धृतनाम्नोरेव टीकाकृतोर्विद्यमानत्वप्रतिपादनादिदमपि ज्ञायते यद् वल्लभादिषु प्राचीनतरेषु व्याख्यातृषु व्याख्यानमिद न लभ्यते। नन्दर्गीकरमहोदयैस्तेषामपि दृष्टचरत्वात्। तदत्रैतत् प्रश्नकौतुक जागर्त्ति यद् व्याख्यानमिद मान्य न वेति। अत्र विचारः।

टीकितृबहुमत व्याख्यानस्यास्य विपक्षे विद्यत इति मान्यत्वमस्य प्रमुख एव संदेहास्पदं प्रतिभासते। सदेहश्चाय विचारभूमिमधितस्थिवत्सु प्रमाकोटिमाटीकते। तथाहि व्याख्यानेऽस्मिन् च्युतसंस्कृतित्वम्, अप्रसिद्धिहतत्वम्, अप्रतीतत्वम् इत्येवविधं दोषजातमुत्कन्धरायमाण दृश्यते। तथाहि समासे "भास्" इतिशब्दस्य सकारो लुप्येत, अनन्तरं च यदि दीर्घसन्धिः क्रियेत तर्हि लोपोऽयं "पूर्वत्रासिद्धम्" इतिनियमानुसारमसिद्धो जायेत। एव च "निभांशुकम्" इति सन्धिरेवात्र न संघटेत। कृते च व्याकृतिविरुद्धं सन्धौ च्युतसंस्कृतित्वं पदेऽस्मिन् समापतेत्। एवमेव "बालाया

आतपस्य निभा यस्य तमिति विग्रहेणैव विवक्षितार्थलाभ आतपशब्दस्य सूर्यपरत्वे प्रसिद्धिविरोधरूपमप्रसिद्धिहतत्वमपि नातिगूढम्। बालाशब्दस्य कन्याराशिपरत्वं कोषेषु न लभ्यते, ज्योतिश्शास्त्रप्रसिद्धत्वे तु अप्रतीत्वमपरिहार्यम्। तच्छास्त्रानभिज्ञं प्रति स्वार्थप्रतिपादकतायास्तत्राभावात्। कृतेऽपि चास्मिन् क्लिष्टकल्पनोपनते कन्याराशिरूपिणि अर्थे न काव्यार्थसिद्धिः, चमत्कारहानात्। भगवतो विष्णोरंशुकं पीतवर्णत्वेन हि प्रसिद्धम्। ततस्तदुपमानेनापि साधर्म्यसिद्धये तादृशेनैव भवितव्यम्। आतपश्चात्रोपमानम्। बालत्वस्य विशेषणतया निवेशेन तत्र कन्यात्वं चेत् प्रतिपाद्यते तर्हि पराहतमेव वराकं साधर्म्यम्। ततश्चौपम्यमेव ध्वंसेन निश्चेष्टीकृतम्, का नाम तदाश्रितायाश्चमत्कृते वार्ता। चमत्कृतिशून्यस्य च काव्यस्य निश्चेतनस्य च निकायस्य को नु विशेषः।

कन्याराशौ हि तीक्ष्णतामात्रमातपे प्रतिपद्येत। आश्विनमासे हि सूर्यः कन्याराशिमुपैति। मृगेषु कृष्णशारतासपादयित्री ललाटतपत्वसध्रीचीना तीक्ष्णतामसौ तदैव बिभर्ति। न चाय नानुभविकः सर्गमात्रस्य विषय.। न ह्यसौ तदानी कुसुम्भबभ्रुतामितरराशिविलक्षणा काचिदाचिनोति येन कन्याराशि-स्मरण-सध्रीचीनामेतामेव तदानीतनविशेषात्मना भावकः स्मरेत्। कुसुम्भबभ्रुता पिशंग-वर्णता वा प्रभातस्यैव सूर्यस्य प्रसिद्धा।

अस्ति च शारदे बालातपे तदितर-बालातपाद् विशेषः। शरत्कालो हि घन-व्यपायतया प्रसिद्धः। तदानी वर्षर्त्तोर्व्यपायो भवति। वर्षतौ च भगवतः सूर्य-नारायणस्य प्राभातिकी पिशंगता पयोधरोपरोधात् पिधीयमाना वर्ण्यते—

"तस्मिन् काले नयनसलिल योषितां खण्डिताना
शान्ति नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु।
प्रालेयास्र कमलवदनात् सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः॥" —मेघदूते

इत्यादावभिप्रायस्यास्य सर्वजनीनत्वेन विद्यमानत्वात्। शरदि पुन र्मेघानामपगमात् सूर्यमरीचयो भ्राजिष्णुतासहचरी विमलतां प्रतिपद्यन्ते। ततश्च नलिनीमुखकमलान्यपि भृश व्याक्रोशी बिभ्रति। "शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः"—[रघु०–६]—इत्यादौ "मेघापगमे यथा शशी स्फुटावभासो भवति तथैव सूर्योऽपि, यथा च शशी नलिन्या रुचये न भवति तथैव सूर्योऽप्यरुचय" इति व्यतिरेकेण सूर्यमाक्षिप्याभिप्रायस्यास्य प्रसिद्धताया द्रष्टु शक्यत्वात्। मेघापगमातिरिक्ता शरदि दिगन्ता निर्धूतधूलि-निवहाः, अतश्च सातिशय विमला जायन्ते। द्यावापृथिव्योरन्तरालं तदानीं नीरजस्कं तिष्ठति।

सूर्यातपगतं बालत्वं प्रभातकालिक-पिशंगतामात्रप्रतिपादकत्वे चमत्कारसाधकत्वा-दौचिती बिभ्रदनुभूयते, न तु कन्याप्रतिपादकत्वे।

विप्रतिपत्त्यन्तरादपि कन्याराशिपक्षो विमाननैकविषयः तिष्ठति। यतो हि विशेषणानन्तर तत्र दुर्गतायते। तद् यथा "प्रारम्भ-सुखदर्शनम्" इत्यत्र प्रारम्भशब्दे अवाचकत्वमायाति। कन्याराशिपक्षे बालातपशब्दात् प्रभातरश्मित्वपरिहाणौ प्रारम्भशब्दादपि तदर्थकत्वस्य बलात् परिहाणेः।

"प्रकृष्ट आरम्भो योगो येषां ते प्रारम्भाः प्रकृष्टोद्योगा योगिनः तेषां सुख-दर्शनम्"—इति मल्लिनाथादयः,

"प्रकृष्ट आरम्भ उद्यमो विष्णुसाक्षात्कार विषय एषां सनकसनन्दनादीनां [तेभ्यः] सुखेन दर्शनं यस्य तम्, 'आरम्भस्तु त्वरायां स्यादुद्यमे वधदर्पयोः' इति विश्वः"

इत्येव च हेमाद्रिप्रभृतय. प्रारम्भशब्दव्याख्याने बहुव्रीहिमुपगम्य प्रवर्तन्तेऽपि। यद्यपि मल्लिनाथ-हेमाद्रिभ्यां बालाशब्दस्य कन्याराशिपरत्वं न स्वीक्रियते तथापि तयोरिदं व्याख्यान पक्षेऽस्मिन्नुपकारकृत् सिद्धयति। एतयोश्च विदुषोरस्यां प्रवृत्तौ "प्रारम्भ आदौ एव सुखदर्शनः, न तु पर्यन्तेऽपी"—तिन्भगवद्विषयामन्था-बुद्धिसभावनामेव तन्त्र पश्यामः। वल्लभस्तु "शारददिवसोपि तपाभावात् प्रारम्भ-सुखदर्शनो भवति" इत्येव प्रारम्भशब्दस्य आरम्भमात्रपरत्व मनुते। विपरीत-बुद्धिभिया असौ किमिति नाक्रान्त इति प्रश्ने पश्यामः—यथा हि शिवलिगादौ पूज्यत्वबुद्धिसाम्राज्यादिन्द्रियविशेषाप्रत्ययादश्लीलत्वं न प्ररोहति तथैवात्रापि भगवद्विशेषणत्वेन प्रारम्भेत्यादेरभिप्रायस्य स्थितेस्तादृशविरुद्धबुद्धित्वमपि प्ररोढु न क्षमते। कि च यदि भगवति विरुद्धबुद्धिरुदेति तर्हि दिवसेपि सा उदियादेव। ततश्च तत्पक्षे तादृशबुद्धिनिवारकस्य कस्यापि काव्य-वाक्ये अश्रुतत्वात् पक्षद्वयेऽपि दोषपरिहारयोः साधारण्यादेकतरपर्यनुयोगोऽनुत्थानपराहतः। अस्ति च प्रारम्भपदार्थस्य आरम्भमात्रार्थकत्वे साधक प्रमाणम्। प्रकृतसन्दर्भश्च तत्। प्रकृते हि देवा याचकत्वेनोपस्थिताः। योहि याचको भवति स दातुः दर्शनकाल-मुद्रामवश्य निर्वर्णयति। प्रसन्नश्चेद् दाता याचकः प्रहृष्यति। भगवतो दर्शनेन देवस्नामपि प्रहर्षस्मात्र -वर्णितुमावश्यकत्वात् कविना तल्लिंगतया सुखदर्शनत्व दर्शनारम्भकालिकमत्र प्रतिपादितम्। इद चात्र सगतिविरुद्धं यद् दर्शकत्वेनोपस्थिता देवाः, सुखदर्शनत्व च प्रकृष्टोद्योगेभ्यो योगिभ्यः। ततश्च रामो निमन्त्र्यते, कृष्णश्च भोज्यते। तस्माद् व्याकुल-देव-समाजाश्वासनार्थसिद्धये प्रारम्भशब्दस्यारम्भ-मात्रपरत्वमत्र मन्तव्यं, न तु तादृशबहुव्रीहिपाशानीतं योगिरूपमपकल्पनम्। कन्याराशिपक्षे तु प्रभातरूपस्य पदार्थस्य बालाशब्दादैकान्तिकत्वेन ग्रहीतुमसंभवात्

प्रारम्भपदादपि तद्ग्रहणेऽनैकान्तिकत्वस्यैव प्रसगः। तदित्थं प्रारम्भशब्दस्य "आरम्भार्थकताया"–मपि स्वीकृतायामुपमानोपमेयोभयसाधारण्य 'प्रारम्भसुखे"-त्यादेर्विशेषणस्य सघटते, विप्रतिपत्तिनिरासपूर्वकमधिकार्थलाभश्च सपद्यते।

विशेषणान्तरमपि कन्याराशिपक्ष विहाय प्रभातपक्षमेव द्रढयति। तथा हि "प्रबुद्धपुण्डरीकाक्षम्" इत्यत्र यत् प्रबुद्धेतिपद तद्घटकीभूतः प्रबोधपदार्थो निद्रापगमरूप एव। स च प्रभातैकानुषक्तः। पुण्डरीकपक्षे तु तस्य लाक्षणिकतया विकासपरत्वमेव कि च यथा विशेषणमिद भगवत्पक्षे "प्रबुद्धपुण्डरीक इवाक्षिणी यस्ये"त्युपमितसमानेन दिवसपक्षे च प्रबुद्धपुण्डरीक एवाक्षिणी यस्येत्यनेन विशेषणसमासेन सगमय्यते तथा बालातपे"–त्यादि सगमयितु न शक्यते। तत्र मध्ये सादृश्यप्रतिपादकस्य निभशब्दस्य विद्यमानत्वात्। तेन हि विशेषणसमासस्य बाधितत्वात् तदायत्तस्य बालातपांशुकपदार्थयोरभेदस्य प्रतिपादन न सभवति। न च मल्लिनाथेन 'निभो व्याजसदृक्षयोः' इति विश्वप्रकाशवचनानुसार निभशब्दस्य व्याजार्थपरत्वेन "बालातपव्याजांशुकम्" इति दर्शितेऽपि किमित्येवं तर्क्यत इति वाच्यम्, लशुनभक्षणेऽपि व्याधेरशान्तेः। व्याजशब्दो हि मूलतश्छद्मार्थको भवति। निभशब्दस्य व्याज-च्छलाद्यर्थकत्वस्वीकृतौ च "बालातप"-पदार्थे बालातपत्वस्य निषेध, अंशुकत्वस्य च विधान भवतः। ततश्च "प्रकृत यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः" इति मम्मटोक्तलक्षणानुसारमत्रापह्नव स्वीक्रियते, न त्वभेदः। अपह्नवेन च व्यजनया सादृश्यमात्रस्य प्रतीतिरुचिता न त्वभेदस्यापि। अपह्नवस्य सादृश्यैकमूलकतायामेवापह्नुतेरलकारत्वोपगतेः। प्रतीयमाने च सादृश्ये तत्प्रयोजकस्य साधर्म्यस्य गवेषणाया कन्याराशिपक्षे रिक्तहस्ततैव केवला लभ्यते। न चाभेदोपि तत्र व्यज्येतेति वाच्यम्, व्यक्तेनापि तेनापह्नवानुपकारित्वात् प्रकृते न कश्चिद् गुणः। वाच्येनापह्नवेन बालातपत्वप्रतिषेधपूर्वमंशुकत्वविधाने दिवसपदार्थेन सह "बालातपे–"त्यादेर्विशेषणार्थस्य जायमानायामसगतौ व्यक्तेनाप्यभेदबोधेन कि नु साध्येत। तेन हि बालातपपदार्थस्यांशुकपदार्थेनैक्यमात्र प्रत्याय्येत, न च तथापि कार्यसिद्धिः, अनन्वयप्रसगस्य तथैव स्थितत्वात्। अभेदेन हि अंशुकपदार्थस्यैव प्राधान्य प्रतीयेत। अंशुकं च दिवसपदार्थेन संगति कथमपि नाश्नुवीत। परिणामदिशा तु सा कर्तु शक्येतापि, तदानी बालातपपदार्थस्यैव प्राधान्येन प्रतीतेः, किन्तु सति निभपदार्थे सादृश्येऽभेदसाध्यस्य परिणामस्य वार्तापि दुष्करा। इत्थं च निभशब्दस्य व्याजार्थपरत्वमत्र प्रकृतानुपयोग्येव। यच्चोपयोगि तत् केवलं सदृशार्थपरत्वम्, तेन च दिवसपदार्थे विशेषणमिद कथमपि संगति न भजेत। अत एव च कन्याराशिपक्षो व्याख्यातृभिरुपात्त इति चेत् सति साधनान्तरे तादृशदोष–बहुलपक्षोपादाने को नाम समादरः। किं नु तत् साधनमिति चेद् ब्रूमः–श्लोकवाक्यार्थो

हि सादृश्यप्रधानः, तत्र विशेषणानामपि सादृश्यमात्रपरतायामेव कवेरत्र संरम्भः न तु तादृशाभेदकल्पनायाम। एतेन चौपम्यघटितवाक्यांशयोः 'प्रबुद्धे'-त्यादि'बालातपे'-त्याद्योर्भगवदेकपरत्वम् अतथाविधस्य "प्रारम्भे"-त्यादेश्चोभयसाधारण्यमिह निर्विकल्प स्वीकार्यम्। एतेन बालातप-प्रारम्भ-पदयोरपि शल्यचिकित्सा परिह्रियते कविपारम्पर्यं च परिरक्ष्यते। किमत्र कविपारम्पर्यमिति चेत् तदर्थं संदर्भान्तराणि गवेष्याणि। तत्र बालातप-बालारुणबालार्क-प्रभृतीनां पदानां प्रभातप्रभामात्रपरताया दृश्यमानत्वात्। स्वयं कालिदास एव शब्दानामेषां प्रभातरश्मिपरत्वेनैव भूयांसः प्रयोगा दृश्यन्ते। तत्र बालातपशब्द एव—

दिग्विजयप्रस्थितो रघुर्यवनीमुखपद्मानां मधुमदरागं तथैव न सहते यथा अकालजलदोदयः पद्मानां बालातपम्—

> यवनीमुखपद्माना सेहे मधुमदं न सः।
> बालातपमिवाब्जानामकालजलदोदयः ॥४।६१॥

अत्र जलदोदयकालः प्रावृट्। तदितरकालश्च शरदादिः। तत्र च शरदि बालापदेन कन्याराशो ग्रहणं सम्भवदपि मधुमदोपरागवैसादृश्यान्नैव सभवति, हेमन्तादौ च सूर्यो राश्यन्तर संक्रामति। टीकितारोपि बालातपपदस्यात्र कन्याराशिपरत्व न स्वीकुर्वन्ति। तद् यथा हेमाद्रिः—

> "अकाले शरदि जलदोदयः पद्माना बालातपमिव....।
> बालातपत्वेनारुणिमाक्षिप्तः॥" इति।

अत्रातपगतं बालत्वमारुण्यमात्रप्रतिपत्तय इति सुस्पष्टम्। मल्लिनाथो बालातपपदमत्र यद्यपि न विश्लेषयति तथापि मदपद स मदरागपर प्रतिपादयति— "मदो मदराग" इति। ततश्च बालपदादप्यारुण्यमात्रस्य तदभिमतत्व सुतरामेव सिद्ध्यति। तदभावे साम्यविरोधात् ' वल्लभादिभिरत्र बालापदं कन्यापरं स्वीकृतमिति नन्दर्गीकरसस्करणात्र ज्ञायते। मदरागेण बालातपसाम्यं हरविजयमहाकाव्ये रत्नाकरोप्येवमुपनिबध्नाति—

> "संबादि-षट्चरण-तारक-पक्ष्मपक्ति-लक्ष्मीधरां धवलिमानमिवोद्गिरन्तीम्।
> तन्व्या दृशं मधुमदो मुकुलीचकार बालातपः कुमुदिनीमिव गाढरागः॥२६।४३॥

अत्र तु बालातपगत रक्तवर्णत्व कण्ठरवेणैव सुकविरुदीरयति।

२. इन्दुमती-स्वयवरसभायामसर्पितलम्बहारो हरिचन्दनचर्चितांगश्च विशालशरीरः पाण्ड्यः सनिर्झरोद्गारेण सबालातपेन च पर्वतराजेनोपमीयते—

"पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातप-रक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥६।६० रघु०

संस्कृतकाव्यशास्त्रिषु पद्यमिद बिम्बप्रतिबिम्बभावमूलायोपमालकाराय नितरामेव प्रसिद्धमस्ति। सर्वैरपि बालपदेनात्रातपगतमारुण्यमेव गृह्यते, रक्तेतिवाच्यवृत्तया प्रतिपादितस्य सानुगतस्यारुण्यस्यान्यथानुपपत्तेः, हरिचन्दनपदेन रक्तचन्दनग्रहणात् तत्प्रतिबिम्बतायाश्चारुण्य विना बालातपे असंभवात् पक्षान्तरस्य ग्रहीतुमशक्यत्वात्। एतत्पद्यरत्नार्थचित्रमेव च बाणभट्टोपि बालातपशब्दपूर्वकं कादम्बर्यामेव प्रस्तवीति [राजकुलवर्णने]—

"धवलोष्णीषपटाश्लिष्ट - विकटकिरीटसकट - शिरसा सनिर्झरशिखरावलग्नबालातप-मण्डलेनेव कुलपर्वतचक्रवालेन मूर्धाभिषिक्तेन सामन्तचक्रवालेन अधिष्ठितम्०००" [पृ० ८८ वैद्य सस्करणे।]

एवमेव शूद्रकवर्णनेऽपि बालातपशब्दं रक्तिमलाभायैव प्रयुजानो बाण एव ब्रवीति—

"अतिसुरभिचन्दनानुलेपनधवलितोरःस्थलम् उपरिविन्यस्तकुङ्कुमस्थासकम्।
अन्तरान्तरानिपतितबालातपच्छेदमिव कैलाशशिखरिणः राजानमद्राक्षीत्।"
—पृष्ठ ९

३. विक्रमोर्वशीये नायको नायिकायाः सगमनीयमणिकृता मुखशोभामेवं वर्णयति—

"स्फुरता विच्छुरितमिदं रागेण मणेर् ललाटनिहितस्य।
श्रियमुद्वहति मुख ते बालातप-रक्त-कमलस्य॥४।७४॥

बालातपेन कमलानां को नु लाभ इति पद्यरत्नेस्मिन् नितरामेव स्फुटम्। अत्र हि कन्याया बलाद् ग्रहण को नामानुमन्येत। बालातपशब्दवदेव बालारुणशब्दोपि कालिदासस्य बहुमतः। तथाहि—

१. रघुवंशस्य सप्तमे सर्गे युद्ध वर्णयति—

"आवृण्वतो लोचनमार्गमाशु रजोन्धकारस्य विजृम्भितस्य।
शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोभूद् रुधिरप्रवाहः॥७।४२॥

इत्येवं बालारुणशब्द च प्रयुणक्ति। अत्र "तमःसन्निभ रजो बालातपसन्निभेन रुधिरप्रवाहेण शान्तिं नीतम्" इति वाक्यार्थे अन्धकारोपशामकत्वरूपेण लिंगेन "बाल"-शब्दस्य शक्तिः प्रभातनत्वरूप एवार्थे नियम्यते। ततो नास्ति पक्षान्तरस्यावसरः।

२. कुमारसभवे मधुश्रीः बालारुणकोमलेन रागेण चूतप्रवालोष्ठम् अलंकुरुते—

"लग्नद्विरेफाजनभक्तिचित्रं मुखे मधुश्रीस्तिलकं प्रकाश्य।
रागेण बालारुणकोमलेन चूतप्रवालोष्ठमलंचकार"॥३।३०॥

अत्राधरप्रसाधनीभूतरागपदार्थसाहचर्याद् बालारुणपदघटकीभूत बालपदं प्रभातनत्वपरमेव, न कन्याराशिपरम्।

३. भगवती पार्वती तपःसमाधिकाले हार विमुच्य बालारुणबभ्रु वल्कलं पिधत्ते।

"विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम्।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति।।"५।८॥

अत्रापि पिशंगतापरत्वप्रत्यायनायारुणपदे पूर्वपदतया बालपद सुकविः प्रयुक्तवान्। बभ्रुपदेन च सादृश्यमूलं साधर्म्यमत्र निर्दिदेश।

बालारुणवदेव बालार्कपदमपि कालिदासेन प्रयुज्यते, तरुणार्कपदं च। तत्र प्रथमं यथा—

"बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः।
रराज रक्षःकायस्य कण्ठच्छेदपरम्परा"॥१२।१०० रघु०॥

अत्र निकृत्तशिरा रावणो बालार्कप्रतिमः, निपतन्तो गलद्रक्ताश्च तन्मूर्धानो बालार्कप्रतिमातुल्याः। अत्रोभयत्राप्युपमानोपमेयभावे रक्तरंजितत्वमेव केवलं सामान्यम्। द्वितीय यथा—

"आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्।
पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव।।"

—कुमार० ३।५

अत्रापि भगवत्याः पार्वत्या वाससो रक्तवर्णतायै तरुणपदमुपादीयते। रघुवंशेपि प्रबोधमंगलावसरे तरुणारुणरागयोगात् स्तम्बेरमाणां दन्तकोषा भिन्नाद्रिगैरिकतटा इव प्रतिपाद्यन्ते—

"शय्यां जहत्युभयपक्षविनीतनिद्राः स्तम्बेरमा मुखरशृंखलकर्षिणस्ते।
येषां विभान्ति तरुणारुणरागयोगाद् भिन्नाद्रिगैरिकतटा इव दन्तकोषाः।।

—रघु० ५।७२

अत्र गैरिकधातो रक्तवर्णत्वं प्रसिद्धमेव। तरुणारुणपदाव्यवहितोत्तरं च रागपदमप्यत्र प्रयुज्यते।

भगवता वाल्मीकिनापि प्रहस्तपुत्रप्रक्षिप्तेन रक्तवर्णेन शरेण विद्धं भगवतो हनूमतो मुखं भास्कररश्मिना विद्धेन शरत्कालाम्बुजेनोपमीयते—

"तस्य तच्छुशुभे ताम्रं शरेणाभिहतं मुखम्।
शरदीवाम्बुजं फुल्ल विद्ध भास्कररश्मिना।।

—सुन्दरका० ४४।८।।

अत्रापि भास्करपदेन बालारुणस्तरुणारुणो वा ग्रहीतु शक्यते। शरगतेन रक्तत्वेन हि तत्र सूर्यरश्मौ रक्तत्वं प्रतीयेत, तच्चानन्तरपद्ये तेनैव भगवता—

"तत् तस्य रक्त रक्तेन रजित शुशुभे मुखम्।
यथाकाशे महापद्मं सिक्त कनकबिन्दुना।।"

—इत्येव स्पष्ट क्रियते।

पूर्वोद्धृतेषु हि स्थलेषु सूर्यगतनवीनताप्रतिपत्तये बालशब्दप्रयोगात् कन्याराशिरुपपक्षान्तरस्य कथचित् स्यादपि सभावना किन्तु यत्र तादृशार्थप्रतिपादनाय बालपदं नास्ति तत्र किमुच्येत। यथा—

"स तेजो वैष्णवं पत्न्योर् विभेजे चरुसज्ञितम्।
द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम्।।

—रघु० १०।५४, इत्यत्र

"तं कृतप्रणतयोऽनुजीविनः कोमलाग्रनखराःगरूषितम्।
भेजिरे नवदिवाकरातपस्पृष्टपंकजतुलाधिरोहणम्।।"

—१९।८ रघु०

इत्यत्र च। अनयोः प्रथमस्थले दशरथद्वारा पुत्रीयेष्टिसमुत्थितस्य चरुतेजसः कौसल्या-कैकेयीनाम्न्योः पत्न्योर्विभागे द्यावापृथिव्योः सूर्यकर्तृकेण प्रत्यग्रातपविभागेनोपमीयते। तत्र प्रत्यग्रपदेनापि कि कन्याराशिर् ग्रहीतु शक्येत? उत्तरत्र च-अग्निवर्णस्य, यावकरजितानां तन्नखानाम्, तत्र प्रणतानां चानुजीविनाम् उपमेयता, दिवाकरस्य, नवीनतदातपस्य, तत्स्पृष्टपकजस्य चोपमानता बिम्बप्रतिबिम्बात्मनोपनिबध्यते। तत्र दिवाकरेणाग्निवर्णस्य, पकजेनानजीविवर्गस्य यथा साम्यं

तथैव नवातपेन नखरागस्येति स्थितमत्रापि प्रभातस्य सूर्यस्य कृते पक्षान्तरकल्पना-नैराश्यम्।

प्रभातस्य सूर्यस्य तपनीयवर्णतासौभाग्यं केवलेन अरुणपदेनापि प्रतिपाद्यते। बाणभट्टादेः प्रभातवर्णनासु तथ्यमिदं स्पष्टमेव, स्वयं कालिदासेपि नैतन्न स्पष्टम्। स हि—

"वृन्तश्लथं हरति पुष्पमनोकहानां संसृज्यते सरसिजैररुणांशुभिन्नैः।
स्वाभाविकं परगुणेन विभातवायुः सौरभ्यमीप्सुरिव ते मुखमारुतस्य॥"

—रघु० ५।६९

"यावत् प्रतापनिधिराक्रमते न भानुरह्नाय तावदरुणेन तमो निरस्तम्।
आयोधनाग्रसरता त्वयि वीर याते किं वा रिपूस्तव गुरुः स्वयमुच्छिनत्ति॥

—रघु० ५।७१

"अरुणरागनिषेधिभिरंशुकैः श्रवणलब्धपदैश्च यवांकुरैः।
परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः॥"

—रघु० ९।४३

इत्यादिषु केवलमरुणिमानमेव विडम्बयितु बाल-नव-प्रत्यग्रतरुणादिपदवदे-वारुणपदमपि प्रयुक्ते। "अरुणरागनिषेधित्वम्" अंशुके विधाय बालातपनिभांशुकपदार्थाभिव्युक्तेः स्वयं कालिदासेनैव स्पष्टतां नीतेति किं नु भूयोप्युच्येत। सर्वथा "बालातप"-पद कविपारम्पर्ये प्रभातकालिकसूर्यरश्मिमात्रार्थमस्ति, न कन्याराशिपरम्।

# अष्टादशशतकस्य तिस्रो वीथ्यः

विहारीलाल नागार्चः

दशरूपकेष्वन्यतमा वीथी। अस्या इतिवृत्तं भाणवदेव भवति। अस्यां श्रृङ्गाररसस्य कैशिकीवृत्त्याश्च प्राधान्यं विद्यते। तथा हि,

वीथी तु कैशिकीवृत्तौ सन्ध्यङ्गाङ्कैस्तु भाणवत्।
रसः सूच्यस्तु श्रृङ्गारः स्पृशेदपि रसान्तरम्॥
युक्ता प्रस्तावनाख्यातैरङ्गैरुद्घात्यकादिभिः।
एवं वीथी विधातव्या द्व्येकपात्रप्रयोजिता॥

दशरूपक ३।६८-९

साहित्यशास्त्रीयग्रन्थेषु कासाञ्चिद्वीथीनामुल्लेखः प्राप्यते। साहित्यदर्पण-कारेण 'मालविका' इत्यस्याः वीथ्याः निर्देशः कृतः। भावप्रकाशनकारेण 'वकुल वीथी' 'इन्दुलेखा वीथी' इत्यनयोः वीथ्योः नामोल्लेखः कृतः। 'माधवी' इति सञ्ज्ञिका वीथ्यपि साहित्यशास्त्रीयग्रन्थेषु निर्दिष्टा। कालिञ्जरनरेशस्य मन्त्रिणा वत्सराजेन कृता न कापि वीथी अद्यावधि समुपलब्धा। दैवदुर्विपाकात्साहित्यशास्त्रेषु निर्दिष्टा-नामुपर्युल्लिखितानां वीथीनामिदानीं लेशोऽपि न प्राप्यते।

प्रमोदस्यावकाशोऽयं यदष्टादशशतके विरचिताः तिस्रः वीथ्य इदानीमस्माभि-रुपलब्धाः। एतासा नामानि 'चन्द्रिका'[1] 'लीलावती'[2] 'सीताकल्याणम्'[3] च सन्ति। चन्द्रिकालीलावत्योः प्रणयन रामपाणिवादेन कृतम्। सीताकल्याणस्य निर्मितिः वेङ्कप्पस्य लेखिन्या सञ्जाता।

---

1. Edited, K. Ramapisharote, Bulletin of the Ram Verma Research Institute, Trichur 1934, No. 3.

2. Edited, The University Manuscripts Library Trivandrum, 1948.

3. Manuscript available in the Oriental Research Institute, Mysore. Vide, 'Catalogue of Sanskrit Manuscripts in the Govt. Oriental Library, Mysore" 1910, p. 87.

## चन्द्रिका

नान्द्यां कविना शिवाराधनं कृतम्। प्रस्तावनायां कविनात्मनः परिचयः प्रदत्तः। स मङ्गलग्रामवासी रामपाणिवादनामास्ति।[1] अस्याः वीथ्याः निर्माणं तेन प्रकाशराज्यस्य शासनकर्तुः वीररायस्याज्ञया कृतम्। अस्या अभिनयः श्रीपरक्रोडनाम-श्वेतारण्यपुण्यक्षेत्रमधिवसतः भगवतः शिवस्य माघकृष्णचतुर्दशीमहोत्सवप्रसङ्गेन सम्मिलिताया महाब्राह्मणपरिषदि समभूत्। रामपाणिवादेनात्र स्वयमेव वीथी-लक्षणं कृतम्। तथा हि,

पात्रद्वयप्रयोज्या भाणवदेकाङ्किका द्विसन्धिश्च।
आकाशभाषितवती कृत्रिममितिवृत्तमाश्रिता वीथी ॥

**वस्तु**

अङ्गराजस्य चन्द्रसेनस्य विद्याधरमणिरथपुत्र्या चन्द्रिकया सह विवाहप्रसङ्गोऽत्र वर्ण्यविषयः। एकदा राज्ञा चन्द्रसेनेन रात्रौ काप्यतीव सुन्दरी कन्या दृष्टा। सा सुन्दरी शृङ्गारार्द्रैरपाङ्गैः स्वहृदयाकूतमावेदयन्ती स्वकीयां मणिस्वर्णमयीमङ्गली-मुद्रिकां चन्द्रसेनस्याङ्गुल्यामर्पयित्वा तिरोऽभवत्। तस्यामनुरक्तो राजा विरह-दुःखितो भवति। अपरस्मिन् दिवसे प्रातः वेलाया स्वमित्रेण माण्डव्येन विदूषकेण सह विरहसन्तापापनोदनार्थाय राजा पुष्पाकराभिधेयं वसन्तारम्भरमणीयमुद्यानं गच्छति। उद्यानविहारकाले सहकारपादपाद्भूर्जपत्र पतितं दृष्ट्वा राजा तद्गृही-त्वा विदूषकमुखाच्च तत्र लिखितान्यक्षराणि श्रुत्वा पत्रस्य गूढाभिप्रायं जानाति। तस्मिन् पत्रे चन्द्रिकया स्वमदनार्तिः राज्ञे निवेदितासीत्। राजा तत्र चन्द्रिकाया अन्वेषण करोति। तदानीमेवाकाशाच्चन्द्रिकागमनं सूच्यते। परन्त्वन्यतो नेपथ्यात् सूच्यते यद्राक्षसपतिश्चण्डश्चन्द्रिकामपहृत्य स्वनगरीं नयति। क्रुद्धश्चन्द्रसेनश्चण्डं प्रहर्तुमुद्युक्ते। अनन्तरं गणेशप्रसादाच्चण्डो विहन्यते। चन्द्रिकापि गणपति-प्रसादाज्जीवितैव वर्तते। मणिरथः स्वसम्बन्धिभिः सह सम्मिलितश्चन्द्रिकाया विवाहस्यायोजनं करोति। चन्द्रसेनः वररूपेण तस्मिन् महोत्सवे आमन्त्र्यते। सः विदूषकेण सह शीघ्रमेव स्वविवाहमहोत्सवमनुभवितु गच्छति। एतावन्मात्रमेव कथावस्तु विद्यते।

---

1. For personal details and other works of Ramapaṇivada please refer to 'The Contribution of Kerala to Sanskrit Literature' by K. K. Raja, Madras, 1958, p. 183-95.

**नायकः**

अङ्गराजश्चन्द्रसेनोऽत्र नायकः। सः धीरललितकोटिकोऽस्ति। सः सौन्दर्यस्योपासकोऽस्ति। चन्द्रिकायाः सौन्दर्ये सोऽनुरक्तो विद्यते। सः तर्कशीलः। सः प्रकृतिप्रेमी प्रकृत्याः सूक्ष्मान्वेषणं कृत्वानन्दं लभते। सोऽतीव बुद्धिमानस्ति। भूर्जपत्रे विलिखितानां शब्दानां गूढाभिप्रायं शीघ्रमेव ज्ञात्वा प्रसङ्गानुकूलमेकं पद्यं विरच्य स तत्र लिखति। राज्ञः कविहृदयमनेन सूच्यते। स वीरयोद्धास्ति। तस्य शौर्यस्य प्रदर्शनं तदैव भवति यदा स राक्षसपतिं चण्डं प्रताडयति क्रुद्धश्च तस्योपरि बाणप्रहारचिकीर्षुः वर्तते। रक्षसापहृतां चन्द्रिकां श्रुत्वा स पुनर्मिलननैराश्येण मूर्च्छति स्वमवशिष्टं जीवनं व्यर्थं भारस्वरूपं च मन्यमानः प्राणपरित्यागं वरं गणयति। अनेन चन्द्रिकाविषयकोऽस्यानुरागः सूच्यते।

विदूषकं प्रति राज्ञः सुहृद्भावोऽस्ति। सः विदूषकस्य मन्त्रणायै अत्यधिकं महत्त्वं ददाति। अन्यस्मिन् जन्मन्यपि राजा विदूषकं स्वमित्ररूपेण प्राप्तुमिच्छति। तथा हि,

> 'तन्माण्डव्य भवानिहैव सुसखा जन्मान्तरेऽप्यस्तु मे। श्लो० २४
> विदूषकवचनादेव राजा स्वमरणनिश्चयं परित्यजति॥

राज्ञः विश्वासभाजनं विदूषकोऽस्ति। राजा तस्मै स्वगोपनीयं शृङ्गारिकरहस्यं कथयति। चन्द्रिकया प्रदत्तमङ्गुलीयकं प्रत्यपि राज्ञः प्रबलमाकर्षणं विद्यते।

स्वकुलदेवे बालगणपतौ राज्ञोऽनन्यास्था वर्तते। भक्त्या स स्वविपत्तिनाशार्थममुं देवं प्रार्थयते। स चन्द्रिकया सह स्वविवाहसमाचारं श्रुत्वाह्लादितो भवति। चन्द्रिकां प्रति स्वहृदयानुरागं प्रदर्शयितुं सोऽतीवोत्सुकः दृश्यते।

**नायिका**

अस्या वीथ्याः नायिका चन्द्रिका विद्यते। सा मुग्धाकोटिकास्ति। सा रङ्गमञ्चे नायाति। तस्याः व्यवहारस्तु नेपथ्यादाकाशाद्वा सूच्यते। सा विद्याधरस्य मणिरथस्य पुत्री वर्तते। अत्यन्तरूपवती सा चन्द्रसेनस्य गुणैस्तस्मिन्ननुरक्ता भवति। मणिरथस्तस्याः मनोरथं ज्ञात्वा तां चन्द्रसेनपत्नीं कल्पयित्वा मनुष्यलोकं प्रेषयति।

एकस्यां रात्रौ सा राज्ञः सम्मुखं प्रकटीभूय स्वासक्तिप्रतीकं स्वाङ्गुलीयकं तस्याङ्गुल्यामर्पयित्वा तिरोभवति। अस्याः रूपलावण्यं दृष्ट्वा राजास्यामासक्तो भवति। चन्द्रिकायाः वियोगे राजा उद्यानेऽपि सन्तापमनुभवति।

सातीव बुद्धिमती विद्यते। 'कामो' इति शब्दं चतुर्वारं लिखित्वा तया यस्य

गूढार्थस्याभिव्यक्तिः कृता तं विदूषकोऽपि बोद्धुमसमर्थः। केवलं राजैवास्य गूढाभिप्रायं ज्ञात्वा यथोचितं यतते।

राजास्याः विपत्तिं चिन्तयित्वानया विना स्वप्राणान् परित्यक्तुमुद्यतो वर्तते।

राक्षसपतिश्चण्ड एनामपहरति। एतं राक्षसं निहत्य गणेश एनां तस्य हस्तात्त्रायते।

अनन्तर मणिरथेनामन्त्रितः राजा चन्द्रिका परिणेतुं विदूषकेन सह गच्छति।

चन्द्रिकाया रङ्गमञ्चेऽनागमनेन तस्याश्चरित्रं सम्यक्प्रकारेण न प्रस्फुटितम्।

**अन्यानि पात्राणि**

येषां पात्राणामत्र नेपथ्यादाकाशाद्वा केवलं सूचना दीयते तानि चन्द्रिकातिरिक्तानि निम्नलिखितानि—

१. विद्याधरो मणिरथः।
२. मणिरथस्य मित्र मणिशेखरः।
३. राक्षसपतिश्चण्डः प्रतिनायकरूपेण व्यवहरति।
४. उद्यानपालो लम्बकर्णः।

इमानि पात्राणि रङ्गमञ्चे नायान्ति।

**विदूषकः**

माण्डव्यनामाय राज्ञश्चन्द्रसेनस्य विश्वासभाजनं मित्रं विद्यते। राजास्मै स्वशृङ्गारिकाणि रहस्यानि प्रकाशयति। माण्डव्यः विषमासु स्थितिषु राज्ञः साहाय्य करोति।

सः विनोदप्रियोऽस्ति। तस्यौदरिकत्वमपि स्पष्टमेव। माण्डव्यः स्वप्नेऽपि मोदकानि भक्षयति प्रबुध्य च प्रातः काले 'मोदको मोदक' इति मन्त्रेण सन्ध्यावन्दनं कुरुते।

स मनोविनोदार्थ चन्द्रसेनमुद्यान नयति। चन्द्रसेनस्य विपत्तिविनाशाय स तं गणेशस्तवनं मन्त्रयति।

विदूषको भ्रमवशाद्भुर्जतरुचर्म सर्प ज्ञात्वा तस्माद्बिभेति। चण्डेन कृतं चन्द्रिकापहरणं श्रुत्वा विदूषकः क्रुद्धो भूत्वा तं वाचा प्रताडयति। तथा हि—

विदूषकः—(सरोषम्) चिट्ठ दुट्ठ रक्खस दुम्मुह दुम्मूढ दुस्सील दुद्दसण दुव्विअट्ठ तुमं बम्हसुत्तेण बन्धिअ कुलह्मण्डं विअ तुज्झमुड दडअट्ठेण ताडिअ पाडइस्सं।

विदूषकहृदये राजान प्रत्यतुलनीयं प्रेम प्रवहति। विदूषक आत्मनः बुद्धिविस्तारं बृहस्पतेरप्यधिकं गणयति। विदूषकस्य मौर्ख्यमनेनैव सूच्यते यत् स कामिनीनां वृक्षारोहणं तर्कयति।

चन्द्रसेनः विदूषकमात्मनः सखायं मन्यते। यथावसरं चन्द्रसेनः विदूषकं सम्मन्यते। स चन्द्रिकाप्राप्तौ चन्द्रसेनस्य साहाय्य करोति।

**रसः**

शृङ्गाररसोऽत्र प्रधानरूपेण विद्यते। शृङ्गारोऽप्यत्र सूच्य एव। सभोगो विप्रलम्भश्च द्वावपि भेदावत्र दृश्येते। विदूषकोक्तिभिः हास्यस्य पुष्टिर्भवति। वीरकरुणशान्तानां स्थितिरत्र गौणरूपेण विद्यते।

**नाट्यकला**

कविनास्मिन् रूपके नाट्यकलायां पर्याप्त साफल्यमुपलब्धम्। कथाविन्यासे, चरित्रचित्रणे, कथनोपकथनेषु, अङ्कयोजनायाञ्च कविः सफल एव। कथा पूर्णरूपेण कविकल्पितास्ति। अस्याः कथायाः न कोऽपि लौकिक आधारः प्राप्यते। नान्द्याः प्रस्तावनायाश्च योजना शास्त्रीयान्नियमानाश्रित्यैव कृता। केवलं विदूषकचन्द्रसेनौ पात्रद्वयमत्र रङ्गमञ्च आगच्छतः। अवशिष्टाना पात्राणा तु केवलं सूचनैव दीयते। आकाशभाषितानामत्र बाहुल्य दृश्यते। मुखनिर्वहणाभ्या सन्धिभ्यामत्र कविना कथा विन्यस्ता। बीजबिन्दुपताकाप्रकरीकार्यलक्षणाः पञ्चार्थप्रकृतयोऽप्यत्र सुष्ठु निष्पन्नाः। शास्त्रीयनियमानुकूलमेव राजा सस्कृते विदूषकश्च प्राकृते भाषेते। नाट्यनिर्देशा अपि कविना सुप्रयुक्ताः। रसपरिपाकदृष्ट्यापि रूपकमिदं सफलम्। प्रेक्षकोऽत्रानेकानां रसानामनुभूति लभते। सवादयोजनेऽपि कविना स्वदाक्षिण्यं प्रदर्शितम्। एभिः सवादैः दर्शकानां कुतूहल सदैव वृद्धि प्राप्नोति। एकदिवसव्यापि वृत्तमेव कथारूपेणात्र विन्यस्तम्। कार्यान्वितिरपि द्रष्टव्या। कथासंघटने कवेः दक्षता स्तुत्यैव। अङ्गराजस्य चन्द्रसेनस्य प्रासादः पुष्पाकर नाम बालोद्यानञ्च दृश्यानामत्र स्थली।

**प्रकृतिवर्णनम्**

कविनोद्यानस्य सन्ध्यायाश्च वर्णनमत्र सुष्ठु कृतम्। एभिः वर्णनैः कवेः प्रकृत्यन्वीक्षणशक्तिः ज्ञायते। वसन्तकालेऽशोकवृक्षाणामिद वर्णन द्रष्टव्यम्—

सर्वाङ्गीणप्रकटमुकुलश्रेणिमाणिक्यभूषा-
स्सान्द्रस्निग्धारुणकिसलयस्पृष्टपट्टोत्तरीयाः।
त्वङ्गद्भृङ्गप्रकरचिकुरभ्राजमानोत्तमाङ्गा
बालाशोका विटपरिषदां विभ्रमं विभ्रतेऽमी॥

वसन्ते पलाशवृक्षाणां क्रियापि द्रष्टव्या—

वक्रा ताम्रकरालकोरकमिषान्मर्माणि विश्लेषिणा-
मुच्छेत्तु किमु दर्शयन्ति नखरानेते पलाशद्रुमाः।
अग्रोद्गत्वरभृङ्गधूमविततिं पुष्पोत्करच्छद्मना
दग्धु तान् ज्वलयन्ति वह्निमिति किं शङ्के न कङ्केलयः॥

कामिजनाः वसन्ते पूजाव्याजेन वारवनितानां वेणीशोभार्थं बकुलपुष्पाणि समुपचिन्वन्ति। एतद् वर्णनमपि कविना सुष्ठ कृतम्। सन्ध्यावर्णनमपि समीचीन-मेव। तथा हि,

आताम्रार्कमरीचिपावकमुखे तारालिलाजाञ्जलि-
र्यत्रैषा प्रविकीर्यते पुनरसावन्यूनरागोदया।
रक्ताम्भोदपटावगुण्ठनवती सम्प्राप्य सन्ध्यावधूः
स्वैरं यत्र च वासरं वरयते कालोऽयमालोक्यताम्॥

**भाषाशैली**

अस्यां वीथ्या प्रयुक्ता भाषा प्रवाहपूर्णा प्राञ्जला च वर्तते। एषा भाषात्यन्त-सरला, मनोहारिणी, प्रसादगुणगुम्फिता चास्ति। लघुविस्तारिषु वाक्येषु दीर्घ समासान्तपदानामभावो विद्यते। अर्थाभिव्यक्तौ भाषा पूर्णरूपेण समर्था। शैली प्रभावोत्पादिका वर्तते। यत्र तत्र विकीर्णाभिः सूक्तिभिः शैल्याः प्रभावोऽपि वृद्धिं प्राप्नोति। निम्नाङ्किताः सूक्तयोः द्रष्टव्याः—

१. क एकविषयं रहस्यमन्यस्मै प्रतिपादयति।

२. सत्यसंकल्पा खलु ब्राह्मणजातिः।

३. मनोरथानां क्व नाम प्रतिबन्धः?

कविना रसानुकूलानि छन्दांसि प्रयुक्तानि शार्दूलविक्रीडितहरिणीवसन्त-तिलकामन्दाक्रान्तानां प्रयोगः विशेषतो द्रष्टव्यः। भावानुकूलैव पदावली प्रयुक्ता। कवेः वर्णनानि प्रभावशालीनि सन्ति। अलङ्काराणां प्रयोगोऽपि कविना यथास्थानं कृतः। शब्दालंकारेषु अनुप्रासयमकयोरर्थालङ्कारेषु च उपमोत्प्रेक्षयोरत्र प्रयोगः सविशेषो द्रष्टव्यः।

शास्त्रीयविधानानुकूलं कविना संस्कृतप्राकृतयोरुभयोरप्यत्र प्रयोगः कृतः। परन्तु प्राकृतमत्र कृत्रिममेव। प्राकृतं दृष्ट्वेदं प्रतिभाति यत्कविना प्रथम सस्कृतवाक्यानि विरच्यानन्तरं भाषाशास्त्रीयनियमानाश्रित्य तानि प्राकृतभाषायां परिवर्तितानि। वसन्तवर्णने विदूषकोऽपि संस्कृतमाश्रयते। सस्कृतभाषायां कवेः पूर्णपाण्डित्य दृश्यते।

**अभिनेयता**

अभिनयदृष्ट्यापीदं रूपक सफलमेव। कथानकभाषाशैली-पात्रदेशकाल-संवाद-नाट्यनिर्देशादिभिः सर्वाभिः दृष्टिभिरिदमभिनयानुकूलम्।

## लीलावती

रामपाणिवादनिर्मितेयं द्वितीया वीथी। अस्या अभिनयः महाराजस्य देवनारायणस्य विप्रसभायामभूत्। नान्द्यां कविः पार्वती वन्दते। प्रस्तावनातो ज्ञायते यद्रामपाणिवादः राघवपाणिवादस्य भागिनेय आसीत्। पुराणमहीसुरवरिप्ठस्तस्य सुहृदभूत्। रामपाणिवादस्य जिह्वाग्रे सरस्वती सदैवानृत्यत्। राज्ञा देवनारायणेन स बहुमतः। तस्य हृदये विष्णोः प्रकाशोऽवर्तत। वर्षर्तावस्याः वीथ्या अभिनयोऽभूत्।

**वस्तु**

अस्यां वीथ्यां कुन्तलेश्वरस्य वीरपालस्य कर्णाटराजपुत्र्या लीलावत्या सह विवाहो वर्णितः। शत्रुभ्यो भीतः कर्णाटराजः स्वपुत्री लीलावती कुन्तलेश्वरस्य वीरपालस्य पत्न्याः कलावत्याः संरक्षणे स्थापयति। वीरपालस्तां प्रत्यासक्तो भवति। परन्तु कलावत्या असूया वीरपाललीलावतीपरिणये बाधामुपस्थापयति। वीरपालः लीलावत्याः विरहेन भृश पीड्यते। वीरपालस्य मित्र विदूषकः लीलावत्या सह तस्य परिणयार्थ प्रयतते। लीलावत्या सखी केलिमालापि तस्या विरहावस्थां दृष्ट्वा तां वीरपालेन योजयितुं सचेष्टा भवति। केलिमालाविदूषकयो सहयोगेन वीरपाललीलावतीपरिणयाय आयोजन क्रियते। योगीश्वर्याः सिद्धिमत्याः साहाय्यमप्यस्मिन् कार्ये समुपलभ्यते। केलिमाला लीलावत्या प्रेषित दन्तताटङ्कमपि राज्ञेऽर्पयितुं विदूषकाय ददाति। इदमायोजनं कार्यसिद्धिपर्यन्तं गोपनीयमिति केलिमालाविदूषकौ निश्चिनुतः। अस्मिन् कार्ये योगीश्वर्याः साहाय्य कर्तुमपि तौ प्रतिजानीतः।

अनन्तरं विदूषकः लीलावत्या विरहेन पीडितं राजानमाश्वासयितुं गच्छति। स राज्ञे लीलावत्या अपि विरहवेदनां निवेदयति। राजापि विदूषकं कथयति यल्लीलावतीविषयकं तस्यानुरागं ज्ञात्वा कलावती दुःखितास्ति। स विदूषकमेतादृशमायोजनं कर्तुमादिशति येन कलावतीदुःखं विना लीलावत्याः प्राप्तिर्भवेत्।

प्रमादाद्विदूषकः केलिमालाप्रदत्तं दन्तताटङ्कमपि जहाति। स दन्तताटङ्कः कलावत्याः प्रियसख्या कन्दलिकया प्राप्यते। कन्दलिका दन्तताटङ्के विलिखिताः मदनगाथाः पठित्वा लीलावतीवीरपालयोरनुरागविषयं जानाति। विदूषकः कन्दलिकाया हस्ताद्दन्तताटङ्कं माहरति राज्ञे च तं ददाति। तत्र लिखिता गाथाः पठित्वा राजा मनोभवेन भृशं पीड्यते।

इदानीमेव नेपथ्यात्सूच्यते यदन्तःपुरं एकः भयानकः सर्पः प्रविष्टः। तेन सर्पेण दष्टा कलावती मूर्च्छिता। वीरपाल इदं श्रुत्वा मूर्च्छितो भवति। इदं सर्वं सिद्धिमत्या इन्द्रजालं ज्ञात्वा विदूषकः वीरपालं मूर्च्छितायामेवावस्थायां परित्यज्य तस्याः साहाय्यार्थं गच्छति। अनन्तरं स आहितुण्डिकवेशं विधृत्यान्तःपुरं गत्वा कलावतीं स्वस्थां करोति। अनन्तरं वीरपालोऽपि कलावतीं द्रष्टुमन्तःपुरे प्रविशति। तत्र कलावतीं स्वस्थां दृष्ट्वा वीरपालः प्रसन्नो भवति। कलावती तस्मा आहितुण्डिकाय पारितोषिकं प्रदातुमिच्छति। परन्त्वाहितुण्डिकः न किमपि पारितोषिकं याचते। स कथयति यद्यथाकालं स परितोषिकं ग्रहीष्यति। अनन्तरमाहितुण्डिकोऽन्तःपुराद्बहिर्गच्छति। कलावती दन्तताटङ्कगाथाविषयमधिकृत्य राजानमुपालभते। क्रुद्धा सा तस्मात् स्थानादन्यत्र याति।

अनन्तरं शिवः स्वप्ने कलावतीमादिशति यत् सा वीरपाललीलावत्योः परिणयं करोतु। एतदनुष्ठानेन वीरपालः चक्रवर्ती भविष्यतीत्यपि शिवः कलावतीं सूचयति। प्रबुध्य कलावती वीरपाललीलावत्योः परिणयं कारयति। परिणयानन्तरं यदा लीलावती कन्दलिकया सह मंगलदेवताराधनाय मन्दिरं गता तदा मार्गे ताम्राक्षेणासुरेणापह्रियते। शीघ्रमेव वीरपालस्तत्र गत्वा ताम्राक्षस्य वधं विधाय पुनरन्तःपुरं प्रविशति।

अनन्तरं विदूषकः राज्ञे सिद्धिमत्याः वृत्तं कथयति। वीरपाल इदं श्रुत्वातीव हृष्टो भवति। भरतवाक्यानन्तरञ्च रूपकस्य समाप्तिर्भवति।

**नायकः**

कुन्तलराजः वीरपालोऽत्र नायकः। स दक्षिणकोटिकः धीरललितः। स सौन्दर्योपासकोऽस्ति। लीलावत्याः रूपलावण्यं दृष्ट्वा स तस्यामनुरक्तो भवति।

लीलावती विना स महतीं वेदनामनुभवति। तस्य पत्न्याः कलावत्या असूयैव लीलावतीपरिणये तस्य प्रधाना बाधा। कलावत्याः स्वीकृत्यैव स लीलावतीं परिणेतुमिच्छति। कलावतीं प्रति तस्य सहृदयत्व स्पष्टमेव।

लीलावतीं प्रत्यपि वीरपालस्य सहृदयत्वं वर्तते। वीरपालः पराक्रमशाली विद्यते। ताम्राक्षवधस्तस्य शौर्यप्रतीकमस्ति।

**विदूषकः**

एषः वीरपालस्य मित्रम्। अस्य प्रयासैः वीरपालः लीलावती परिणेतु साफल्यं लभते। योगीश्वर्या सिद्धिमत्याः साहाय्येन स एतदायोजयति। स केलिमालां दृष्ट्वा तस्यै वीरपालस्य विरहावस्थां निवेदयति। केलिमालामुखात् स लीलावत्याः विरहावस्थां जानाति।

विदूषकः प्रमादी विद्यते। केलिमालया दत्तं लीलावत्याः दन्तताटङ्कं स विजहाति। स्वमित्रस्य वीरपालस्य कार्यसम्पादनार्थं स जुगुप्सितमाहितुण्डिकवेशमपि धारयति। सर्पदशान्मूर्च्छितां कलावती स स्वस्था करोति। स सिद्धिमत्याः वृत्तं तावत्पर्यन्त राज्ञे न प्रकाशयति यावत्तस्य लीलावत्या सह परिणयो न भवति। विदूषकः स्वाभिमान्यपि दृश्यते। स कन्दलिकायाः पादौ न स्पृशति। लीलावतीपरिणयानन्तर स राजानमभिनन्दति।

अस्यां वीथ्यां विदूषकस्यौदरिकत्वं न प्रदर्शितम्। विदूषकेनात्र हास्यसृष्टिरपि न क्रियते। तस्य गाम्भीर्यमेवात्र प्रतिष्ठापितम्।

**अन्यानि पात्राणि**

वीरपालविदूषकातिरिक्तमन्यानि पात्राण्यत्र रङ्गमञ्चे नायान्ति। तेषां चरितमाकाशभाषितैः नेपथ्याद्वा प्रकाश्यते। इमानि पात्राणि निम्नलिखितानि—

१. लीलावती, अस्या वीथ्या नायिका।
२. वीरपालपत्नी कलावती।
३. कलावत्याः सखी कन्दलिका।
४. लीलावत्याः सखी केलिमाला।
५. योगीश्वरी सिद्धिमती।

रङ्गमञ्चेऽनागमनादेतेषां पात्राणां चरित्रं प्रस्फुटित न भवति। चरित्रचित्रणदृष्ट्या कवेः साफल्यं निस्सन्दिग्धमेव।

**रसः**

शृङ्गारोऽत्र प्रधानो रसः। विप्रलम्भस्यैवात्र बाहुल्यं दृश्यते। भयानकवीरावत्र गौणरूपेण विद्येते।

**प्रकृतिवर्णनम्**

कविना यथास्थानं वर्षायाः वर्णनं कृतम्।

तथा हि,

गम्भीरनीरदमृदङ्गरवाभिरामं
भृङ्गाङ्गनामधुरगीतकलासनाथम्।
विद्युत्प्रदीपकलिते विपिनान्तरङ्गे
नृत्तोत्सव वितनुते ननु नीलकण्ठः॥

पौरस्त्यो वायुरपिकविना वर्णितः। तथा हि,

एते नूतनकेतकीदलगलन्माध्वीकधाराकिराः
स्निग्धेन्दीवरनीलनीरदघटासम्पर्कशीतोत्कराः।
मन्दान्दोलितहूणवारतरुणीवेणीकलापस्रजः
पौरस्त्या मरुतो न कस्य रभसादुत्कण्ठयेयुर्मनः॥

एतानि वर्णनानि कवेः प्रकृतेः सूक्ष्मान्वीक्षणस्य परिचायकानि।

**भाषा-शैली**

अत्र प्रयुक्ता भाषा सरला सरसा च विद्यते। अर्थाभिव्यक्तौ भाषा पूर्णरूपेण समर्था। भावानुकूलैव भाषात्र व्यवहृता। यथास्थानं पद्येषु समासान्तपदान्यपि प्रयुक्तानि। अन्तःपुरे सर्पप्रवेशप्रसङ्गे पद्येषु दीर्घसमासयुक्तानि पदानि दृश्यन्ते। गद्यभागे तु समासान्तपदानि स्वल्पान्येव। कवेः कवित्वमप्यत्र सुष्ठु प्रस्फुटितम्। नवीनाः कल्पना अत्र वर्तन्ते। शब्दालङ्कारेषु श्लेषानुप्रासयोरर्थालङ्कारेषु चोपमोत्प्रेक्षासन्देहभ्रान्तिमतां प्रयोगाः द्रष्टव्याः। अलङ्काराणां प्रयोगोऽत्र स्वल्प एव कृतः।

भावानुकूलान्येव छन्दांस्यत्र प्रयुक्तानि। वंशस्थवसन्ततिलकापृथ्वीमालिनीहरिणीप्रहर्षिणीशार्दूलविक्रीडितानामस्मिन् रूपके प्रयोगः कृतः।

शैली प्रभावोत्पादिकास्ति। यथास्थाने सुभाषितानां प्रयोगेन शैल्याः प्रभावो वृद्धिं गतः। निम्नलिखितानि सुभाषितान्यत्र द्रष्टव्यानि—

१. रहयति महामोहग्रन्थिं धिनोति मनोऽधिकं
जनयति पुनः कार्ये कार्ये परिश्रमलाघवम्।

वितरति शरज्ज्योत्स्नाशुभ्रं यशश्च निरङ्कुशं
किमु न कुरुते नृणामेतन्महाजनपूजनम् ॥

२. दुग्धसागरमुज्झित्वा कुतो लक्ष्मीरुद्गच्छति।

३. अमथ्यमानं दधि न नवनीत मुञ्चति।

४. कुतः पङ्कजिनीं विना राजहंसस्य निर्वृतिः।

५. आमन्त्रितः को मिष्टभोजनं परित्यजति।

६. कस्य पुनरात्मनो जीवितसशये परकीयेऽभिनिवेशः ?

७ गोष्ठी सा विरला न यत्र घटते सत्ता पुरोभागिना
नारी सा खलु दुर्लभा न कुसृतिश्लिष्ट यदीय मनः।
दुष्प्रापं च तदम्बु तीरजरजोराजिर्न यद्दूषयेत्
दुस्साधञ्च सुखं तदाविलयते दुःखानुवृत्तिर्न यत् ॥

८. दोर्भ्यामेव स नक्रचक्रजटिलं वारान्निधि सन्तरेत्
पद्भ्यामेव स लङ्घयेदपगतालम्ब नभोमण्डलम्।
दुस्साधाखिलकर्मसाधनविधौ पाण्डित्यमत्यूर्जित
विभ्राणा सुहृदां कटाक्षलहरी जागर्ति यस्योदये॥

९. निर्व्याजनिर्मलधियां विधुरेषु मन्ये
वीताभिसन्धिकणिकः करुणानुषङ्गः।
किं चातका विदधते हितमम्बुदेभ्यः
किं तर्पयन्ति न पयोभिरमून् पयोदाः॥

अस्यां वीथ्यां कुन्तलराज एव संस्कृते भाषते। अन्यानि पात्राणि प्राकृतं भाषन्ते। तानि कतिपयेषु स्थलेषु सस्कृतपद्यान्यपि पठन्ति। संस्कृतभाषायां कवेः प्रभुत्वं विद्यते। प्राकृत कृत्रिममेव। काव्यपरिपाकदृष्ट्येयं कृतिः सफलैव।

**नाट्यकला**

नाट्यकलायामपि कविना पर्याप्त साफल्यमुपलब्धम्। शास्त्रीयान्नियमाना-श्रित्यैवास्याः प्रणयनं कृतम्। अस्या इतिवृत्तं कविकल्पितम्। नान्दीप्रस्तावनाविष्कम्भकभरतवाक्यादीनां प्रयोगोऽत्र सुष्ठुरीत्या कृतम्। समस्तमितिवृत्तं मुखनिर्वहणयोः सन्ध्योः विभक्तम्। बीजविन्दुपताकाप्रकरीकार्यलक्षणाः पञ्चार्थप्रकृतयोऽप्यत्र सुप्रयुक्ताः। संवादेषु कवेः कौशल दृश्यते। चरित्रचित्रणे कवेः प्रावीण्यं सम्यक्प्रकारेणात्र लक्ष्यते। शास्त्रानुकूलमियं वीथी एकाङ्किकैव। कैशिक्याः शृङ्गारस्य चात्र प्राधान्यं विद्यते। यथास्थान कविना वीरभयानकौ रसावपि

प्रयुक्तौ। दर्शकाः सम्यक् रसोद्रेकमनुभवन्ति। अस्या नेतापि धीरललितः। इयं वीथी आकाशभाषितैः युक्तास्ति। लीलावती नायिकापि कर्णाटराजकन्यास्ति। इयं वीथी द्विपात्रप्रयोजितास्ति।

### अभिनेयता

वीथीयं सर्वथाभिनेया। कथानकपात्रभाषाशैलीदेशकालसंवादादिभिः दृष्टिभिरियमभिनयानुकूलास्ति। सामाजिकैरभिनयार्थं प्रार्थिताया वीथ्याः समस्ता आवश्यकता इयं वीथी पूरयति।

### दोषः

शास्त्रानुसारं वीथ्यामेकाहचरितं भवेत्। परन्त्वस्या वीथ्या अध्ययनेनास्या एकदिवसव्यापित्वं न ज्ञायते। प्रात र्मध्याह्नसन्ध्यारात्रीणां न किमपि ज्ञानमत्र प्रस्तूयते।

## सीताकल्याणम्

इयं वीथी वेङ्कयार्यस्य निर्मितिः। वेङ्कयार्यः महीशूरराज्येऽष्टादशशतके समभूत्। स हंपयार्यवाबांबिकयोः पुत्रः। वेङ्कयार्यः महत्वपूर्णं शासकीयं पदं समलङ्कृतवान्। रामभक्तः स चतुर्दशकलासु निष्णातोऽभूत्। तस्य रूपकनिर्माण-कौशल्यस्य विद्वत्सु सर्वत्र सम्माननमभूत्। औदार्यादिभिः सद्गुणैः कवेः व्यक्तित्व-मुदात्तमभवत्। तस्य प्रतिभा सर्वतोमुख्यभूत्। तेन संस्कृते कन्नडभाषायां च बहवः ग्रन्थाः प्रणीताः। हनुमत्प्रसादादनेन कवित्वसिद्धिरपि समुपलब्धा।

नान्द्यां कविना द्वयोः पद्ययोः रामस्य हनुमतश्च क्रमेण वन्दनं कृतम्। प्रस्ता-वनातो ज्ञायते यदस्याः वीथ्या अभिनयः रसिकजनसभायां मधुमासे समभूत्।

### वस्तु

सीतारामयोः परिणयोऽत्र वर्ण्यविषयः। जनकः यज्ञभूमेः समुत्पन्नायाः सीतायाः

---

1. For a detiled account of Venkayarya's life and works refer to M. P. L. Satri's article published in "The Quarterly Journal of the Mythic Society" Bangalore vol. 31, 1940-41, p. 36-52.

विवाहार्थ मिथिलायां स्वयवरस्यायोजन करोति। स्वशिष्याभ्या रामलक्ष्मणाभ्यामनुगम्यमानः विश्वामित्रो मुनिस्तत्र गच्छति। जनकशतानन्दौ सशिष्यस्य विश्वामित्रस्य स्वागत कुरुतः। राम दृष्ट्वा जनकहृदये इच्छेयं समुदेति यदनेन सहैव यदि सीतायाः परिणयो भवेत्तर्हि महानानन्दो जायेत। शिवधनुरारोपणमेव स्वयवरे पणबन्ध आसीत्।

बहवः बलशालिनः राजानः धनुरारोपणे विफला भवन्ति। रामो धनुः भनक्ति सीतायाः परिणय चानुभवति। भरत-लक्ष्मण-शत्रुघ्नानामपि कुशध्वजसुताभिस्सह परिणयाः भवन्ति। अत्रान्तरे क्रुद्धः परशुरामस्तत्रायाति। रामः स्वशौर्यविनयाभ्यां क्षत्रियाणां कुलद्रोहिणं परशुरामं शमयति। पराजितो परशुरामः स्वस्थान प्रतिनिवर्तते। परशुरामपराजयात् सर्वे आनन्दमनुभवन्ति। सीताया हृदयमपि समाश्वासितं भवति। परशुरामपराजयं श्रुत्वा दशरथोऽपि स्वदारैः सैन्यैश्च सहितो विजयिनं राम द्रष्टुं समुत्सुको विद्यते। रामलक्ष्मणविश्वामित्रादयोऽपि दशरथमनुरञ्जयितुमुत्कण्ठिताः। रामो दशरथं दृष्ट्वा सर्वजनसहितोऽयोध्यां गन्तुकामोऽस्ति। भरतवाक्यानन्तरं रूपकस्य समाप्तिर्भवति।

**नायकः**

रामोऽत्र नायकरूपेण विद्यते। स धीरोदात्तकोटिकोऽस्ति। स नारायणस्यावतारोऽस्ति। दशरथपुत्रः सोऽतीव बलशाली पराक्रमी चास्ति। नवसृष्टिप्रवर्तकः विश्वामित्रो मुनिरपि तमभयं याचते। विश्वामित्रस्य यज्ञं रक्षन् सोऽनेकान् बलिष्ठान् राक्षसान् संहरति। सः सरलतयैव शिवधनुः भनक्ति। स्वशौर्येण विनयेन च स परशुरामस्य दर्पमपहरति।

गुरुचरणे रामस्य प्रकृष्टा श्रद्धा वर्तते। विश्वामित्र प्रति तस्येदृशी श्रद्धा यत् स विश्वामित्रस्याशीर्वादमेव स्वविजयमूल मन्यते। तथा हि, —

विश्वामित्रः—किं ते भयः प्रियमुपहरामि।

रामः—भगवन्, सर्वोऽप्यत्र त्वत्प्रसाद इत्यनुमन्यामहे।

यज्ञावन हरधनु.परिकर्षण च
तज्जामदग्न्यधनुरुन्नमनादि वा यत्।
तत्सर्वमत्र भवतां परमः प्रसादः
प्रस्तौति चेतनदशां यदयं परेण॥

विश्वामित्रोऽपि रामे पुत्रवत् स्निह्यति।

गुरुजनान् प्रति रामस्य हृदयेऽत्यधिकं सम्मानो दृश्यते। दशरथं प्रति रामस्या-

विरला श्रद्धा भक्तिश्च विद्यते। जनकशतानन्दावपि स सम्मन्यते। स जनकस्य विद्याविनययोः प्रशंसकोऽस्ति। गुरुजना अपि राम स्निह्यन्ति। दशरथस्यानन्यःस्नेहः रामं प्रति दृश्यते। शतानन्दः राममव्याजवत्सल मन्यते। जनकोऽपि हृदयेन रामाय सीतासमर्पणं वाञ्छति।

रामः वाग्मी दृश्यते। विश्वामित्रोऽपि रामस्य वाक्चातुर्यं प्रशंसति।

रामः सुन्दरः शीलवान् चास्ति। रामस्य बुद्धिरप्यात्यन्तिकरूपेण प्रखरा लक्ष्यते। लक्ष्मणं प्रति रामस्य स्नेहः सर्वत्र विद्यते।

**नायिका**

सीतात्र नायिकारूपेण विराजते। अस्यां वीथ्यां सा केवलमेकवारं रङ्गमञ्च आयाति। तस्याश्चरित्रमत्र सम्यग्रूपेण न प्रस्फुटितम्। विवाहानन्तरमेव सा रङ्गमञ्चे दृश्यते। दर्शकस्तां स्वसख्या सहालपन्ती विलोकयति। क्रुद्धस्य परशुरामस्यागमनात् सातीव भीतासीत्। परशुरामस्य प्रतिनिवृत्या तस्या हृदयमाश्वस्त भवति। सा लज्जाशीला विनम्रा च वर्तते। यदा सखी परशुरामस्य पराजयस्य कारणं लक्ष्मीरूपिण्या. सीतायाः प्रभावमेव कथयति तदा लज्जिता सीता माल्येन तां ताडयति।

राम पतिरूपेण प्राप्य सीताया हृदय ईदृश उल्लासः वर्तते यत् सा स्वाङ्गानामनीशा भवति। सख्या कृतं रामविषयकमुदात्तं वर्णनं श्रुत्वा सीता शृङ्गारलज्जां नाटयति। दशरथस्य कुलं प्रति विश्वामित्रस्यादरं दृष्ट्वा सीताया मनस्युल्लासो जायते।

**लक्ष्मणः**

रामस्य लघुभ्रातायमतीव प्रखरबुद्धिः। पराक्रमी स गुरुचरणयोः श्रद्धालुर्दृश्यते। जनकस्य विद्याविनययोः सोऽपि रामवत्प्रशंसकोऽस्ति। स जनकं सम्मन्यते। शतानन्दानसार स उर्मिलाया योग्यो वरः। रामं प्रति तस्याविरला भक्तिः दृश्यते।

**विश्वामित्रः**

नवसृष्टिप्रवर्तकोऽयं मुनिः प्रकृत्या मानी विद्यते। स्वयज्ञरक्षार्थं स रामलक्ष्मणा आश्रममानयति। स यज्ञाना कर्तास्ति। रामलक्ष्मणाभ्यां सहितः स स्वयंवरदिदृक्षया मिथिलां गच्छति। रामलक्ष्मणौ प्रति तस्य वात्सल्यं सुव्यक्तमेव। स रामलक्ष्मणयोः श्रद्धाभाजनमस्ति। स रामाय बहुश आशीः प्रयच्छति। जनकशतानन्दयोः हृदये विश्वामित्रं प्रत्यात्यन्तिक आदरो दृश्यते। विश्वामित्रोऽपि प्रेम्णा जनकशतानन्दा-

वालिङ्गति। दशरथमपि विश्वामित्रः बहु मन्यते। विश्वामित्रः बाह्यप्रकृतेरपि सूक्ष्मोऽन्वीक्षको विद्यते।

**जनकः**

मिथिलाधीशोऽयं यज्ञभूमौ सीता लब्धवान्। सीतास्वयवरे स शिवधनुरारोपणमेव पणवन्धेन स्थापयति। मुनिजनसेवकोऽतिथिपरायणश्चायं सशिष्याभ्यां विश्वामित्रस्यागमन श्रुत्वा पुरोधस शतानन्दं पुरस्कृत्य तस्य सम्मानार्थं गच्छति। जनकस्य गतिरनुद्धता, मुखाकृतिस्सौम्या, नेत्रञ्च प्रसादपिशुनमभवन्। नव्यधातुः विश्वामित्रस्य स्वगृहागमनं जनकस्य कृते प्रमोदपरिपूर्णमासीत्। जनकस्य शमः विद्या, विनयश्च सर्वान् जनानाकर्षति। कुशाग्रबुद्धिः जनक आकृत्या वेषेणच रामलक्ष्मणौ क्षत्रियकुमारावनुमिनोति। राम प्रति जनकस्य हृदये प्रारम्भत एव स्नेहो दृश्यते। सीतां रामाय दत्वा स प्रसन्नो भवति।

अस्यां वीथ्यां यान्यन्यानि पात्राणि रङ्गमञ्च आगच्छन्ति तानि निम्नलिखितानि।

(१) नारदः, (२) नारदशिष्यः, (३) जनकपुरोधाः शतानन्दः, (४) कौतुकः, (५) कौसुम्भकः, (६) सीतायाः सखी।

यानि पात्राणि रङ्गमञ्चे नागच्छन्ति परन्तु येषां कार्याणि प्रेक्षकेभ्य सूच्यन्ते तानि निम्नलिखितानि—

(१) स्वयंवर उपस्थिता अनेके राजानस्तेषां सैन्यञ्च। (२) सदारः ससैन्यश्च दशरथः (३) परशुरामः एतेषा पात्राणां चरित्राणि न प्रस्फुटितानि।

**रसः**

शृङ्गारोऽत्र प्रधानो रसः। अत्र सभोग शृङ्गार एव वर्णितः। वीरभयानकयोः रसयोरपि कविनास्मिन् रूपके समावेशः कृतः। परन्तु तावत्र गौणरूपेण प्राप्येते।

**काव्यकला**

काव्यपरिपाकदृष्ट्येदं रूपकमतीव सुन्दरम्। कवेः वर्णनानि श्रुत्वा तस्य सूक्ष्मान्वेक्षिणी शक्तिरनुमीयते। सूर्योदयसूर्यास्तचन्द्रोदयानां वर्णनान्यत्र द्रष्टव्यानि—

**सूर्योदयः**

१. उद्यन्तमद्य कमलानुगुणप्रकाश
उद्गच्छतीव खमणि रुचिरप्रभाभिः।

२. अभ्यागतं सरभसाग्रकरप्रसाद-
व्यस्तानुरागचिरमंबुजिनी करेण।
सद्योभियन्मधुरकोत्पलमालिकांका
सत्य स्वयवंरविकसदुत्कलिका वृणीते।।

३. तमः प्रसारराहित्यविकसन्मुखपङ्कजं
भवनं भाति सर्वत्र सुकरप्रकरादृतम्।।

**सूर्यास्तः**

आभाति वारुण......नित‍ा नितांत
लीलापरिष्कृतशिरोमणिवद्विवस्वान्।
सायतनातपमपूर्वपद विलोक्य
पेयान्तमूहति नवेन्दुरुचिं चकोरः।।

**चन्द्रोदयः**

आनन्दकन्दतुलनामखिलस्य कुर्व-
न्नभ्येत्यय गगनमण्डलमेष चन्द्रः।
आहृत्य सर्वजगतां वितताम्धकार-
व्याजाधिसततमिवोत्सवदानशौण्डः।।

कवेः वर्णनान्यतीव प्रभावशालीनि। मिथिलावर्णनमत्र प्रेक्षितव्यम्—

संदृश्यन्ते पताका· सकनककलशाः स्पर्धमानाः पटैस्स्वैः
स्वर्गङ्गामच्छपूरां समुदितकनकाज्जातां सुजाताम्।
वप्रानश्यूतवप्रद्युतिततिनियमप्यात्तदिग्भिस्तिरास्ते
संस्फांयत्पट्टणश्रीर्हसितसितविभामञ्जरी पुञ्जरीतिः।।

**भाषाशैली**

अत्र सरलैव भाषा प्रयुक्ता। प्रायशः वाक्यानि लघूनि सन्ति। कानिचिद्वाक्यानि दीर्घैः समासान्तपदैश्च युक्तानि। भाषा भावानुकूला, प्रसादगुणगुम्फिता, प्राञ्जला, अर्थाभिव्यक्तौ च समर्थास्ति। अस्याः वीथ्या नाम सूचनार्थ कविनैका प्रहेलिका प्रयुक्ता। तथा हि,

पर्यायनामधेयस्यात्किं वा लाङ्गलपद्धतेः।
काञ्चनस्यापि...... वेङ्कयार्यकृतिश्च का?

अप्रतिहतः प्रवाहः सरलशब्दानां संयोजनञ्च भाषा-सौन्दर्यं वर्धयति। रसानुकूला भाषात्र प्रवाहिता। वेङ्कयार्यस्य गद्यं सरलं, सरसं स्पष्टञ्चास्ति। स्वाभाविकरूपेणैव वेङ्कयार्येणालङ्काराणां प्रयोगः कृतः। कवित्वमाधुर्येण सहैवालङ्काराणां प्रयोगः दृश्यते। निम्नलिखिताया पङ्क्तौ यमकस्य प्रयोगो द्रष्टव्यः—

"यः कौमारपराक्रमक्रमहरः कौमार एवाभवत्।"

परशुरामवर्णनसमये रूपकालङ्कारोऽत्र प्रेक्षणीयः—

"सोऽयं सर्वनृपालपंकजवनीसायं समुज्जृम्भते।"

कवेः भाषासारल्यस्य निम्नलिखितमुदाहरण द्रष्टव्यम्—

जयत्येषा सपज्जयति मिथिलैषा च नगरी
जयत्येषा सीता जयति जनको राजतिलकः।
यदायाति श्रीमाननुजनुषो गाधिज.....
स्वयं रामः कामः क्षपणधनुरारोपणकृते॥

सूक्तीनां यथास्थानं प्रयोगेण भाषा शक्तिमती वर्तते। निम्नलिखिते सूक्ती प्रेक्षणीये—

१. सा विद्या या हृद्या सरसोऽपि यः परवशोऽत्र।
अनभिज्ञा स्वा विद्यामन्योऽन्यतः प्रशसन्ते॥

२. संकल्पकल्पभूजातसान्निध्यमहिमा महान्।
यस्य यद्विषय चेतस्तस्य तत्प्रतिभासते॥

कविना शार्दूलविक्रीडितमन्दाक्रान्तादीनि छंदांसि प्रयुक्तानि। एतेषां छन्दसां प्रयोगः भावानुकूल एव विद्यते।

## नाट्यकला

वीथीयमेकाङ्किका मुखनिर्वहणाभ्यां सन्धिभ्याञ्च सुप्रयुक्ता। शृङ्गारस्यात्र प्राधान्यं विद्यते। एतावन्मात्रमियं वीथी नाट्यशास्त्रसम्मता। परन्त्वियं वीथी पूर्णरूपेण नाट्यशास्त्रनियमान्नानुसरति। निम्नलिखितानि वस्तून्यत्र नाटयशास्त्र-प्रतिकूलानि—

१. अस्या वीथ्याः कथा प्रख्यातास्ति। कथेयं रामायणतः सगृहीता। सीतारामयोः विवाहः रामायणे वर्णितः। परन्तु शास्त्रीयनियमानुसारं वीथ्या इतिवृत्त कल्पितमेव भवति।

२. शास्त्रानुसारं वीथ्यामाकाशभाषितानां बाहुल्यं भवति। परन्त्वत्र एकवारमेवाकाशभाषितं प्रयुक्तम्।

३. शास्त्रानुसार वीथी द्वयेकपात्रप्रयोजिता भवति। परन्तु प्रस्तुतायां वीथ्यामनेकानि पात्राणि रङ्गमञ्च आयान्ति। नारदः, नारदशिष्यः, विश्वामित्रः, जनकः, शतानन्दः, रामः, लक्ष्मणः, सीता, सीतायाः सखी, कौतुकः, कौसुभकः इत्यादयोऽत्र रङ्गमञ्चे दृश्यन्ते। कविना यथास्थानं शुद्धविष्कम्भकस्य प्रयोगः कृतः। स्वगतप्रकाशापवारितानां प्रयोगोऽत्र समीचीनः। यथास्थाने नेपथ्यात् सूचनां प्रदाय कविनेतिवृत्त प्रभावशालि कृतम्। इतिवृत्ते दर्शकानां कुतूहलमभिवर्धयितुं एकस्य पद्यस्य प्रत्येकं पाद क्रमशः चत्वारि पात्राण्युच्चारयन्ति। तथा हि,

लक्ष्मणः—(निर्वर्ण्य, सवैलक्ष्यम्)

आर्येण संभृतमहो हरचापमेतत्

विश्वामित्र—(सहर्षम्)

आनम्य तं च सुतरां करकौशलेन।

जनकः—(सानन्दम्)

आरोपिता च तरसाप्यमुनैवमुर्वी

शतानन्दः—(ससम्भ्रमम्)

अत्रान्तरे झटिति भग्नमभूद्विचित्रम्।।

रामस्योद्वाहः रामपरशुरामयोः कलहश्च रङ्गमञ्चे न दृश्येते। कौतुक-कौसुम्भकौ वैतालिकौ परस्परवार्तालापेन दर्शकानुपर्युक्तविषयं सूचयन्ति। एतत्तु नाट्यशास्त्रसम्मतमेव।

पात्रोचिता भाषाप्यस्मिन् रूपके प्रयुक्ता। सूत्रधारः संस्कृते भाषते नटी प्राकृतभाषायाम्। नारदः, नारदशिष्यः, रामः, लक्ष्मणः, विश्वामित्रः, शतानन्दः, जनकः, कौतुकः, कौसुम्भकश्च संस्कृते भाषन्ते। सीता तस्याः सखी च प्राकृते भाषेते। परन्तु प्राकृतमत्र कृत्रिमम्। नाट्यशास्त्रीयस्य नियमस्य पालनार्थमेव कविनात्र प्राकृतस्य प्रयोगः कृतः।

आत्मनः लघुविस्तारे रूपकमिदं परिपूर्णम्। कविना या घटनास्य रूपकस्य कृते निश्चिता तस्याः सफलविन्यासोऽपि तेन कृतः। स्थानसमययोरपि कविना निर्वाहः कृतः। अस्य रूपकस्य सर्वा घटना मिथिलायां भवन्ति। घटनाया आरोहावरोहयोः शैथिल्यं न दृश्यते। कार्यान्वितिरप्यत्र विद्यते। पात्राणां संवादेषु कविः विशेषेण कुशलः। प्रायशः संवादाः प्रभावशालिनः लघुविस्तारिणश्च सन्ति। न किमपि पात्रमनावश्यक वक्ति। संवादैः समस्तं दृश्यं दर्शकानां समक्षमुपस्थापने कविना साफल्यमुपलब्धम्। चरित्राङ्कनेऽपि कविनोदात्त आदर्शः प्रस्तुतः।

कविरत्रालङ्करणस्यापि सफलं प्रयत्नं कृतवान्। सूर्योदयसूर्यास्तसन्ध्याचन्द्रोदयानां वर्णनैः रूपकस्य शोभायां वृद्धिः सञ्जाता। रूपकेऽस्मिन् कवेः काव्यकौशल्य-

मपि सम्यक् प्रस्फुटितम्। अत्र रङ्गमञ्चे यानि दृश्यान्युपस्थापितानि तानि तु नाट्यशास्त्रविहितान्येव । अभिनयदृष्ट्यापीदमेकं सफल रूपकम्। रसपरिपाक-दृष्ट्यापीदं रूपकं सफलम्। रससिद्धौ कविः सिद्धहस्तोऽस्ति।

कविना यदास्याः वीथ्याः प्रणयनं कृतं तदानीं वीथीनिर्माण नगण्यमासीत्। सूचनेयं कविना नटीसूत्रधारयोः वार्तालापेन प्रस्तावनाया प्रस्तुता। तथा हि,

नटी—(सविमर्शम्) अपुव्वो खु कुलवालियअविह संसारो सरस्सदीये।

(अपूर्वः खलु कुलपालिकाया इव वीथीसचारस्सरस्वत्याः।)

अतः कविनात्रैकस्य विरलस्य रूपकभेदस्य प्रणयने उपक्रमः कृतः। ईदृश्याम-वस्थायां कवेरुपक्रमोऽ्य सर्वेषा विदुषां श्लाघामर्हति।

## ऊनविंशशतकस्य रूपकाष्टकम्

शिवदर्शन तिवारी

### पञ्चायुधप्रपञ्चभाणः

'पञ्चायुधप्रपञ्च' इति भाणः श्रीत्रिविक्रमेन विरचित.। तत्र प्रस्तावनानुसारं कविवरस्य पिता चिद्घनानन्दनाथः भ्राता च त्र्यम्बकः। विविधकाव्यरचनाचणात् त्र्यम्बकादेव त्रिविक्रमेण सस्कृतमधीतम्।[1] अस्य रचना १७२७ शकसंवत्सरे तदनुसारं १८०५ ई० वर्षेऽभवदिति मुम्बईविश्वविद्यालयस्य सूचीपत्रात् ज्ञायते।[2] अतः निश्चितमेव कविवरोऽस्य महाराष्ट्रप्रदेशस्य कस्मिश्चिद्भागेऽष्टादशशतकस्योत्तरार्द्धे प्रादुर्बभूव। रूपककारस्य जीवनमधिकृत्य नाधिकं ज्ञायते। बवईविश्वविद्यालयस्य सूचीपत्रानुसार 'यादवेन्द्रमहोदयम्' इति ग्रन्थस्य रचयिता 'नीलकण्ठः' रूपककारस्य पुत्रः। कविना विरचितेषु ग्रन्थेषु 'कुवलयाश्वविलासम्' 'पञ्चमाणविजयमिति'[3] ग्रन्थद्वयस्यापि[4] सकेतः प्राप्यते। भाणस्यावसाने रूपकरचनाकालसम्बद्धा सूचना कविना प्रदत्ता। तद्यथा—'ऋषिनयनाचलशशिमितशाकवर्षे क्रोधनाभिधे शुक्रे यातः सितद्वितीयासुरगुरुदिन एष पूर्णतां भाणः'। किन्तु कवेः अतीतशारदोत्सवे विसालायां 'भगवत्याः कात्यायन्या' इति वाक्येन वस्तुतः रूपकस्य रचनाकालः १८०४ ई० वर्ष इति निश्चीयते।

---

1. See Prologue of **'पञ्चायुधप्रपञ्चभाण', सम्पादक—विष्णु वासुदेव गाडबोले, प्रा० २६२८।२७, क्रमसंख्या ४११६९ (पूर्ण) ४०४९७ (अपूर्ण)** Sarasvati Bhavan Library, Varanaseya Visvavidyalaya, Varanasi

2. Cat. of Sanskrit & Prakrit Mss. in the University Library Bombay, Mss. No. 2211.

3. Cat. of Sans. & Prakrit Mss. in Bombay Uni. Library,. No. 2211.

4. History of Classical Sanskrit Literature—M. Krishnamachariar, p. 701.

**कथावस्तुः—**

भाणेऽस्मिन् पञ्चायुधस्य विविधप्रपञ्चाना वर्णन वर्तते। मनसिजेन प्रेरितो विटः बहुविधचेष्टा दर्शयति। स्वमित्रयोः कन्दर्पविलासमन्दारशेखरयोः क्रमशः कलहंसलीलाकनकज्योत्स्नाभ्यां सह पारस्परिकः समागम एवात्र प्रमुखोऽध्यवसायः। प्रारम्भेऽस्मिन् विफलीभूतो विटः। पश्चात् भगवती कात्यायनी स्वयमेव कार्यमिद सम्पादयति। कन्दर्पलीलादिदृक्षया कन्दर्पविलासस्य वेष धृत्वा प्रबलदाम इति नाम्नः कुशीलवस्य प्रवेशसूचनानन्तरमेव तथाकथितपुरुषस्य प्रवेशेन प्रयोगातिशयस्य मविधान परिलक्ष्यते। 'तास्विदुसुन्दरमुर्खीषु विराजमाना' इति कन्दर्पविलासस्य कथन भाणस्यास्य वीजम्। भगवत्याः कात्यायन्या तिरस्करणीविद्याविलोपन यावत् मुखसन्धे, अनन्तरञ्च निर्वहणस्य निर्वाह परिलक्ष्यते।

**समीक्षणम्**

रूपकस्यास्य प्रधानपात्र विटः। अयं खलु प्रकृत्या विनम्रः परोपकारपरायणश्च। स गणिकाः कुलाङ्गनाश्च झटित्येव वशीकरोति। शास्त्राणामनुशीलनेन परिमार्जिता अस्य बुद्धिः। भाणेऽस्मिन् सभोगविप्रलम्भशृङ्गारस्य प्राधान्य दृश्यते। प्रभासकौमुद्याः स्तनयोर्द्वयोः बिल्वशङ्कया याचमानस्य ब्राह्मणवटोः प्रसङ्गेन हास्यरसस्याभासो जायते। अत्राश्लीलप्रसङ्गाना बाहुल्यमेव। शार्दूलविक्रीडितमिति प्रमुखं छन्दः। यत्र तत्र छन्दःसु हतवृत्तदोषः परिलक्ष्यते। अलङ्कारेष्वनुप्रासोपमारूपकस्वभावोक्तिकारणमालैकावल्यादीनां प्रयोगो दृश्यते। वृत्यनुप्रासो यथा—

'मलयमरुद्वलनचलदलकचलदलतिलकविलसदलकनन्दातटसीम्नि ........ शशाप निज स्वामी।'अन्त्यानुप्रासो यथा—

पाटीर गौराति-मनोज्ञ-शाटी,
चेटीकरग्राहित-चारुवीटी ।
घाटीगिताभोरुहजातघोटी,
काटीकते तूर्णमितो बधूटी ॥

रीतिषु पाञ्चालीवैदर्भ्यौ गुणेषु च प्रसादमाधुर्ययोः प्राधान्यं वर्तते। भाणस्यास्य गद्यांशः क्लिष्टः, अपेक्षया पद्यांशः सरलः। वेशवाट्याः वर्णनं द्विपृष्ठात्मकमवलोक्यते। अत्र प्रकृतिवर्णनं स्वाभाविकं वर्तते। तद्यथा—

स्कन्धान्सिन्धुरयूथगण्डकषणव्यासक्तदावोदकान्
सेवन्ते मधुपा महीरुहशिरः पुष्पाणि हित्वा भृशम्।

लीयन्ते वलभीकुलायकुहरे निष्पदमेते खगाः,
जिह्वालीढवधूमुखो मृगगणश्छायासु विश्राम्यति ।।

भाणेऽस्मिन् भारतीवृत्तिः प्रयुक्ता। शृङ्गारवर्णने कैशिक्या अपि प्रयोगो दृश्यते। व्यसनासक्तान् तात्कालिकान् जनान् दृष्ट्वा तेषा कल्मषं क्षालयितुमेव त्रिविक्रमस्यास्तीद कृतित्वम्।

सूक्तयः

(१) नहि नित्यो विधिः फलाभिसंधिमपेक्षते।
(२) निरन्तरबहुमानलालिताः सकृदवमानिताश्चे द्वैरिणो भवन्तीति न खलु वितथो लोकवादः।
(३) मैत्रीगलितविस्रम्भे मित्रे न स्थातुमर्हति।
स्थिताप्यलर्कविषवत्कालेऽनर्थाय कल्पते।
(४) नूनं सुतजनिचलिते तारुण्ये स्त्रीषु का रतिर्यूनाम्।
किं विदति मिलिदा गलितमधूलीषु पद्मपालीषु।।
(५) येन केनाप्युपायेन यस्य कस्यापि देहिनः।
संतोषं जनयेत्प्राज्ञस्तदेवेश्वरपूजनम्।।
(६) नृवरैरर्पितकरो गुरुः सत्य पयोधरः।
कृपणं बाधते मध्ये मत्त एव निबध्यते।।

## शृङ्गारकेतुलीलातिलकभाणः

शृङ्गारकेतुलीलातिलकभाणस्य रचयिता केरलीयः भास्करः। कालीकटमहाराजस्य श्रीमतो मानविक्रमस्य (१८०५-१८३७) कोचीनमहाराजश्रीकेरलवर्म्ममहोदय चाश्रितोऽय कविः। तस्य शासनकाले भाणोऽय प्रणीतः प्रकाशितश्च।[1] कविरय सोरनोर-(Shornore) पार्श्ववर्तिनो मुटुक्कुऋषिपरिवारस्य सदस्यः। मुटुक्कुऋषिं प्रति समर्पितश्रद्धाञ्जलिरूपोऽय भाणः 'मुटुक्कुऋषिभाण' इत्यपरनाम्नाऽपि ज्ञायते। केरलप्रदेशस्य विक्रमदेवमहाराजस्य राजसभायामस्याभिनयोऽपि प्रथममभवदिति प्रस्तावनाया ज्ञायते।[2] भाणस्य रचना षोडशवर्ष-

---

1. Kerala's Contribution to Sanskrit Literature : by K.K. Raja p. 118.

2. See Prologue of the Manuscript No. R. 2719. 'विक्रमभूतेः लालाटिकैः परिपूर्णया परिषदा सबहुमानं समादिष्टाः स्म' इति।

वयस्केन कविना कृतेति प्रस्तावनाया सूचितम् ।[1] अस्य सर्वप्रथमा प्रतिलिपिः १९१८-१९ ई० वर्षे कृतेति तके निर्देशितम् ।

कथावस्तु

भाणेऽस्मिन् सत्यकेतुसारसिकयोः पारस्परिकानुरागस्य सम्मेलनस्य च श्रृङ्गारित वर्णन विद्यते। विटचित्रसेनयोर्मेलनपर्यन्त मुखसन्धे, अनन्तरञ्च निर्वहणस्य निर्वाहः परिलक्ष्यते। सारसिकामुद्दिश्य विट-गीतेषु उत्तमोत्तकस्य नट्याश्च ऋतुसम्बद्धनर्ङ्गाते स्थितपाठ्यस्य प्रयोगः परिलक्ष्यते। द्वयोः सत्यकेतुसारसिकयोः पारस्परिकसम्मेलनेन भरतवाक्येन चास्य भाणस्य समाप्तिर्भवति।

समीक्षणम्

विट एव रूपकस्यास्य प्रमुख पात्रम् । अन्येषा भाणाना विटा इव नाय वृथाजल्पक, किन्तु चतुरः, विमृश्यकारी युक्तिवादी चास्ति। अय हि स्वभावेन सौम्यः विवेकशीलश्च। रक्तोष्णीषधारी विट. वैदिकधर्मान् आचरति। कुमारीभिः सह वार्तालापमप्यनुचितं मन्यते।

अत्र श्रृङ्गाराभासः प्राबल्येनानुभूयते। सारसिकायाः प्रेम्णा वञ्चितस्य कस्यचित् पुरुषस्योक्तिषु वीराभासो जायते। अनुचरैः सह गच्छतो भस्मनालंकृतस्य लम्बोदरब्राह्मणस्य वर्णनेन हास्याभासो जायते। भाणेऽस्मिन् वसन्ततिलकेन्द्रवज्रयोः बहुशः प्रयोगो वर्तते तथा च शार्दूलविक्रीडितस्रग्धराशिखरिणीमालिनीद्रुतविलम्बितादीनि छन्दांसि यथास्थान प्रयुक्तानि सन्ति। प्रयुक्तेषु छन्दःसु तेषा नामकरणमपि प्राप्यते। तद्यथा—

(१) मन्दाक्रान्ता गगनमुकुट कर्शितागोपि विश्वम् ।

(२) पुरा भ्राम भ्राम मलयशिखरिण्येष पवनः।

रूपकेऽस्मिन् केषाञ्चिदेवार्थालङ्काराणां रूपकोत्प्रेक्षास्वभावोक्तिससन्देहदृष्टान्तादीनां प्रयोगः कृतः कविना। तिसृणा रीतीनां वैदर्भीपाञ्चालीलाटीनां, गुणेषु माधुर्यप्रसादयोश्च प्रयोगः विहितः। ट वर्गीयाः परुषवर्णाः समस्तसयुक्ताक्षम्पदविन्यासाश्च सर्वथैव परित्यक्ताः वर्तन्ते। प्रायः सरलगद्यपद्ययोः प्रयोगः। प्रातर्मध्याह्नहंसभ्रमरक्रीडादीना प्रकृतिदृश्याना वर्णन प्राप्यते।

---

१. अम्भोधिर्गम्भीरमतिरुपषोडशहायनः।
श्रृंगारलीलानुभवो यस्य प्राग्जन्मनः किल ॥

सूक्तयः

(१) प्रायेण सामग्र्यविधौ गुणानां,
पराङ्मुखी विश्वसृजः प्रवृत्ति ।
इत्याद्युपाकर्ण्य वचः कवीनां,
विवृद्धमन्युर्विदधे विधिस्ताम् ॥

(२) आपत्कालसुहृत् सुहृत्खलु सखे दुर्हृच्च सम्पत्सुहृत् ।

## प्रभावतीहरणम्

विहारप्रदेशवासिना खौआलवशजातेन झोपाहृदयभानुनाथदैवज्ञेन विरचितमिदं रूपकं महेशशर्मणा शोधयित्वा प्रकाशितम्। प्रस्तावनानुसारं रूपककारस्य पिता नन्दनोपाध्यायः।[1] अतः परमधिकं रूपककारस्य जीवनवृत्तान्तो न ज्ञायते। विद्याविभागकार्यालयाध्यक्षेण श्रीपुण्यनाथशर्मणा लिखितया रूपकस्यास्य भूमिकया ज्ञायते यदयं महाराजमहेश्वरसिंहाश्रितो कविरासीत्। महेश्वरसिंहस्य रमेश्वरलक्ष्मीश्वरावास्तां द्वौ पुत्रौ, ययोः कालः ऊनविंशशतकस्योत्तरार्द्धं विंशशतकस्य च पूर्वार्धम्।[2] कृष्णदासेन महेश्वरसिंहस्य राज्यकालः १८३३-१८५३ ई० इत्युल्लिखितम्।[3] रमानाथशिरोमणिना रूपकस्यास्य रचनाकालः १८५०-६० ई० वर्षे स्वीकृतः।[4] श्रीभानुनाथदैवज्ञः बाबूजनझामहोदयस्य सहोदरः। रूपककारोऽयं ज्योतिर्विद्। प्रकृत्या खल्वयं धूर्तः परिहासप्रियश्चासीत्। अस्माद्धेतोः तात्कालिका जना मिथिलाया महाधूर्तं श्रीगोनूझामहोदयमुपमां कृत्वैनं वर्णयन्ति। दैवज्ञेन ज्योतिषशास्त्रस्य व्यवहाररत्नग्रन्थो लिखितः।[5]

**कथावस्तु**

अत्र प्रद्युम्नेन सह वज्रनामदैत्यस्य पुत्र्याः प्रभावत्या आहरणपूर्वकं विवाहो वर्णितः। प्रस्तावनानन्तरं बृहस्पतिना सह महेन्द्रस्य प्रवेशो जायते। महेन्द्रेण

---

१. प्रभावतीहरणम्, प्रस्तावना, पृष्ठ ३।

२. Bihar through the Ages : by Diwakar, p. 733.

३. हमारी नाट्यपरम्परा—कृष्णदास, पृष्ठ २५७-५९।

४. पारिजातहरणम्—रमानाथ शिरोमणि, भूमिका।

५. जयन्ती स्मारक ग्रन्थ (मैथिल भाषा और साहित्य)—जनार्दन झा 'जनसीदन', पृष्ठ २०।

वज्रनाभस्योत्पातान् विज्ञाय कृष्णस्तस्य पुत्री प्रभावतीमाहर्तुं शुचिमुखादीन् हंसान् प्रेषयति। तेषां वज्रनाभपुरगमनं प्रथमाङ्कस्यावसानम्। द्वितीयाङ्के नटादिभिस्सह प्रद्युम्नस्य प्रस्थान भवति। तृतीयाङ्के वज्रनाभस्य गृहे निवसतोः हसीहसयोः साहाय्येन प्रद्युम्नप्रभावत्योः पाणिग्रहण सम्पद्यते। प्रभावत्याः प्रियसमागमलक्षणानि दृष्ट्वा सुनाभस्य बालिके ता पृच्छतः। प्रभावत्यपि स्वविद्यां निवेदयति। स्वविद्याप्रभावेण गृह एव शाम्बगदौ प्रकटय्य तयोरपि पाणिग्रहण कारयति। गृहे वसतां कामुकानां दोषं रक्षकात् ज्ञात्वा वज्रनाभः सुनाभेन सह चतुर्थाङ्के तान्हन्तु प्रतिष्ठते। युद्धे वज्रनाभः प्रद्युम्नादिभिः पराजितो भवति। प्रद्युम्नः शाम्बगदाभ्यां सह ता आहृत्य स्वस्थान गच्छति। ते सर्वे महेन्द्रोपेन्द्रौ प्रणमन्ति। अनया रीत्या भक्तिमयेन श्लोकेन रूपकस्यास्य समाप्तिर्जायते।

**कथावस्तुमूलम्**

रूपकस्यास्य मूलं हरिवंशपुराणे वर्तते। तत्र प्रद्युम्नस्य प्रभावती प्रति कृतस्य बलात्कारस्य वर्णन प्राप्यते किन्त्वत्र हसीहसयोः साहाय्येन प्रभावत्या अभिलाषेण च पाणिग्रहण दर्शितम्।[1]

**समीक्षणम्**

'प्रभावतीहरण'[2] रूपकस्य कां कोटिमुपदधातीति जटिलः प्रश्न.। तत्र विदुषा नास्ति सम्मतिः। विद्याविभागकार्यालयाध्यक्षेण श्रीपुण्यनाथशर्मणा इदं 'त्रोटकमिति' स्वीकृतम्। कृष्णदासेनेदं[3] 'ईहामृगमिति' निश्चितम्। नाट्यशास्त्रलक्षणानुसारं नेद त्रोटकं न चेहामृगः। अपितु कीर्तनियानाट्यपरम्परायामेको विरचितः स्वतन्त्रः प्रबन्धः। कविनाऽपि 'प्रबन्ध' एवेति स्वीकृतमसकृत्।

लोकनाट्यसाहित्ये ईदृशस्य रूपकस्य विभिन्नसंज्ञाः प्राप्यन्ते। यथा वङ्गभाषायामस्य सज्ञा 'यात्रा', गुर्जरप्रदेशे 'भवई', केरलप्रदेशे 'कथकली' तथैव च मिथिलायां 'कीर्तनिया'-शब्देन व्यवह्रियते। 'किरतनिया' 'कीर्त्तन' शब्दस्यापभ्रंशरूपम्। एतादृशि रूपके शिवकृष्णादिदेवतासम्बद्ध-भक्तिभावपूर्ण-गीतानां प्राचुर्य प्राप्यते। इमानि रूपकाणि यद्यपि सस्कृतरूपकमिव नाट्यशास्त्रलक्षणैः

---

१. हरिवंशपुराण, २'९०।
२. प्रभावतीहरणम्—भूमिका, पुण्यनाथ शर्मा।
३. हमारी नाटयपरम्परा—कृष्णदास, पृष्ठ २५९।

सम्बद्धानि, किन्तु लक्षणानि पूर्णतया न समादृतानि। चूलिकायाः स्थाने प्रवेशिकागीतस्य कल्पनात्र वैशिष्ट्यम्।

प्रबन्धेऽस्मिन् चत्वारः अङ्काः वर्तन्ते। कथावस्तु रोचिष्णु कर्तुं मैथिलगीतानि नियोजितानि सन्ति। अत्र प्रद्युम्नः नायकः, नायिका च प्रभावती। वीररसं विहाय नान्यस्य कस्यापि रसस्य निर्वाहः परिलक्ष्यते। वसन्ततिलकाशार्दूलविक्रीडितानुष्टुबादीनि छन्दांसि प्रयुक्तानि सन्ति। नटी प्राकृत वदति। प्रबन्धस्य भाषामृदुमधुरा सरला चास्ति। पद्यापेक्षया गद्यांशस्याधिक्यं वर्तते। प्रकृतिवर्णनस्य अभावः वर्तते। ज्योतिर्विदा प्रति दैवज्ञस्य गूढाक्षेपः प्राप्यते।

रूपकस्यास्य रचनायाः प्रधानोद्देश्य समाजस्य नैतिकमभ्युत्थानमेवास्ति। अत एवाभिनेयतास्य प्रशस्ता।

## अनङ्गजीवनभाणः

'अनङ्गजीवनभाण' इति रूपकस्य रचयिता कोच्चुणिराजभूपालकः।[1] अस्य जीवनकालः १८५८-१९२६ ई० आसीत्। कवेर्वास्तविकं नाम 'रविवर्मा' आसीत्। किन्तु जनाः 'चेरिया कोच्चुणितम्पूरत्ती' इति नाम्ना तमाह्वयन्ते स्म। अस्य मातुः नाम 'इक्कावु तम्पूरत्ती' आसीत्। विविधशास्त्रपारङ्गताना पञ्चभ्रातॄणामपि सकेतः प्राप्यते। 'उन्नीअसन' कविवरस्य पारिवारिकः शिक्षक आसीत। स्वपितृव्याद् गोदावर्म्मतम्पूरनमहोदयादपि गृहीतानेन शिक्षा। गृह एव प्राथमिकीं शिक्षां लब्ध्वा भूपालकेन कोचीननिवासिनः कुञ्ञुणितम्पुरनमहोदयेभ्यः संस्कृतमधीतम्। त्रिपुन्नीत्तूरनिवासी 'इक्कू तम्पूरत्ती' कुम्भकोणनिवासी कृष्णशास्त्री चास्य गुरू आस्ताम्। पश्चात् नाटककारोऽय रचनासक्तोऽभवत्।

---

१. कवेर्जीवनविवरणस्योल्लेखाः निम्नांकितेषु ग्रन्थेषु द्रष्टव्याः—

(A) Kerala Contribution to Sanskrit Lit; by K. K. Raja, p. 249-50.

(B) History of Classical Sans. Lit; by M. Krishnamachariar, p. 664.

(C) Kerala Sahityacaritam; by Ullore, vol. IV, p. 330- 335

(D) Vijnanadipika; by Ullore S. Parmeshwar Iyer, III, p. 215-18.

(E) Introduction to Anangajivana Bhanah; K. Raghavan Pillai, p. 1-7, and Prologue of Vitarajavijaya Bhanah.

अस्य प्रतिभया प्रभावितः कोचीनमहाराजः १९१८ ई० वर्षे 'कविसार्वभौम' इति उपाधिनैन विभूषयामास। कविरयं विविधासु महाकाव्यखण्डकाव्यचम्पू-नाटकस्तोत्रादिषु काव्यविधासु रचना कृत्वा साहित्यं सर्वधितवान्। अनेन विर-चिताना निम्नाङ्किताना ग्रन्थानामुल्लेखः प्राप्यते। तद्यथा—

(१) रामचरितम् महाकाव्यम्।
(२) विप्रसन्देशम् खण्डकाव्यम्।
(३) बाणायुधम् चम्पूकाव्यम्।
(४) अनङ्गजीवनभाणः रूपकम्।
(५) विटराजविजयम् रूपकम्।
(६) श्रीरामवर्म्मकाव्यम्।
(७) देवदेवेश्वराष्टकम् स्तोत्रम्।
(८) अन्यापदेशशतकम्।
(९) सूर्योदयम्।
(१०) देवीसप्तशतीभाष्यम्।
(११) उत्तररामचरितम् भाष्यम्।

बाणायुधचम्पूकाव्यं १८९१ ई० वर्षे विरचितमिति के० के० राजामहोदयेन प्रमाणितम्। न ज्ञायते यदन्येषा ग्रन्थाना रचना कदा सञ्जाता। प्रकाशितयोः विटराजविजयानङ्गजीवनभाणयोश्चापि रचनाकालस्य विवरण नोपलभ्यते।

### कथावस्तु

भाणेऽस्मिन् राज्ञः भद्रसेनस्य आनन्दवल्ल्या सह पाणिग्रहणं वर्णित कविना। विटः शृङ्गारसारःभद्रसेनं तस्यै समुत्सुकयति। राजा वसुमित्रोऽपि तां वाञ्छति। अस्या स्थितौ चतुर्धुरीणः शृङ्गारसारः कौटिल्येन वसुमित्रं पराङ्मुखं कृत्वा आनन्दवल्लीभद्रसेनयोश्च पारस्परिक समागम कारयति।

### समीक्षणम्

अत्र विटः शृङ्गारसारः प्रधानं पात्रम्। शृङ्गाररसस्याभासः प्राबल्येनानु-भूयते। गौणरूपेण वीरवीभत्सभयानकादीनां रसानामप्याभासो जायते। छन्दः शार्दूलविक्रीडितम् प्रामुख्येण प्रयुक्तम्। अनुष्टुब्वसन्ततिलकयोः स्थानमपि विद्यते। अलङ्कारेषूपमोत्प्रेक्षापह्नुतिदृष्टान्तादीनां रीतिषु लाटीपाञ्चाल्योः, गुणत्रयस्य चोजःप्रसादमाधुर्यस्यापि स्थितिः दृश्यते। प्रायशः गद्यपद्यानि समस्त-पदयुक्तानि। बीथीराजपुरयोश्च वर्णने गद्य-रचनाकौशल सविशेष दृश्यते।

अत्र गद्यापेक्षया पद्यस्य बाहुल्यमवलोक्यते। प्राकृतस्य प्रयोगः केवलमेकस्मिन्नेव स्थले परिलक्ष्यते। सूर्योदयचन्द्रोदयवसन्तादीना मनोहर वर्णनं प्राप्यते। वीथी-राजपुरयोश्च वर्णनप्रसङ्गेन तात्कालिक हस्तशिल्पं सम्यक् परिचीयते। विविध-पुष्पैः स्वकेशान् अलङ्कुर्वतीना स्त्रीणामुल्लेखो वर्तते। अद्यापि दक्षिणदेशनिवा-सिन्यः प्रायस्सर्वाः स्त्रियः पुष्पैः स्वकेशान् अलङ्कुर्वन्ति।

कालिकायाः भक्तोऽयं नाटककारः। वेश्याना नूपुरध्वनिभिः तन्द्रितानां जनानां चित्तं भगवन्तं प्रत्युन्मुखीकरणार्थमेवाय नाटककारस्य प्रयासः। भाण-स्यास्य न कश्चित् प्रभाव इति मत्वा तेन 'विटराजविजयम्' इत्यपरो भाणः विरचितः।

## विटराजविजयम्

विटराजविजयमिति भाणेऽपि भूपालकेन राज्ञः भद्रसेनस्य आनन्दवल्ल्या सह पारस्परिकानुरागस्य शृङ्गारित वर्णन विहितम्। एतयोर्द्वयोः पाणिग्रहण-मात्रमेव रूपककारस्य लक्ष्यम्। आनन्दवल्ल्याः स्वयंवरे विभिन्नेभ्यो नेपाल-भूटान-विहार-कश्मीर-श्रीनगर-भोपाल-वन्दल-सिन्धोज्जयनी-जनकपद-पटियाला-भरतपुर-धवलपुर-जयपुर-कोल्हापुरादीनां राजानः समागच्छन्ति। आनन्दवल्ली सर्वान् विहाय केरलेन्द्र भद्रसेनमेव वृणोति। अनया रीत्या द्वयोरस-मागमेन भाणस्यास्य सुखमयमवसान जायते।

**समीक्षणम्**

अत्रापि शृङ्गारसार एव प्रमुख पात्रम्। अत्र सभोगशृङ्गारस्य प्राधान्यं परिलक्ष्यते। वीरहास्ययोश्च रसाभासत्वेन व्यञ्जनामिति। छन्दसु स्रग्धराव-सन्ततिलकयो, गुणेषु ओजःप्रसादयोः, अलङ्कारेषु चोपमानुप्रासापह्नुतिदृष्टान्त-सन्देहादीना प्रयोगो वर्तते। राजपुरवेशवीथीस्वयवरमण्डपादीना वर्णने समस्त-प्रायं गद्यम्। यत्र तत्र प्राकृतस्य प्रयोगो दृश्यते।

प्रकृतिवर्णनेषु चन्द्रोदयसूर्योदययोश्च वर्णनमसकृत विद्यते। सन्ध्यावर्षा-भृङ्गकोलाहलवसन्तकन्दुकक्रीडादीना वर्णन शृङ्गारित वर्तते। विचित्रपताका-विलासललितानां राजपुराणा, उत्तुङ्गसौधाना, स्फटिकप्रणीत तुङ्गवप्रवेदिकोटितटे-मण्डपाना च वर्णनेन तात्कालिक-समाजसस्कृत्योश्चानुमान जायते।

**सूक्तयः**

(१) दुरूह ससारे दुरितसुकृताना फलमहो।

(२) लोके हि सर्वेषां कारण कर्मैव।
(३) वस्तुप्रियं, विदुषि ! दैवगतिर्हि वक्रा।
(४) वायोर्विटानां भृङ्गाणां,
विद्युतां योगिनामपि।
कुत्रापि न स्थितिर्लोके,
क्षणार्धमपि विद्यते ।।

## पारिजातहरणम्

वङ्गदेशवासिना श्रीरमानाथशिरोमणिना बिरचितं पारिजातहरणमिति नाटकम्। लेखकस्य जीवनवृत्तान्तः न ज्ञायते। नाटकस्यास्य प्रणयनं छात्राणामनुरोधात् कृतमिति विज्ञापनपत्रेण विभाति। विज्ञापनपत्रानुसारमस्य कवेः स्वभावस्य परिचयः प्राप्यते। कविरय प्रकृत्या महोपकारी आसीत्। अस्य गृहे बहूनां सच्छात्राणा कृते शिक्षायाः निःशुल्कभोजनस्यापि व्यवस्था आसीत्। एतेषा परिवारोदरपरिपूरणमात्रमेव शिरोमणेः जीवनस्योद्देश्यमासीत्।

विषमविषयव्याख्यया समलङ्कृतस्यास्य नाटकस्य भूमिकया केवल लेखनस्य मुद्रणस्य च कालौ ज्ञायेते।[1] ग्रन्थस्यादौ शिरोमणिना लिखित विज्ञापनमनुसृत्य रूपकस्य निश्चितः कालः (१८९९ ई०) निश्चीयते। तद्यथा—'कथञ्चिदर्थं संगृह्य कलिकाता–भवानीपुरस्थपण्डितवरश्रीवरदाकान्तविद्यारत्नमहोदयोपरि मुद्राङ्कणभारो न्यस्तः। तस्मिंश्च महानुभावे तदपरिसमाप्य स्वदेशं गतेऽवशिष्टमुद्राङ्कणभारो गिरीशविद्यारत्नयन्त्रे निक्षिप्तः। इत्थमेव चातीताः पञ्चवत्सराः'।[2]

### कथावस्तु

इन्द्रपुरतः समागतः नारदः कृष्णाय पारिजातपुष्पमर्पयतीति प्रथमाङ्कस्य विषयः। अनेन पुष्पेण कृष्णो रुक्मिण्याः केशमलङ्करोति। कलहप्रियो नारदः

१. कलिकाता तालतला - भारती - चतुष्पाठी - नामक-विद्यालयाध्यापकेन श्रीमदाशुतोषविद्याभूषणेन नाटकमिदं संशोध्य, कलिकाता डाक्तार्स-लेनस्थ-पंचम-संख्याकसद्मतः प्रकाश्य, कलिकाता-महानगर्यां गिरीश-विद्यारत्न-वर्त्मस्थ-चतुर्विंश संख्यकसद्मनि गिरीशविद्यारत्नयन्त्रे श्रीशशिभूषण-कृतिरत्न भट्टाचार्येण १८२६ शाकाब्दे ग्रन्थोऽयं प्रकाशितः। द्रष्टव्यम्-पारिजातहरणस्य भूमिका, पृष्ठ २।

२. तत्रैव, विज्ञापनपत्रं, पृष्ठ ३।

विक्षिप्त च दर्वीचिवीर्यवलितं वज्रं वृथा कारयन्,
जीयाच्चञ्चुपुटो ममैष शमनस्याकाण्डदण्डोपम ।।

नाटकस्यास्य प्रतिनायकः दर्पान्ध इन्द्रः। स्वपुर्या ससैन्यकृष्णस्यागमनं श्रुत्वा क्रोधावेशेन इत्थं प्रलपति--

(१) सज्जीकृत्य धनुः पिधाय कवचं गात्रेऽङ्गुलीय करे,

(२) पादाघातेन देवालयमपि चलयन् गर्जितेन त्रिलोकीम्,

..................................

प्रथमाङ्कस्य प्रस्तावनानन्तर विहितः कृष्णरुक्मिण्योर्मध्ये प्रेमालापः श्रृङ्गार-रसं पारिजातपुष्पहेतोश्च मानिन्याः सत्यभामायाः दयनीयदशा करुणरसमुत्पादयतः। चतुर्थाङ्के कृष्णविदूषकयोर्मध्ये प्रचलितासु वार्तासु हास्यरसस्य निर्वाहः परिलक्ष्यते। कृष्णस्य प्राणिभिर्दीयमान समग्रफलप्राप्तिसम्बद्ध कथन निशम्य विदूषक इत्थं वक्ति--

'यद्येवं तदेतावत् फल किं कर्त्तव्यम्? तेषामेकं फल पक्वं दृष्ट्वा मह्य दातव्य तत एव क्षुधाकुलस्य ब्राह्मणस्य मे भोजन भवत्विति'।[1]

प्रयुक्तेषु बहुषु छन्दःसु शार्दूलविक्रीडितवसन्ततिलकाशिखरिणीति छन्दसां बाहुल्यमत्रावलोक्यते। अलङ्कारेषूपमोत्प्रेक्षायमकरूपकदृष्टान्तादीना प्रयोगो वर्तते। रीतिषु वैदर्भी पाञ्चालीलाट्यादीना, गुणेषु च प्रसादस्य वर्णनानि प्राप्यन्ते। द्वारावतीवर्णनं विहाय कुत्रापि समस्तपदाना चयनं, गम्भीरध्वन्युत्पादक-शब्दानां च प्रयोगः नैवावलोक्यते। स्वाभाविकमालङ्कारिक च प्रकृतिचित्रणम्। यथा प्रभातप्रायायाः रजन्याः चित्रणम् --

'यतः कुमुदिनी संभोगसुखसयापितसमस्तरजनीजागरणपाण्डरितसकलशरीरे पश्चिमोदधिमवगाहितुमिव धावति भगवति कुमुदबान्धवे आशावधूस्कन्धनिवेशितयामिनी कुचकुङ्कुमारुणितकरनिकर उदयगिरिशिखरमारूढो यामिनीपति-गमनपथमवेक्षमाणा इवावेक्ष्यते भगवान् सहस्रकरस्तदपूर्वेय रमणीयता प्रभात-समयस्य' इति।

मध्याह्नस्य यथा--

मरीचिकायां सलिलभ्रमेण धावद्भिरेणैश्च पिपासयार्तैः।
प्रतप्तपांसौ पथि दुष्प्रयातेरस्माभिराक्रीडत इत्यवैव।।

---

१. गीता, ९।२७ 'यत्करोषि यदश्नासीत्यादि श्लोकस्य भावसाम्यमत्र परिलक्ष्यते।'

महाकविभवभूतिभट्टनारायणयोः नाट्यनैपुण्येन प्रभावितोऽयं कविः तत्सदृशानां गण्डादिनाटकीयसंकेतानां प्रयोगं करोति। तद्यथा—

अश्वपालः—देव! उन्मूलित[1] सः।

वासवः—(साशंकम्) अहो खलु केन ?

अश्वपालः—देव !.........हरिणा कुपितेन।

वासवः—आः का शक्तिरस्ति दुरात्मनो गोपसुतहतकस्य यत्पारिजातस्य च्छायामप्यवलम्बितुम्? शस्त्र शस्त्रं (इति सोद्धतमुत्तिष्ठति)

अश्वपालः—देव! प्रसीद प्रसीद, कथमन्यथा शङ्कते भवान्...।

'वेणीसंहारनाटकस्य' चतुर्थाङ्कस्य सुन्दरकइव अत्रापि पुष्पदन्तः युद्धविभीषिकायाः बहुपृष्ठात्मकं विवरणं महादेवं श्रावयति। आधुनिकचलच्चित्रसङ्गीतमिव अत्रापि उत्तरप्रत्युत्तरपरकसङ्गीतस्य आयोजनं कृतं शिरोमणिना। तद्यथा—

रविरभिसरति चरमगिरिशिखरे,
रजनीसंकेतित भुवि रुचिरे।
सखि हे! परिणतमेति दिनं विषमम्॥ध्रुव॥

प्रथमा—मृदु मृदु विकसति कुसुम सकल,
द्वितीया—कूजत्यलिकुलमति-मधुरकलम्।
प्र०—परिमलवाहिवहति मृदुपवने,
द्वि०—किमपरमधिकसुखं सखि! विपिने।
प्र०—कलय रुवन्तं पतगनिकाय,
द्वि०—शुभमुपतिष्ठति सम्प्रति सायं।
प्र०—श्रीपति-सुरपति-समर विरामः,
द्वि०—सम्प्रति चल सखि! वयमपि यामः।
प्र०—हिमगिरितनयागम इह विपिने,
द्वि०—सुशमित-हरि-सुरपति-विषम रणे।
प्र०—तामवलोकय सफलय नयने,
द्वि०—न कुरु विलम्बमधुना गमने।
प्र०—यत्न कुरु कुसुमावलिचयने,
द्वि०—रचयाञ्जलिमपि तस्याश्चरणे।

---

१. 'उन्मूलित' इत्यत्र तृतीयः पताकास्थानकः। (हरिणा अश्वेन स यूप उन्मूलित इति अश्वपालस्य कथनस्याभिप्रायः)।

प्र०—जगदिदमखिलं शान्ति लभतां
द्वि०—गीतिरियं मुदमधिक तनुताम् ।।
अत्र गीतितत्त्व जयदेवस्य गीतगोविन्दमनुहरति।

सूक्तयः

(१) कुजनो धनमासाद्य मदमेवातनोत्यलम्।
भुजङ्गमाः पयः पीत्वा विषमेवोद्गिरन्तिहि।
(२) दारिद्रचभीमभुजगो दशतीह मर्म।
स्फीता भवत्यतितरा सह भिक्षया सा ।।
(३) नाश प्रयाति सजनापरमानलज्जा।
सर्व विष सुखकरन्तु यदस्ति लोके।।
कतिपयसूक्तयः भर्तृहरिशतकस्य पद्यान्यनुहरन्ति।

## रम्भारावणीयम्

श्रीसुन्दरवीररघूद्वहसूरिणा विरचितमिद रम्भारावणीयमिति रूपकमीहामृगकोटिमध्यास्ते। सूरिणः जीवनवृत्तान्तः 'सागरिका' सस्कृतपत्रिकायाः चतुर्थवर्षस्य द्वितीयाङ्के प्रकाशितो वर्तते।

**कथावस्तु**:—रूपकेऽस्मिन् कुबेरपुत्रस्य नलकूबरस्य पत्न्या रम्भया सह केकसीसूनोः रावणस्य रिरसा-प्रयत्नव्यापारस्य वर्णन मुख्यमितिवृत्तम्। रम्भां विना परिखिन्न स्वभ्रातृव्यं नलकूबरं वीक्ष्य रावणोऽपि तामन्वेष्टु प्रयतत इति प्रथमाङ्के वर्णितम्। कार्येऽस्मिन् रावणस्य साहाय्य कुर्वन् शार्दूलः वाणासुरस्य चारैः गृह्यते। इममुदन्तं श्रुत्वा रावणः क्रोधाभिभूतो जायते। अपरञ्च वाणासुरेण स्वप्रेयस्याः गन्धोदर्या अपहरणं विज्ञाय तं धिक्करोति। किन्तु युद्ध एव बाणासुरस्य सेनापतिना चित्राङ्गदेन शूलारोपणाय गृह्यते। रावणस्य वयस्यो, दर्दरः प्रजापतिमिममुदन्तं निवेदयितुं प्रतिष्ठते। तस्य प्रस्थानेन प्रथमाङ्कस्यावसान जायते। द्वितीयाङ्के लोकेशस्य प्रार्थनया द्रवीभूतो बाणासुरः रावणं विजहाति। कामाभिभूतो रावणः युवतिभिस्सह सरोवरे क्रीडन्तं कार्तवीर्य वीक्ष्य तासु आसक्तो जायते। ताभिस्सह स्वच्छन्दं विहाराय स्वमित्रेण प्रहस्तेन सह परामृश्य अर्जुनरूपं धारयित्वा च प्रतिष्ठते। अनया रीत्या द्वितीयाङ्कस्यावसान जायते। तृतीयाङ्के कपटपूर्वकं ताभिस्सह रन्तु यतते। किन्तु विफलमनोरथो भूत्वा कार्तवीर्येण गृह्यते कारागारे निक्षिप्यते च। चतुर्थाङ्के परमेष्ठिना दशाननाय प्रदत्ता रम्भासम्बद्धा सूचना प्राप्यते। रावणः स्नुषया रम्भया सह बलात् रमते। रम्भायाः वृत्तान्तं श्रुत्वा

नलकूबरः रावणं शपति। दशाननोऽपि रम्भाया विमुखो भूत्वा स्वप्रेयस्याः मन्दोदर्याः मन्दिर गच्छति। भरतवाक्येन सह रूपकस्यास्यावसानं जायते।

**कथोद्गमः**

रूपकस्यास्य कथावस्तुनो मूल महाभारतम्। रम्भा एका प्रसिद्धा अप्सराः कुबेरसभाया नलकूबरस्य पत्नी सती निवसति स्म। एना प्रत्येकदा रावणः विजहास। फलतो नलकूबरः रावण शशाप। अस्माद्धेतोः रावणो रामेण हतः। कथेयं महाभारते वर्णिता। प्रसिद्धामिमा कथामाश्रित्य रूपककारेण रावणस्य रम्भायामासक्ति. दर्शिता। अत्र रावणस्य दुष्प्रवृत्तीनामतिरञ्जनमेव सूरिणः प्रधान लक्ष्यम्।

**वस्तु**

रूपकेऽस्मिन् चत्वारः अङ्काः सन्ति। कथावस्तु मिश्रमैतिहासिकमुत्पाद्यञ्च। त्रयाणा मुखप्रतिमुखनिर्वहणसन्धीना निर्वाह. परिलक्ष्यते।

**नेता**

नायकोऽत्र नलकूबरः नायिका च रम्भा। रावणोऽत्र प्रतिनायकः। रावणः प्रकृत्या प्रमत्त उद्धतश्च। नलकूबरस्य औद्धत्यवर्णन नोचितम्।

**रसः**

अत्र वीररसस्य प्रधानत्व दृश्यते। शृङ्गाररसस्य केवलमाभासमात्रमेव जायते।

**छन्दोऽलंकारौ**

वसन्ततिलकाया. छन्दसः प्राधान्यम्। उपेन्द्रवज्राशार्दूलविक्रीडितोपजात्यनुष्टुबादीनि छन्दासि यथास्थान प्रयुक्तानि सन्ति। उपमातिशयोक्तिश्लेषरूपकादीनामलङ्काराणां विशेषतः प्रयोगः समुपलभ्यते। तथाहि श्लेषः—

सुरस्त्रिगोत्सुकेनेतो वैदग्ध्य मण्डयिष्यति।
गीतवादित्रनृत्ताद्य गच्छतच्छर्मभूतये॥

**रीतिगुणौ**

रीतिषु गौरीपाञ्चाल्योः रीत्योः माधुर्यप्रसादयोः गुणयोश्च प्रतिष्ठा परिलक्ष्यते। तथा हि गौडीरीतिः ओजोगुणश्च :—

बाणं पाणिधनुर्गलत्खरगरुत्कौशेय-वेषस्फुरत्,

बाणाग्रेणँ निहत्य दोर्दशशत छित्वासिना दद्मि तम् ।।इति।।

अत्र सर्वासा वृत्तीना प्रयोगो वर्तते। रूपकस्य पूर्वरङ्गविधान संक्षिप्तमेव। नान्दीपाठमात्रेणैव कथावस्तुसूचनया रूपककारस्य द्विगुणितचातुर्य स्फुटति। शिशिरवसन्तविपिनमरुन्नर्मदासूर्योदयजलक्रीडादीनां शृङ्गारित स्वाभाविकं च वर्णन प्राप्यते। यत्र तत्र सूरिणा दाक्षिणात्यसंस्कृतेः सकेत प्रदत्तः। रूपकस्य तृतीयाङ्के रावणार्जुनौ विदूषक प्रणमतः। अर्जुनस्य प्रणमनविधौ भिन्नत्व परिलक्ष्यते। स तु इत्थमेव वक्ति—'नमोऽस्तु यद्ब्राह्मणोऽसि।' कथनस्याभिप्रायोयत् दक्षिणदेशीयाः ब्राह्मणाः केवल जातिमात्रमेव सम्मानयन्ति।

रूपकेऽस्मिन् पद्यापेक्षया गद्यभागस्याधिक्य वर्तते। गद्यांशेषु क्वचित् समस्तपदाना प्रयोगो दृश्यते। तथा हि—

'सखि, मन्मथदहनजिह्वाशुगगृहीतहृदययोरावयोर्गतिर्भवति मन्दगतिसदागतिपरिस्पन्दितपर्णसन्दोहसछादितचारुचाम्पेयाटवीगहनकुहरावगाहनमिति।' ईदृशी कठिना भाषा रूपकयोग्या नास्ति।

**सूक्तयः**

(१) भवति वा पलालजालः प्रत्यर्थी पावकस्य।

(२) निक्षेपस्यानभिज्ञो यश्चिक्षेप तृणसञ्चये।
इति लोकगिर मूढः प्रावर्तयति कर्मणा।।

(३) श्रेय एव नरस्त्रीणां तादृशी यदि ते दया।
आतपक्लान्तसस्यैः किं वर्षधारा निवार्यते।।

(४) परिणामेन वयसामुद्गमस्तनयोरिव।
श्रेयसां परिपाकेन कृतिनां स्वस्ति जायते।।

(५) सुधिया वचनभ्रंशो भवेत् काले समागते।
अम्बुजानाहि श्रीभ्रंशो हेमन्तसमये यथा।।

(६) अल्पस्य यदि भूपत्वमभ्रमभ्येति लाघवात्।
गौरवादुत्तमो नम्रस्तुलायामेष निर्णयः।।

(७) यो भुवि मृदुस्वभावो लाघवमभ्येति तूलराशिरिव।
क्रूरैश्चरित्रैः पूज्यः सर्वत्राऽस्य सदाश्रयाश इव।।

(८) माधुर्यं रसनाकटाक्षयुगल रोचिः शुभं भारती,
श्रोत्रानन्दकरी श्रुतिस्त्वगतुलं सौख्य सुखस्पर्शजम्।

ज्ञात्वाऽपि स्वयमुत्तरोत्तरतया तृप्तिं विना भुञ्जते,
तद्वन्मैत्रस मिथः प्रणयिनोश्चेतोऽनुभुङ्क्तेतराम् ।।

## प्रपन्नसपिण्डीकरणनिरासः[1]

### कवि-परिचयः

'प्रपन्नसपिण्डीकरणनिरास' इति रूपकस्य रचयिता मद्रदेशस्य मञ्चलगड्डा-(Manchalagadda) निवासी श्रीघट्टशेषाचार्यमहाभागः। अस्य पिता कविता-र्किकपरिवारेण सम्बद्धः वधूलगोत्रोत्पन्नःश्रीरामानुजाचार्यः। श्रीएम०कृष्णामाचारी-महोदयानुसार नाटककारोऽयमूनविंशशतकीयः।[2] रूपकस्यास्य रचनाकालः न सम्यङ् निर्णीतः। मद्रदेशतः २१ क्रोश दूर वेगवतीनद्यास्तटे विराजमानायाः काञ्चीनगर्याः[3] वर्णनमत्र प्राप्यते। विद्वत्कुलप्रसूतोऽयं कविः मध्यकालीननव्य-नैयायिककोटिमध्यास्ते। शास्त्रार्थप्रियस्यास्य कवेः, पुरुषद्वययोर्मध्ये पारस्परि-कवार्तालापेन, बुद्धिवैशद्यस्य शास्त्रार्थवैदग्ध्यस्य च परिचयः प्राप्यते। धर्मसम्बद्धान् सुविदितान् सन्देहपदेषु दोलायमानान् नियमान्नाट्यरीत्या मनोरञ्जकशैल्या च सुखं बोधयितुमेवास्त्यय प्रयासो नाटककारस्य। इय हि युगस्य नवीनप्रवृत्तिः।

### कथावस्तु

रूपकेऽस्मिन् प्रपन्नानां सपिण्डीकरणसमस्यां प्राचीनपाश्चात्ययोः पुरुषयोः पारस्परिकविवादेन साधयितुं चेष्टित कविना। स्वमतस्थापनात्पूर्वमनेन मन्सल-कट्टइवेदान्ताचार्य-तिरुप्पुटकुलीश्रीकृष्णताताचार्ययोश्च (Mansālkattai Vedāntacarya & Tirupputkuli Srikrsna Tatacharya) मत उद्धृते। आद्यकविमतानुसार प्रपन्नाना सपिण्डीकरणं निषिद्धम्। ताताचार्य-महोदयानुसार प्रपन्नानामपि सपिण्डीकरणं कर्त्तव्यम्। कविना खण्डित परवर्ति-कविमत स्वीकृत चाद्यकविमतम्।

नाटकमिदमपूर्ण प्रतीयते। यद्यपि हस्तलिखितग्रन्थे कुत्राप्यपूर्णतासम्बद्धा चर्चा न समुपलभ्यते। रूपकस्यावसाने 'अतःसपिण्डीकरणस्य नित्यत्वमावश्यकमि'ति

---

१. प्रपन्नसपिण्डीकरणनिरासस्य प्रस्तावना, श्लोक ६, पृष्ठ १।

2. History of Classical Sanskrit Literature; M Krsnam-achariar P. 684

३. 'काञ्ची' is the old name of modern Conjeeveram very near to Madras city.

सिद्धान्तवाक्यं परिलक्ष्यते। नाटकस्य नामकरणानुसारं सर्वथा भिन्नोऽयं सिद्धान्त-निष्कर्षः। यतोहि कविवरस्याभिप्रायः सपिण्डीकरणस्याविधाने स्फुटति नैवविधाने।

समीक्षणम्

प्रस्तावनां नान्दी च विहाय न सन्त्यत्रान्यानि कानिचिद्रूपकलक्षणानि। प्रस्तावनाया मुख्यकथायाः सूचना दत्त्वा आकाशाद् दिव्यपुरुषयोः प्रवेशं कारयित्वा तयोराध्यक्ष्ये पण्डितद्वयस्य वार्तालापेन कविना विषयस्यास्य प्रतिपादनं कृतम्।

वीर एवात्र प्रधानो रसः। वृत्तिः सात्त्वती। भाषा न्यायसम्मतम्। नागेशभट्टस्य परिभाषेन्दुशेखरे यादृशी भाषाशैली दृश्यते, तादृशी एवात्र परिलक्ष्यते। छन्दःसु शिखरिणीस्रग्धरामालिनीतोटकोपेन्द्रवज्रावसन्ततिलकाशार्दूलविक्रीडितेन्द्रवज्रा-भुजङ्गप्रयातादीना प्रयोगोऽवलोक्यते। किन्तु रूपकस्य अनुष्टुब् एव मुख्य छन्दः। अलङ्कारेषूपमारूपकयोरेव प्रयोगः प्राप्यते। रीतिषु वैदर्भीपाञ्चाल्योः गुणेषु च प्रसादौजसोश्च प्रसरः विद्यते। अत्र श्लोकाः सरलाः विद्यन्ते। गद्यभागस्तु तर्क-वशात् क्लिष्टतमो वर्तते। प्राकृतस्य सर्वथा बहिष्कारः विद्यते। सूक्तिनीति-वाक्ययोरपि अभावो वर्तते। रूपकलक्षणानि अनादृत्य केवल विषयप्रतिपादनमेव कृतं लेखकेनेति वैशिष्ट्यम्।

# रणेन्द्रनाथगुप्तस्य हरिश्चन्द्रचरिम्

गुलाबचन्द्र जैनः

वंगवासिना 'कविराजेन' रणेन्द्रनाथ-गुप्तेन १९११ ई० वत्सरे विरचितं 'हरिश्चन्द्रचरितम्'¹ इत्यभिनव नाटकम् आधुनिकसंस्कृतसाहित्ये महद्वैशिष्ट्यं भजते। महाकविर्भवभूतिर्यथा 'उत्तररामचरिते' कारुण्यस्य प्रतिष्ठां कृत्वा सर्वेषु रसेषु तत्प्राधान्यमुद्घोषयामास, नाट्यकारेण गुप्तेन तथैव अस्मिन्नभिनवे नाटके करुणरसस्य चरमोत्कर्षः प्रतिपादितः।

## कथा-विन्यासः

नाटकेऽस्मिन् पुराणप्रसिद्धस्य सत्यवादिनो महाराजहरिश्चन्द्रस्य चरितमवलम्ब्य कविकल्पनारञ्जिताना विविधघटनाना सघटन विद्यते। धर्मस्योत्कर्षप्रदर्शनं हि नाटकस्यास्योद्देश्यम्। रूपकस्यारम्भे महर्षेः 'कौशिकस्य' 'धर्मस्य' च विवादो वर्तते। कौशिकः परमपदप्राप्तये धर्मस्य देवस्य वा प्रभावं निराकृत्य तत्रात्मनः कर्मैव साधनमिति मनुते। तद्यथा—

"कर्मणा जायते लोकः कर्मणैव प्रलीयते।
कर्मपाशविनिर्मुक्तः प्राप्नोति परमां गतिम्॥"

स्वयमपि च देवानामुपरि स्वाधिपत्यार्थ स कठोर तपश्चरितुमुद्यतते। अपरतश्च 'धर्मः' महर्षेस्तद्विषयकमहंकार निन्दयन् स्वप्रभावस्योत्कर्षत्वमातनोति। तन्मतानुसारं सत्यभाषण-दया - दानादिधर्माचरणेनैव जनस्तत्पदमवाप्तु शक्नोति। पात्रद्वययोर्मध्येऽयमेव सिद्धान्तविरोधो नाटकस्य मुखसन्धौ प्रदर्शितः। तत्र नाटके राज्ञो हरिश्चन्द्रस्य चरित निकषत्वेन सामाजिकानामग्रे समुपस्थित क्रियते, यत्र पक्षद्वयस्य संघर्षण प्रदर्श्य नाटकान्ते 'धर्मस्य' विजय उद्घोषितः।

प्रथमाङ्के महर्षेस्तपोभङ्गाय 'विघ्नराड्' उद्यतो दृश्यते। किन्तु आश्रमद्वारे जागरूकस्य महाव्रतस्योपस्थित्या स नान्तःप्रवेष्टुं समर्थः। अत एवं स मृगयानु-

१. वाणीप्रेस-कलिकातानगरात् १९३७ वंगीयाब्दे (१९११ ई०) मुद्रितम्।

रागिणो राज्ञो हरिश्चन्द्रस्य तत्रागमनाय योजनां विधाय तत्तपोभङ्गाय यतते। तदनुसार स मायया वराहस्य रूपं धारयित्वा राजनगरस्य समीप वने वनेचरान् वनसम्पदञ्च विनाशयितुमारभते। कस्माच्चिद् वनेचराद् वृत्तमिदमाकर्ण्य राजा रक्षाहेतोस्तत्र गच्छति। तत्र क्षतदेहमात्मनः प्रियसहायक 'वनेराजम्' अवलोक्य स दु खितो भवति। फलतः प्रक्तनेत्रः स निरन्तर बाणान् क्षिपन् मायाविनं तद्वराह-मनुसरति, समायाति च अकस्मात् कौशिकस्याश्रमम्। तत्र महर्षिणा प्रज्ज्वलितेऽग्नौ क्षिप्यमाणाना विद्यानामार्तनाद श्रुत्वा भयातुराणा रक्षकः स राजा अज्ञानवशात् महर्षेः कौशिकस्योपरि यदा शरक्षेपण चिकीर्षति तदैव महर्षेस्तपोध्यान त्रुट्यति। क्रुद्ध एवासौ राजानमकस्मात् तत्कर्तव्यविषये पृच्छति। राज्ञः मुखाच्च—

"दातव्यं द्विजदीनेभ्यो रक्षितव्या भयातुराः।
धर्मनीतिमनं युद्ध कर्तव्य धरणीभृताम्॥"

इति राजादर्श श्रुत्वा तस्य पुत्र भार्या च विहायाखिलं भूमण्डलं तं याचते। मासेन च राजसूय-दक्षिणारूपेण लक्षैकमुद्रामपि याचते। राजा तद्वचनपालनाय बहुविधकष्टानि सहित्वा अन्ततः स्वपरीक्षायां साफल्य लभते।

एतस्मिन् कथा-विन्यासे नाट्यकारेण नवीनवृत्तानि उद्भावितानि, यतो नाटकमिदमौदात्यगुणसम्पन्नम्, अभिनेय प्रभावशालि च सञ्जातम्। महर्षेः समीपं राजानं प्रेषयितु 'विघ्नराट्' इति पात्रस्य कल्पनायां नाट्यकर्तुः प्रतिभावै-शिष्ट्यं दृश्यते। इत. पूर्व महर्षिरपि कठोरहृदयः प्रतिपादितः, यतो हि राज्ञः भाविवृत्तान्यवलोक्य तस्य हृदय दयाद्रवीभूत न भवेत्। राज्ञः सकलवृत्तानि कौशिक-धर्मयोर्विवादमनुसृत्य समापद्यन्ते। धर्ममाश्रित्य राजा कौशिकस्याश्रुतपूर्वाणि कटुवचनानि कठोरादेशान् च सहमानोऽपि आत्मनः कर्तव्यं न विस्मरति।

कस्यचिदपि भाविवृत्तस्य संयोजनात्पूर्व नाट्यकारः तस्य संकेतभूमिकां रचयति। अस्मिन् नाटकेऽपि प्रथमाङ्के देव्याः शैव्याया विरहवैकल्य भावि अनिष्ट सूचयति। तृतीयदृश्ये, वराहवधार्थ स्वय राज्ञः वनगमनमनुमोदयितुं नाट्यकारः पूर्वमेव राजानं 'तथाहि राजा मृगयानुरागी' इति निरूपयति। अन्यथा उद्याने कथमपि देव्या सह प्रणयवार्तावसरे स वने स्वयमेव न गत्वा सैनिकानादिशेत्।

## चारित्र्यवैशिष्ट्यम्

**नायकः**

नाटकस्यास्य नायकः राजा हरिश्चन्द्रो धीरोदात्तः प्रधानपात्रञ्च। कौशिक-धर्मयोः सघर्षस्थितौ तस्य चरित्रस्य विकासो भवति। आरम्भादेव शासनकर्मणि

स जागरूको दृश्यते। रात्रिकालपर्यन्तं राज्यव्यवस्थाया समाहितमनाः स मानिनी प्रियामपि प्रसादयितुं न शक्नोति। प्रातस्तरां यदि उद्याने भार्यया सह प्रणयवार्ताया अवसरोऽधिगतः, सोऽपि दुर्दैववशादस्तं याति यदा स वनेचरमुखाद् कस्यचिद्भयकर-वराहस्योपद्रवं शृणोति। यतो हि, भयातुराणां रक्षणम्, द्विजदीनेभ्यो दानम्, धर्मनीत्यनुकूला युद्धप्रवृत्तिश्च तन्मतानुसारं राज्ञः सनातनो धर्मः। तन्निर्वाहे स न केवलं राज्यं त्यजति, अपितु स्वपुत्रस्य प्रियायाश्च मुखाद्भिन्नोऽपि धैर्यं धारयति। क्षत्रियकर्त्तव्यपरायणः स ब्राह्मणाय सकलमहीमण्डलस्यार्पणानन्तरमपि भिक्षावृत्तिं स्वधर्मं न मनुते। यदा विपद्ग्रस्तं राजानमवलोक्य नृपदक्षिणाजीविकोपार्जिनः ब्राह्मणा तस्य साहाय्यं कर्त्तुं प्रवृत्ता भवन्ति, तदा राजाऽस्वीकृतिं प्रकटयन् तेभ्यो निवेदयति—"आर्याः! क्षत्रियोऽहं आशीर्वादमन्तरेण ब्राह्मणेभ्यः किमप्यन्यद् ग्रहीतुमसमर्थोऽस्मीति क्षम्यतां मेऽविनयः।"[1] यद्यपि दुःखस्य चरमोत्कर्षः राजानं बहुवारं धर्माच्च्युतये प्रेरयति, किन्तु तत्क्षणमेवात्मकर्त्तव्यावबोधनं तं निवारयति। बहुप्रसङ्गेषु कौशिकस्य वज्रसदृशवचनान्यपि श्रुत्वा कदापि सोऽविनीतो न भवति। अनेन प्रकारेण तस्य चरित्रे सर्वत्र सत्यस्याग्रहो दृश्यते।

**नायिका**

पूर्ववर्तिनाट्यपरम्परामपेक्ष्य नाटकस्यास्य नायिकाया शैव्यायाश्चरित्रं पृथगेव वैशिष्ट्यं भजते। तस्याश्चरित्रे मध्ययुगीनभारतीयक्षत्रियाङ्गनानां प्रतिनिधित्वं परिलक्ष्यते। वयं तस्यां वीरललनायाः रूपत्रय—वीरजा, वीरजाया वीरजननी चेति अवलोकयामः। राज्ञः सा न केवलं सहधर्मिणी, सहयोगिन्यपि वर्त्तते। राज्ञः प्रतिज्ञां सा आत्मप्रतिज्ञां मनुते। सकलमहीमण्डलदानादनन्तरं नृपाद् धैर्यधारणस्य वचनं श्रुत्वा सा प्रत्युत्तरं ददाति—

"राजन्! अलमनेनोद्वेगेन। शैव्या क्षत्रियाङ्गना, क्षत्रियोचितकार्य्यपरायणा, महेन्द्रतुल्यस्यास्य भवतः सहधर्म्मिणी। जयन्तजननी पुलोमजा किं पृथ्वीदानेन कातरा भवति?"[2]

"जीवितसर्वस्व! सत्यमेवाहं सा चिराभिमानिनी शैव्या। भवतोऽभिमानादेव ममायमभिमानः, भवतोऽनुग्रहादेव मे विलासिता, भवतः सुखेनैव मे त्रिदिवेप्सितं सौख्यम्। ......देवदुर्लभस्वभावस्य भवतः सङ्गात् श्मशानमपि मे राज्यं भविष्यति।"[3]

---

१. हरिश्चन्द्रचरितम्—तृ० अं०, द्वि० दृ०।
२. हरिश्चन्द्रचरितम्—द्वि० अं०, स० दृ०।
३. हरिश्चन्द्रचरितम्—द्वि० अं०, स० दृ०।

एवं तस्याश्चरित्रे सर्वत्र दिव्यप्रकृतेः दर्शनं जायते।

**रोहिताश्वः**

नाट्यकारेण राजपुत्रस्य 'रोहिताश्वस्य' चरित्रचित्रणे विशेषनैपुण्यं प्रदर्शितम्। तस्य चरित्रे क्षत्रियबालसुलभानां विविधप्रवृत्तीनां सम्यङ्निरूपणं जातम्। परशुरामवत् बाणप्रक्षेपणेन शोषितसमुद्रैकभागे कुटीरं निर्माय तत्र वस्तुकामस्य तस्य मात्रा सह बालसुलभोऽयं संवादोऽवलोकनीयः—

रोहिताश्वः—मातः! श्रुतं मया मनोहरमेकमुपाख्यानमाचार्य्यमुखात्।

शैव्या—किमेतत् वत्स!

रो०—परशुरामनामैको ब्राह्मणः समूलपृथिवीं जित्वा तापसोत्तमाय कश्यपाय ददौ।

शैव्या—वत्स! नास्तीह जगतीतले दानात्परं धर्मः।

रो०—परिहाय धरणीतलं कुत्रोषितं महात्मना?

शैव्या—धनुषोऽग्रभागेनापसार्य समुद्रं तत्रैव निर्मितं कुटीरम्।

रो०—महान् खल्वसौ ब्राह्मणः। पृथ्वीश्वरेण ममापि तातेन दीयतामियं मेदिनी, अहमेव अपसारयामि समुद्रं कार्म्मुकप्रभावेण।

शैव्या—[स्वगतम्] कथं मे वेपते हृदयम्?

रो०—मातः! किमिति न प्रतिवचनम्?

शैव्या—वत्स! भाग्यत एवैतत् सम्भवेत्।

रो०—मातः! कदाऽगन्तव्यं तातेन?

शैव्या—अचिरादेव।

रो०—प्रत्यासन्ने पितरि, नूनमेवानुरोत्स्यामि तं सर्वस्वमेवार्पयितुं ब्राह्मणाय। परशुरामकथाश्रवणात् सासूयं मे हृदयम्। ब्राह्मणेन अमुना विसृष्टं सर्वस्वं, क्षत्रिया वयं न पुनः शक्नुमः?"

वस्तुतः बालकस्य तस्य राज्यादिदानविषये न विशिष्टं प्रयोजनम्। तस्य कुतूहलं तु केवलं समुद्रैकभागस्य शोषणमेव। क्षत्रियबालकमुखात् कीदृशी रमणीयाऽभिव्यक्तिरियम्। अपि च, अश्वमेधयज्ञे यदा दक्षिणाप्राप्त्यर्थं सौत्सुक्यं नृपागमनं प्रतीक्षमाणान् ब्राह्मणभिक्षूनवलोक्य सर्वस्वदानी जीर्णवस्त्रपरिहितो राजा तेभ्यः किञ्चिदपि दातुमसामर्थ्यं प्रकटयति तदा क्षत्रियबालकः रोहिताश्वः कथमलंकरणानि धारयेत्। सोऽपि समस्तालंकरणानि सहर्षं ब्राह्मणेभ्यः ददत् तर्कमिदमाश्रयते—

"चीर्णं महापुण्यमितः प्रदाय
द्विजाय सर्वां जनकेन पृथ्वीम्।

तदात्मजः किं द्विजसत्तमेभ्यो
दातुं समर्थो न शरीरभूषाम् ?"

बालस्वभावेन सह तस्य बालोचिता वाक्पटुताऽपि अस्मान् विमोहयति। दासवीथ्यां स्वजननी शैव्यां प्रति दासकेतुः 'कौण्डिन्यस्य' कटुव्यवहारमवलोक्य तं प्रति स वक्रोक्तिद्वारेण पृच्छति—"ब्राह्मण! किं बाल्ये नासादितमाचार्यगृहम् ? कुतोऽधिगतेयं पशूचिता भाषा ?" मातरं विना स क्षणमपि न जीवितुं शक्नोति। अतः दास्यमधिगतया जनन्या सह वस्तुकामः स सविनयं ब्राह्मणं निवेदयति। एकस्मिन् दिवसे च सेवावृत्तिमादधता तेन यदा पुष्पचयनकाले सहसा कथञ्चित् मालत्याङ्कुर उत्खानितः, तदा लघ्वपराधादपि कौण्डिन्येन प्रताड्यमानः स केवलमिदमेव निवेदयति—

"मातुल! मातुल! अपसारय मां मातृसमीपात्। पीड्यमानमवलोक्य मां नूनमेवास्या बहिरेष्यति जीवनम्। सरोवरतीरमासाद्य यथेच्छं निपीडय।"

अनेन रोहिताश्वचरित्रे सहृदयहृदयद्रवीभावकारिणी क्षत्रियबालोचितभावानामभिव्यक्तिः कवेर्मौलिकत्वम् उत्कृष्टनाटकीयत्वञ्च प्रकटयति। बालकेन अधिकनैपुण्यपूर्णवार्तावसरे 'आचार्यमुखात् श्रुतमिद' मिति प्रयोगात् नाट्यकारेण तेषु तेषु स्थलेष्वपि तस्य बालोचितस्वभावस्य विधानं कृतम्।

**अन्यपात्राणि**

नाटकेऽस्मिन् कौशिक-धर्म-विघ्नराट्-महाव्रतादीनां प्रतीकात्मकपात्राणामपि सृष्टिः कृता नाट्यकारेण। एतानि पात्राणि मानवस्य विशिष्टप्रवृत्तीनां प्रतिनिधित्वं कुर्वन्ति। महर्षि-कौशिकस्य चरित्रेऽहंभावस्य क्रोधस्य च चरमोत्कर्षः निरूपितः। 'धर्मः' सात्त्विकवृत्तीनां प्रतीकः, 'विघ्नराट्' सत्कार्येषु विघ्नकारी, 'महाव्रत'श्च तपःसाधनाया सहयोगी इति। सर्वाण्येतानि प्रतीकात्मकानि पात्राणि सततं स्व-स्वप्रभावं प्रदर्श्य आधिकारिकवस्तुनो व्यापारे विस्तारे च सहयोगीनि भवन्ति। वस्तुतो नाट्यरचनाया अभिप्रायः सात्त्विक तामसिकञ्चेति वृत्तिद्वयस्य मध्ये संघर्षस्य प्रदर्शनेन अन्तःपवित्रकारिण्याः सात्त्विकशक्तेर्माहात्म्योत्कर्षस्य निरूपणं वर्तते। नाटके विदूषकस्यापि सृष्टिर्हास्यरसोद्भावनाय कृता। तस्य स्थितिः केवलं नायकस्य राजकार्यपर्यन्तमेवाभिलक्ष्यते।

## उत्तररामचरितस्य प्रभावः

'हरिश्चन्द्रचरिते' भवभूतेः 'उत्तररामचरितस्य' प्रभावः सुस्पष्टं परिलक्ष्यते। करुणरसप्रधानमपि नाटकद्वयं सुखान्तकम्। उभयोरपि नाटकयोर्नायकौ सूर्यवंशो-

द्भवौ धीरोदात्तौ च स्तः। कथानकस्य नाटकीयसविधानेऽपि उत्तररामचरितस्यानुकरणं वर्तते। तद्यथा 'उत्तररामचरितस्य' नायको रामः—

"स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥"

इत्यादर्शं सामाजिकानां समक्षमुपस्थापयति तथैव नाटकस्यास्य नायको हरिश्चन्द्रोऽपि—

"दातव्यं द्विजदीनेभ्यो रक्षितव्या भयातुराः।
धर्मनीतिमतं युद्धं कर्त्तव्यं धरणीभृताम्॥"

इत्यादर्शप्रतिष्ठायै न केवलं पृथिवीं, अपितु स्वपुत्रं भार्यामपि परित्यज्य चाण्डालस्य दास्यं गच्छन्नपि नात्मग्लानिमनुभवति। उभयोरपि नाटकयोर्नायकौ मानसिकवेदनायाश्चरमस्थितिं गतावपि न कुत्रापि कर्त्तव्यच्युतौ भवतः। 'उत्तररामचरिते' यथा सीताया निर्वासनाय नाट्यकारः विस्तृतभूमिकामेकां रचयति, यस्यां भाविविरहसूचकं भित्तिचित्रप्रदर्शनम्, सीतायाः पुनरेकवारं गङ्गास्नानाय आत्माभिव्यक्तिरित्यादीनि वृत्तानि प्रदर्शितानि, तथैव नाटकेऽस्मिन् नृपस्य मृगयाभिलाषित्वम्, परशुरामवत् सर्वस्वदानं कृत्वा बाणक्षेपणेन शोषितसमुद्रैकभागे कुटीरनिर्माणाय बालकरोहिताश्वस्याभिलाषः भाविसंकटं सूचयतः।

## नाटकीयकलाविधानम्

'हरिश्चन्द्रचरितस्य' कथानकं पञ्चाङ्केषु सन्निबद्धम्। अस्मिन् पञ्चकार्यावस्थानां नियोजनमीदृशं वर्तते, येन आधिकारिकेतिवृत्तं विविधसंघर्षेषु निपतदपि विशृंखलतां न याति। विविधकाल्पनिकदृश्यानां विधानमेकतस्तु कथाया औचित्ये अन्यत्र च पात्राणां चरित्रप्रकाशने सहायकं भवति। महाकविभवभूतिना प्रभावितस्यापि नाटकस्यास्य प्रणेतृणा 'गुप्तेन' भरतोक्तनाट्यतत्त्वानि अर्वाचीननाट्योपकरणानि च समन्वितानि। वस्तुतः नाट्यकारे काव्यस्य माहात्म्येन सह वर्त्तमानरङ्गस्योपयोगितायाः अपि महत्त्वमपेक्षते। अतस्तस्य रचनायां पाश्चात्यनाट्यतत्त्वानामपि समावेशो दृश्यते। यथा, अङ्केषु दृश्यविधानम्, स्वगतस्यानुकूलावस्थायामल्पप्रयोगः, एकस्मिन्नेव दृश्ये पात्राणामनेकशः प्रवेशःनिष्क्रमणञ्चेति। वर्त्तमानरङ्गमञ्चस्योपयोगित्वमपेक्ष्य नाट्यकारेण सर्वेषां नारीपात्राणां विदूषकस्य च भाषा संस्कृतं प्रयोजिता। केवलं तत्र वनेचराणां भाषा प्राकृतं वर्तते।

## काव्यकला

वैदर्भीरीत्या नाटकेऽस्मिन् प्राधान्यं वर्तते। नाट्यकारेण चारुत्वस्य सम्वर्द्धनाय सर्वत्र भावानुकूला भाषा प्रयुक्ता। तद्यथा—स्वप्रियाया देव्या दयनीयावस्थामवलोक्य नृपेण व्यवहृतस्य सुकुमारभावाभिव्यञ्जितस्य पद्यस्यास्य भाषाया लालित्यमवलोकनीयम्—

"पुष्पाकीर्णपथेऽपि गन्तुमनिशं यस्याः पदं बाधते
नो वा खिन्नशरीरसेति मृदुतां श्रीखण्डलेपादपि।
यस्या नीरजनिर्म्मितेऽपि शयने सानन्दनिद्राम्ति नो
सेयं कि मम कण्ठहारलतिका शैव्या सरोजेक्षणा॥"

[द्वि० अ०, स० दृ०]

यत्र तत्र च ओजोगुणोद्योतनकारिण्या गौडीरीतेर्निदर्शनमपि वर्तते। तथाहि अधोलिखिते श्लोके क्रुद्धभावाभिव्यञ्जिकाया ओजोगुणशालिन्या भाषायाश्चमत्कारोऽप्यवलोकनीयः—

"वज्रं वज्रधरस्य धूर्ज्जटिजटाजूटान्तरुग्रानलो
विश्वध्वंसपरायणाश्च रवयो यन्नेत्रवह्ने सदा।
त्रस्ता न प्रतिपालयन्ति नियमं तिष्ठन्ति निस्तेजसस्तद्वह्निक्षपितायुरन्तकपुरं को यातुमत्रेहते?"

[द्वि० अ०, ष० दृ०]

अभिनयप्रधानेयं कृतिः रणेन्द्रनाथस्य नाट्यविरचननैपुण्यं प्रदर्शयति। पात्राणामभिनयेनैव सामाजिकानां हृदये सहजमेव रसानुभूतिर्जायते। नैतत्कथनमत्रानुचितं भवेद्यत्, भवभूतिरचिते 'उत्तररामचरिते' यावन्मात्रं रसानुभूतिः प्राधान्येन पाठकाना भवति, 'हरिश्चन्द्रचरिते' तथैव प्रेक्षकाणाम्। वाचिकाभिनयादतिरिक्त पात्राणां वेषभूषाऽपि रसानुभूतेः कारणम्। तस्माद्धेतोः यद्यपि नाटकेऽस्मिन् करुणरसस्य नाधिकं वर्णनम्, तथापि तस्य सकलं वातावरणं निरन्तरं कारुण्येनानुरञ्जितं दृश्यते। नाट्यकारेण कारुण्यरसोद्भाविनां विविधदृश्यानां नाटके संयोजनं कृत्वा 'नाटकं दृश्यकाव्य' मिति तस्य सार्थकत्वं प्रमाणितम्। उदाहरणार्थम्—सूर्यस्य प्रचण्डतापेन तप्ताया मरुभूमौ भार्यया पुत्रेग च सह, पद्भ्यां चलन्तम्, दशाश्वमेधघट्टे ब्राह्मणभिक्षुभ्रमवशात् प्रदत्ताक्षेपान् विषवत् पिबन्तम् भिक्षुवज्जीर्णवस्त्रैः परिवेष्टितञ्च सम्राज हरिश्चन्द्र दृष्ट्वा कस्य ननु हृदय कारुण्येन द्रवीभूतं न भवेत्। अथवा दासवीथ्याम् आत्मविक्रयं कुर्वती,

अनन्तर च स्वामिन्या ब्राह्मणभार्यायाः कटुवचनान्यपि सविनयं सहमानां दास्यभावेन वर्त्तमानां देवीं शैब्यामवलोक्य को नु सहृदयः धैर्यं धारयितुं शक्नोतीति। नाट्यकारेण केवल तत्तद्वृत्तानां निरूपणं वर्णनात्मकरीतिमनुसृत्य कृत येषां रङ्गस्योपरि अभिनयः सम्भवोऽपि नासीत्। यथा––वराहस्य भयंकररूपस्य प्रतिपादनम्,-प्रज्ज्वलिताग्नीनां मध्ये महर्षेस्तपःसाधनाया निरूपणम्, श्मशानभूमौ भयकारित्वस्यारोपणम् इत्यादीनि वृत्तानि वर्णनात्मकरीत्या निरूपितानि।

पारम्परीणेतिवृत्तमाश्रित्य रचितेष्वाधुनिकरूपकेषु नाटकमिदं 'हरिश्चन्द्रचरितम्' अभिनयात्मकत्वेन निःसंदेहं विंशशताब्द्या अस्त्येका उत्कृष्टा नाट्यरचना।

# अमरमीरम्

मनोरमा सक्सेना

डा० यतीन्द्रविमलचतुर्धुरीणेन कृष्णभक्तमीरायाः जीवनचरितमाश्रित्य 'अमर-मीरम्' इति नाटकं विरचितम्।[1] अस्मिन्नाटके मीराया विवाहोत्तरकालिक-वृत्तस्य वर्णनं वर्तते। अस्य कथावस्तु एकादशाकेषु विभक्तम्। आरम्भे नान्दीपाठेन मीरायाः स्तुतिः वर्तते—

नमामि मीराममरा गुणोत्तरां
ध्यानैकसारां हरिनाम - तत्पराम्।
विबुद्ध - वैराग्य - कषायिताम्बरां
पीताम्बर - प्रेम - समुज्ज्वलान्तराम्॥१॥

## कथावस्तु

**प्रथमांके**

देवमन्दिरे मीरा कृष्णमाराधयति। तत्र तस्याः श्वश्रूः स्वकन्यया उदयदेव्या सह आगच्छति। मीरा श्रीकृष्णं स्वपतिरूपेण स्वीकरोति। अतः राजमाता, तस्याः कन्या च मीरायै अति क्रुध्यतः। ते राजकुलकलङ्किनीति तां सम्बोधयतः। तदैव मीरायाः पतिः भोजराजः तत्र समागच्छति। स मीराया उपासकं तस्याः 'परपुरुषम्' अभितः द्रष्टु प्रयतते किन्तु तत्र न कोऽपि दृश्यते। भोजराजस्य भगिनी उदयदेवी मीरां शक्तेरुपासनां कर्तु कथयति कृष्णोपासनां कर्तु निषेधति। मीरा श्रीकृष्णमूर्ति पश्यन्ती गायति। भोजराजः विस्मितो भवति। स निश्चेतु-मसमर्थो यदयं मीरायाः मतिभ्रमोऽथवा सा वस्तुतः कृष्णसान्निध्यमनुभवति।

**द्वितीयांके**

मीरा देवमन्दिरे कृष्ण पूजयति। समीपे एव कृष्णस्य मूर्तिः दृश्यते। मीराया

---

१. इयं लेखकस्यान्तिमा कृतिः। एतस्याः प्रकाशनं तस्य निधनस्य पश्चात् तस्य सहधर्मिण्या रमामहोदयया कृतम्। अस्य नाटकस्याभिनयः सागर विश्वविद्यालये २०२३ संवत्सरे प्राच्यबाणीकलाकारैः कृतः।

दर्शनेच्छया सम्राडाकबरः तानसेनेन सह छद्मवेषं धारयित्वा तत्र समायाति। सम्राडाकबरः भगवत्कृष्णायार्पयितुमेकं कण्ठहारं मीरायै समर्प्य निर्गच्छति। तस्मिन् गते भोजराजः कण्ठहारे आकबरस्य नामोत्कीर्णं दृष्ट्वा भृशं कोपाकुलो जायते। स मीरां कथयति यत् सा कस्यामपि नद्यामात्मान पातयित्वा स्वजीवनान्तं करोतु।

तृतीयाङ्के

जले प्राणान् त्यक्तुकामा मीरा वानसनदीमागच्छति। कृष्णगीतसमाप्त्यनन्तरं सा यदा जले पतितुमुद्यता भवति तावदेव कृष्णस्य भक्तः रायदासः तत्रागत्य तां पतनाद् निवारयति। स मीरां स्वाश्रमं नयति।

चतुर्थाङ्के

महात्मनः रायदासस्याश्रममागत्यापि मीरा पूर्ववत् कृष्णं ध्यायति। रायदासः मीरां स्वधर्मे दीक्षितां करोति।

पञ्चमाङ्के

अत्रान्तरे भोजराजः पश्चात्तापं करोति। मातुर्भ्रातुश्च प्रेरणयापि पुनर्विवाहायानुद्यतः स मीरां पुनरपि अन्तःपुरे प्रतिष्ठापयितुकामः दृश्यते।

षष्ठाङ्के

भोजराजः संन्यासिवेषं धृत्वा वृन्दावनं गच्छति। वृन्दावने मीरया गीतद्वारा कृष्णस्य स्तुतिः क्रियते। भोजराजः मीरायाः गीतमाधुर्यं भक्तिं चास्वादयति। अन्ये भक्ताः अपि गीत गायन्ति। भोजराजः मीरया सह कृष्णभक्तिचर्चां करोति। भोजराजः आत्मानं प्रकटय्य मीरां पुनः मेवार प्रत्यागन्तुं प्रार्थयति। पतिव्रता मीरा पत्युराज्ञामनुल्लंघ्य अनिच्छयैव भोजराजेन सह मेवारंप्रत्यागच्छति।

सप्तमाङ्के

मेवार-राजप्रासादे मीरा स्वकक्षे ध्यानमग्ना सती कृष्णं स्तौति। भोजराजे पंचत्वं गते तस्यानुजः विक्रमदेवः मेवारराजशासनं संचालयति। मीरायाः कृष्णभक्तिः विक्रमदेवाय मनागपि न रोचते। स मीराया जीवनान्तं कर्तुमेकं राजकर्मचारिणं कालकूटविषेण सह मीरासमीप प्रेषयति। सा विषं पिबति किन्तु न म्रियते प्रत्युत सविशेषमुद्दीप्ता जायते।

**अष्टमाङ्के**

रुदती मीरा कृष्णं भजति। सा विक्रमदेवस्य विषदानं स्वकीयमपमानं मत्वा यदानुताप करोति तदा विक्रमदेवः तस्या भगिनी उदयदेवी च प्रविशत । विक्रमदेवः मीरां प्रति अपशब्दाना प्रयोग करोति। स मीरा कथयति यत् शाक्तपरिवारे विष्णूपासना न युज्यते। अतः त्वं विष्णूपासनां परित्यज्य शक्त्युपासनां कुरु। उदयदेवी कृष्णं निन्दति। तदैव राजमाता प्रविशति। सा तौ आदिशति मीरां मा पीडयतामिति।

**नवमाङ्के**

वृन्दावने रूपगोस्वामि-प्रभोराश्रमस्थल मीरा प्रविशति। रूपगोस्वामिप्रभुं मिलित् मीराया हृदये तीव्रोत्कण्ठा बहुकालादेव वर्तते। तस्मिन्नेव समये रूपगोस्वामिप्रभोरेकः शिष्यः गायन् तत्र प्रविशति। मीरा तत्समक्ष रूपगोस्वामिप्रभुं द्रष्टुं स्वविचारं प्रकटीकरोति शिष्यः मीरा कथयति यत् रूपगोस्वामिप्रभुः कदापि स्त्रीभिः सह वार्तां न करोति। मीरा रूपगोस्वामिकृते पत्र लिखति। अह बाल्यादेव कृष्णोपासिकाऽस्मि। अहं भवतो दर्शनाय्रोत्कण्ठितास्मि। यदि भवान् स्त्री न पश्यति तर्हि एतत्कथ सभवति यतः वृन्दावने कृष्ण विहाय सर्वाः स्त्रिय एव। पत्रं पठित्वा स स्वशिष्येण मीरां स्वदर्शनायामन्त्रितवान्।

**दशमाङ्के**

रूपगोस्वामिप्रभोराश्रमे मीरा अनिशं कृष्णमेव स्तौति। स विस्मितो भवति यत् मीरा वृन्दावने कृष्णं विहाय नान्य पुरुष पश्यति। रूपगोस्वामिप्रभुः मीरायै मुक्तिमार्गमुपदिशति।

**एकादशाङ्के**

मीरा कृष्णस्य स्तुति-गानं करोति। अस्मिन्नेव समये मेवारात् कश्चिद् ब्राह्मणः आगत्य मीरां प्रणम्य कथयति यत् मीराया मेवारत्यागस्य पश्चात् मेवारस्य प्रजाः, मेवारराजः च अत्यन्तं दुःखिनः सन्ति। अतः मीरा पुनः मेवार प्रतिगच्छतु। एतच्छ्रुत्वा मीरा कृष्णस्यानुमति ग्रहीतु ध्यानमग्ना जायते। किञ्चित्कालानन्तरं सा ब्राह्मणं कथयति यत् मेवारगमनाय कृष्णस्यानुमतिः नास्ति। ब्राह्मणे पुनराग्रह कुर्वति, मीरा पुनः ध्यानमग्ना भूत्वा ब्राह्मणे पश्यति एव कृष्णस्य विग्रहे लुप्यतीव। सा मेवारवासिनां मंगलं कामयते। भरतवाक्येन नाटक समाप्यते।

## चरित्र-चित्रणम्

### मीरा

'अमरमीरम्' इत्यस्य नाटकस्य नायिका मीरा मेवारराजस्य भोजराजस्य पत्नी अस्ति। नाट्यकारस्य शब्देषु सा—

"समग्र - शिशोदिया - राजवंशस्य श्रेष्ठमलङ्करणं, निखिलभारतवर्षस्य च युगयुगान्तरीय - पुण्यविभूषणमतुलनं भागवत-प्रेमसुधानिर्झरिणी च।"

मीरा बाल्यादेव कृष्णोपासिका । सा कृष्णं पतिरूपेण स्वीकरोति। विवाहानन्तरं पतिगृहेऽपि सा निरन्तरं कृष्णमुपास्ते। तस्याः श्वश्रूः, ननान्दा, देवरश्च तामनेकैः अपशब्दैः सम्बोधयन्ति किन्तु सा कृष्णभक्तिं न त्यजति। मीरा पतिव्रताऽस्ति। सा स्वपतेः भोजराजस्याज्ञां कदापि न उल्लंघयते, यथा सा कथयति—

"भारतीया सहधर्मिण्यहं स्वकर्तव्यं सम्यगेव जाने। जाने च परिजनवर्गस्य भर्तुश्च सम्मान कर्तुम्। किन्तु बाल्याद् यमुनातट-विहारिणे दत्तहृदया न कदापि तस्यावमाननां सोढुं समर्थाऽस्मि।"

मीरायाः कृष्णभक्तिनिर्भरं गीतं श्रुत्वा आकवरः मन्त्रमुग्धः सन् कथयति—

"मन्ये! धरण्या धूलिधोरणीं परित्यज्य बहूर्ध्वे स्वर्गलोके परमपुरुषपादपद्म इवाहं राजे।"

मीरा पत्युराज्ञानुसार मरणायोद्यता भवति, पुनः पत्युराग्रहेण सा वृन्दावनात् मेवारमागच्छति। तस्या विषये भोजराजः स्वमातरं कथयति—

'पङ्कजिनी सा पङ्कस्य बहूर्ध्वे राजते।'

मीरा दैवीगुणोपेता नारी। कालकूटविषं पीत्वाऽपि सा न म्रियते प्रत्युत तस्या विग्रहः प्रदीप्ततरो जायते। सा धैर्यशीला नारी। स्वदेवरदत्तानि नैककष्टानि सोढ्वाऽपि सा धैर्य न त्यजति। सा क्षमाया साक्षान्मूर्तिरस्ति। विक्रमदेवः तस्यै अनेकाः यातनाः ददाति किन्तु सा तस्य मंगलाय मेवारप्रजाकल्याणाय च प्रभुं प्रार्थयते।

### भोजराजः

मेवार-शासको भोजराजो मीरायाः पतिरस्ति। स कोपनशीलोऽस्ति। कण्ठहारे आकवरस्य नामोत्कीर्णं दृष्ट्वा स भृशं कोपाकुलो वर्तते मीरां कथयति च-

"अये पापिष्ठे! अचिराद्दूर याहि, निकटतमसरिद्धरायामात्मानं पातयित्वा कुरु गभीर-पातालगमनम्। नरलोके न कञ्चन पापवदनं दर्शय।"

मीराया गृहत्यागानन्तरं तस्य हृदय परिवर्तितं भवति। स अत्यधिकं परितप्तः सन् प्रायश्चित्तज्वालायां पतति कथयति च—

"मिथ्यासन्देहपरायणोऽहं तस्या गृहत्यागकारणमस्मि इति अनुतापानलो मा दहत्यनिशम् अन्तर्ज्वालम्। किं नु मया करणीयम् ? को वाऽत्र प्रतीकारः ?"

"यदि सा स्वेच्छातोऽगमिष्यत्, तत् सहनीयमभविष्यत्। किन्तु वाक्यबाण-जर्जरिता सा प्राणत्यागायानुरुद्धा मया। अहो मेचित्तज्वाला श्मशानज्वालातोऽपि भयंकरी।"

मातुरनुजयोः नितरामाग्रहेणापि स पुन. परिणय कर्तुं नोद्यतः, मीरामेव मेवारमानयति।

## शैली

### रसयोजना

'अमर-मीरम्' मीरायाः कृष्णभक्त्या निर्भर नाटकमस्ति। अस्मिन्नाटके सर्वत्र भक्तिरसस्य निष्पत्तिर्भवति। कतिपयानि उदाहरणानि—

मम नयने विराज रे भक्तकृपाल।
मोहनमूर्ते हे सुन्दर मनोहर रमलोचन विशाल।
अधरे सुधारस-मुरली राजते कण्ठशोभिजयमाल।
कटितट - किंकिणी मधुरनादिनी चरणे नूपुरो रसालः।
मीरायाः प्रभुस्त्व सज्जनसुखदायी भक्तवत्सलगोपाल।[1]
मम प्रभुर्गिरिधारी कोऽपि न द्वितीयः
मयूर - मुकुटविशोभी स हि प्राणप्रियः।
शख - चक्र - गदा - पद्म - कण्ठमालाश्रय ॥
माता पिता भ्राता न कोऽपि समात्मीय.।
वाद एष विदितः सर्वत्र नाद्य गोपनीयः।
कुलमानत्यागान् मीरा त्यक्ता लोकह्रिया॥
विहिताश्रुनिषेकायाः सत्यप्रेमधिया।
मिलितो भवतु त्वरित मम प्राणप्रियः॥[2]

प्रस्तुतनाटके यत्र तत्र अद्भुतरसोऽपि दृश्यते। यथा विषपानेनापि मीरा-न-

---

१. अमरमीरम्, २।२५।
२. अमरमीरम्, ३।४४, ४५, ४६।

म्रियते प्रत्युत तस्याः शरीर कान्त्या अधिक प्रदीप्तं भवति। राजानुचरस्य कथने अद्भुतरसः दर्शनीयः—

राजानुचरः—(सविस्मयम्) "अहो! परमाद्भुतोऽयं व्यापारः। न केवलं मीरा माता न मृता, परन्तु समग्रशरीरमस्या विच्छुरति काञ्चन भागवती द्युतिम्, निःसारयत्यतुलनीयपारिजातसौरभं, क्षरतीवाकल्पनीयामृतधाराम्।

अहो अतुलनीयम् अत्याश्चर्यम् खल्वेतद् दृश्यम्।" मीराया गानेऽपि अद्भुतरसः दृश्यते। तद्यथा—

सर्पपिजर राज्ञा प्रेरितं मीरा-करतलागतम्।
तस्य तर्पणान्ते हलाहले पीते, गरलं जातं मधुरामृतम्॥
शूलशय्या राज्ञा प्रेरिता, मीरा तत्र करोतु शयितम्।
प्रदोष आयाते कृते च शयिते, पुष्पशयनं मीरायाः प्रजातम्॥"[1]

एकादशाङ्केऽपि इदमत्याश्चर्यम् यत् मीरा द्वारकाधीश-वक्षः-पञ्जरे लुप्यतीव।

**अलङ्कारयोजना**

नाटकेऽस्मिन् शब्दालंकारेषु अनुप्रासस्य प्रायशः छटा विराजते, अर्थालंकारेषु उपमारूपकाद्यलकारा बहुप्रयुक्ताः सन्ति। नाटकस्य प्रस्तावनायां अनुप्रासरूपकालंकारयोरेकमुदाहरणं द्रष्टव्यम्—

वर्षाधारा शल्याकारा नयनधारासारा।
कृष्ण - लोहित - मेघघटा भृत - पारावारा॥१०॥
विश्वस्थली समाकारा सतत - तोय भरा।
शस्यश्याम - स्नेहाञ्चल - लुप्तपादचारा॥११॥

चतुर्थाङ्के रूपकालङ्कारः दर्शनीयः।

महाराज! मम कृपापारावार।
मा कुरु मां विरहानलदग्धां
दयस्व मयि दयासार॥५३॥
वारि विना पङ्केरुहं चन्द्रहीना रात्रिः
विना तथा मम परा दुःखार्तिः।

---

१. अमरमीरम्, ८।९९, १००।

विरहदावज्वाला - दग्धपञ्जराकुला
मीरा तव त्यक्ताहारा विश्वसारात्सार ॥५४॥

**छन्दोयोजना**

एतस्मिन्नाटके छन्दसां शोभना योजना वर्तते। नाट्यकारेण इन्द्रवज्रावसन्ततिलकामालिनीशिखरिणीशार्दूलविक्रीडितादिच्छन्दसां प्रयोगः प्रायशः कृतः।

चतुर्थाङ्के वसन्ततिलकाछन्दसः मनोरममुदाहरण द्रष्टव्यम्—

स्वर्गायितां नरकमस्तु रजः सुवर्ण
ज्योत्स्नायतां तिमिरमस्तु मरुः सशस्यः।
त्वं नन्दनं कुरु धरां मरणावसन्ना
संस्थापयाशु मनुजान् हरिभक्तमार्गे ॥५२॥

**उपेन्द्रवज्रा**

मुकुन्द - पादाब्ज - परागपूतं
मुकुन्द - बाहूद्धृत - गण्डशैलम्।
मुकुन्द - नामाङ्कित - वृक्षपत्रम्।
मुकुन्द - वृन्दावनमाश्रयिष्ये ॥५.७०॥

'अमरमीरम्' नाटकस्य भाषा अतीव सरला, परिष्कृता चास्ति। नाटकलेखनेन सह नाटककारस्योद्देश्यं संस्कृतभाषायाः प्रसारोऽपि अस्ति। अतएव तेन सर्वत्र सुबोधभाषायाः प्रयोगः कृतः। भाषा भावानुरूपाऽस्ति। सुमधुरभाषायाः अधोलिखितं रूपं वर्तते—

मीरा—पश्य, पश्य, मम व्रजगोपी-शाटीहरणं नवनीत-चौरं मधुर-मधुलावण्यं श्रीकृष्णं मां लालयन्तं पालयन्तं पोषयन्त च।

नाटकेऽस्मिन् मधुरगीतानां समावेशः कविना बहुलतया कृतः—

विलसतु हृदि वनमाली
कोमलदलविकच - कमल - नील - नयनपालिः ॥१२४॥
सस्मितमुख - दर्शनसुख - मोहित - वनितालिः।
अयि केशव दर्शय तव शैशव - रम - केलीः।
सुन्दरतम हृदये मम सञ्चर करतालीः ॥१२५॥

नाटककारेण अभिनयदृष्ट्या अङ्काना सुचारुविधानं कृतम्। भरतमुनिप्रणीतनाट्यसिद्धान्तानां प्रायः अभावो दृश्यते।

# राजवैद्यः श्रीकृष्णरामभट्टः तस्य कृतयश्च

डा० प्रभाकर शास्त्री

संस्कृत-साहित्यस्य विकासे राजस्थानप्रान्तस्य महत्त्वपूर्णमेकं योगदानं अस्ति। तत्रापि जयपुरस्य स्थानमुल्लेखनीयमविस्मरणीयञ्च। सप्तदशतकादारभ्य (१६९९ ई०) ऊनविंशशतकपर्यन्तं (१८८० ई०) सवाईजयसिंहद्वितीयमहाराज-रामसिंहद्वितीयादीना 'कछवाहा' राज्ञा साहाय्येन संस्कृतभाषा भृशं पल्लविता पुष्पिता च। तत्रत्यनृपेषु रामसिंह. संस्कृतस्य विद्वान् आसीत्। अनेन 'स्मार्तबोध' नामधेयस्य धर्मशास्त्रग्रन्थस्य रचना कृता। अस्यैव राज्यकाले राजवैद्य-व्यासोपाह्व-श्रीकृष्णरामभट्ट आयुर्वेदज्ञः साहित्यमर्मज्ञश्चासीत्। भट्टस्य वंशपरिचयः तस्य पुत्रेण गङ्गाधरभट्टेन लिखितायां 'सिद्धभेषजमणिमाला' इति आयुर्वेद-ग्रन्थस्य भूमिकायामित्थमुपलभ्यते—

"श्रीमन्महाराजाधिराज - श्रीप्रतापसिंहदेवराज्यसमयेऽधीतायुर्वेदो गुर्जर-भूमिनिर्जरान्तर्गत - भट्टमेवाडजातीयः स्वयशः प्रख्यापनकृतमतिर्लक्ष्मीरामनामा सुमतिरहम्मदाबाद-नामक-प्रसिद्धपुटभेदनादाजगाम। एत्य च रोगिनैरोग्यसंपादित-प्रसिद्धिर्भूमिपतेरपि सम्मानमवाप। अथ लल्लूराम नामा तदात्मजः पितृसमान एवाल्पेनैव कालेन महाराजाधिराजप्राप्तराजवैद्य-प्रतिष्ठः श्रीयशसामेकं निधानमभवत्। अथ तस्य पौत्रः श्रीवैद्यकुन्दनरामस्य पुत्रः श्रीकृष्णराम-नामा च मे पिताऽऽसीत्। यः खलु—

श्रीमन्माधवसिंहभूपसमितौ लब्धप्रतिष्ठास्पदः,
साहित्याम्बुधिकुम्भसंभवमुनिर्धन्वन्तरिर्वैद्यके ।
कीर्तिर्यस्य दिगन्तगा च कवने यः कालिदासोपमः,
सोऽयं राजभिषक् परो विजयते श्रीकृष्णशर्मा गुरुः॥

उद्धरणेनानेन स्फुट्यते यत् श्रीकृष्णरामभट्टस्य प्रपितामहाः अहमदाबादनगर-निवासिनः श्रीलक्ष्मीरामपादाः। ते खलु भट्टमेवाडजातीयाः गुर्जरगौडब्राह्मणाः। आयुर्वेदशास्त्रनिष्णाताः आचार्यप्रवराः श्रीलक्ष्मीरामपादाः सवाईप्रतापसिंहनृपस्य (१७७८ ई०) राज्यकाले जयपुरे समागताः। तस्य सूनुः श्रीलल्लूराम-भट्टः प्रसिद्धः

चिकित्सक आसीत्। लल्लूरामस्य पुत्रः श्रीकुन्दनरामश्चरितनायकस्य श्रीकृष्ण-रामभट्टस्य पिता। कविवरोऽय म० सवाई रामसिंह द्वितीयस्य शासनकाले यौवनं व्यतीत्य, माधवसिंहद्वितीयस्य राज्यकाले काव्ययशोऽवाप।

कविना विरचितमेकं 'जयपुरविलास' इति नामैतिहासिकं काव्यं वर्तते। काव्येऽस्मिन् कविरित्थ परिचीयते—

श्रीमद् - गौतमगोत्रभूषणमणि. प्रत्यर्थिशकामणिः,
वामाचारतमिस्रपुष्करमणी रोगार्तचिन्तामणिः।
पृथ्वीपालकृतादरोऽखिलबुधश्रेणीशिरः शेखरो,
लल्लूरामभिषग्वरोऽभवदिह प्रध्यातविश्वम्भरः॥

तेन विरचितेषु ग्रन्थेषु सप्तदशग्रन्थानामुल्लेखः, स्वामिश्रीजयरामदासेन विरचिताया, 'सिद्धभेषजमणिमालायाः भूमिकायां' कृत.। तद्यथा—

आर्यालङ्कारशत[१] पञ्चमहाकाव्यसारशतकञ्च[२]।
जयपुरविलासकाव्य[३] मुक्तकमुक्तावली[४] नाम॥
श्रीकच्छवाहवंश[५] छन्दोगणित पलाण्डुदिग्विजयम्[६]।
गोविन्दभट्टभङ्ग[७] तथैव होलोत्सवो[८] भाणः॥
जयपुरमेलककुतुक[९] गप्पसमाधानमद्भुतं[१०] तद्वत्।
नाथस्तवः[११] कनीयान् काशीनाथस्तवोऽपि[१२] तथा॥
सम्राट्सुताभिनन्दन[१३] माधवपाणिग्रहोत्सवावच्छौ[१४]।
गोपालगीत[१५] - पत्रप्रशस्ति[१६] मुख्यानि खण्डकाव्यानि॥

उपरिलिखिताः कविश्रेष्ठस्य सप्तदशग्रन्थाः सन्ति। एतेषां कतिपयग्रन्थानां विवरणं प्रस्तूयते।

## आर्यालङ्कारशतकम्

ग्रन्थोऽत्र त्र्यशीत्यार्याणां संकलनम्। अपूर्णोऽय ग्रन्थः। सम्भवतो लेखकेन न पूर्णीकृतोऽयम्। ग्रन्थेऽस्मिन् भगवत्याः त्रिपुरसुन्दरीदेव्याः सौन्दर्यस्य सालङ्कारिकं वर्णनं विहितम्। ग्रन्थस्यारम्भेऽधोलिखितार्या वर्तते—

चतुरास्यकृतस्तोत्रां पञ्चास्य - सहधर्मिणीम्।
षडास्य-जननीमार्यां दशास्यां कालिकां नुम.॥

द्वितीये श्लोके दोहा 'छन्दो' दृश्यते। तद्यथा—

"अलङ्कारशतमुज्वल भाविकविभव-तृष्णेन।
आर्यायै समुपायिना क्रियते श्रीकृष्णेन॥"

पाठकानां सुख-बोधार्थं ग्रन्थेऽस्मिन् टिप्पण्यो दत्ता.। तासु श्लोकानामाशयः, अलङ्काराणां लक्षणानि च विवृतानि। तद्यथा—

"आर्या जयतितरां या सितपद्मगता विशिष्य गौराङ्गी।
स्फटिकालवालरूढा वहति कनकवल्लरीव रुचिम्॥"

टिप्पणी—अत्र आर्या कनकवल्लरी इव रुचिवहा। शब्दानामुपमानोपमेय-साधारणधर्मोपमा-वाचकानामुपादानात् पूर्णोपमा। अनया रीत्या अन्येषामप्यलङ्काराणां वर्णनं प्राप्यते।

## सारशतकम्

पञ्चसर्गात्मकोऽयं ग्रन्थः सुप्रसिद्धानां रघुवश-कुमारसभव-किरातार्जुनीय-शिशुपालवध - नैषधीयचरितादीना पञ्चमहाकाव्यानां सक्षिप्तकथानकरूपः। काव्यानामेकैकस्य सर्गस्य कथा, प्रायेण कविना एकेनैव शार्दूलविक्रीडितच्छन्दोबद्ध-श्लोकेन साधु प्रतिपादिता। तत्र 'रघुवशमस्य' प्रथमसर्गस्य यथा—

"राजासीन्मनुवशभूर्भुजजितद्वीपो दिलीपो महान्,
पुत्रार्थी स वधूसखः प्रणमितु शिष्ट वशिष्ठ ययौ।
क्ष्मासंक्रन्दन ! नन्दिनीं परिचर त्वं नन्दनं प्राप्स्यसी-
त्यादिष्टो मुनिना व्यधत्त करुणायोगोदयो गोव्रतम्॥"

द्वितीये सर्गे 'कुमारसभवस्य' कथासारः। तस्य पञ्चमसर्गस्य कथा निम्न-श्लोके वर्तते। तद्यथा—

पार्वत्याः सुवते तपः सुमनसा विज्ञापना शृण्वते,
सेनान्यं सुतमिच्छते वहुतया प्रच्छन्नमागच्छते।
संकल्पं परिपृच्छते स्वविषये निन्दां मुहुस्तन्वते
प्राकट्यं परिकल्प्य ता कलयते कुर्मो नमः शभवे॥५।२६

तृतीये सर्गे किरातार्जुनीयस्य कथा वर्तते। तद्यथा प्रथमसर्गस्य—

तत्र द्वैतवने वनेचरमुखाच्छ्रुत्वा द्विषामुच्छ्रये,
कृष्णामेत्य युधिष्ठिरो रिपुयशश्चर्या चचक्षेऽनुजान्।

कृष्णाकर्ण्य मनस्विनी निजतिरस्कारं स्मरन्ती नृपं
क्षात्रोऽसि श्रय पौरुष जय रिपूनित्याह नित्याग्रहा ॥ १।४०

चतुर्थसर्गे शिशुपालवधस्य कथा वर्णिता। नारदमुनेरागमनादारभ्य तस्य प्रत्यावर्तन यावत् प्रसृतां कथां कविवरोऽयमेकेनैव श्लोकेन दर्शयति—

श्रीकृष्णं स्वरुपेत्य नारद इति प्रोवाच वाचं हरेः,
चेदीश किमुपेक्षसे जहि रणे जन्मत्रयी - विद्विषम्।
ओमुक्त्वा स विसर्ज्य तं जिगमिषुश्चैद्यं प्रति श्रीपतिः,
सद्भक्तेन चिकीर्षता मखमुपाहूतः पृथासूनुना ॥ १।५९

अन्तिमे सर्गे नैषधीयचरितस्य सारः। तत्र तृतीयसर्गस्य हंसदमयन्त्योः पारस्परिकः संवादः द्रष्टव्यः—

मामुद्दिश्य किमेषि भैमि चटुविन्नालोऽस्मि विस्ते रुचि-
श्चेन्मय्यस्ति नलं वृणीष्व बत तामुक्त्वा व्यरंसीद्वयः।
तस्मै ब्रूहि तथा यथा स नृपतिर्मामुद्वहेदित्युपा-
दिष्टो भीमजया खगो द्रुतगतिः सिद्धिं नलायालपत् ॥ ३।८३

## जयपुर-विलासकाव्यम्

'जयपुरविलासम्' नामैतिहासिकं काव्यम्। अस्य प्रकाशनं निर्णयसागर प्रेस, बम्बईतः १८८७ ई० वर्षे जातम्। पञ्चोल्लाससमन्वितेऽस्मिन् ग्रन्थे तात्कालिकानां विदुषां शासकानां लब्धप्रतिष्ठानांञ्चोल्लेखः कृतः। जयपुरनगर्याः समेषां रमणीयस्थानानामपि हृदयहारिवर्णन प्राप्यते।

अस्य प्रथमे उल्लासे ८३ श्लोकाः नगरीवर्णनात्मकाः। मंगलाचरणश्लोके भगवत्याः गंगायाः सानुप्रासकं वर्णन वर्तते—

गङ्गा तुङ्गतरङ्गाऽनङ्गारिशिरः-समुल्लसत् सङ्गा।
कूलविलोलविहङ्गा निर्मलरङ्गास्तु विघ्नभङ्गाय ॥ ३

हिन्द्याः दोहाकवित्तादीनि छन्दांसि प्रयुक्तान्यत्र। तत्र भगवतः शंकरस्य स्तुतौ 'दोहा' छन्दो यथा—

शिवशेखरशशिचन्द्रिका संचयचारुमहांसि।
ददतु मुदं दिनकरसुता तरलतरंग-पयांसि ॥ ५॥

जयपुरनगर्याः कवित्वमयं वर्णनं यथा—

अतिविलक्षण - लक्षणलक्षिता ललितगीतिगतिस्फुटमंगला।
जयपुरी महती महिता हिता महिमतो हिमतोषित-मानवा॥२४॥
जयपुरे ललना ललनं बहिः स्थितमवेत्य हठादिति पृच्छति।
कथय तथ्यमह यदि ते प्रिया रसिकयाऽसि कयाऽद्य निमन्त्रितः॥२९॥
मम कृते चल शिक्षय त गठं कुरु चिर रुचिरं सुरत तया।
जयपुरे स्वसखीमिति याचते न रमणी रमणीयगुणापि का॥४६॥
सविबुधा विबुधा बहुभोगिनां विततिभिर्निभृता नृभृताशया।
जयपुरी बत सप्रति शोभते त्रिजगति जगतीमिव सश्रिता॥७०

अनया रीत्या श्लोकेतरेषु रामप्रकाश टाकीज-राजामलतडाग-मारुतिमन्दिर-राधादामोदरमन्दिर - स्वर्गशूली - रामनिवासोद्यानादीनां दर्शनीयस्थानानां सालङ्कारिकं वर्णनं कृतम्। तृतीयोल्लासे महाराजरामसिह द्वितीयस्य (१८३५ ई०-१८८० ई०) चतुर्थे च माधवसिंहद्वितीयस्य (१८८० ई० १९२२ ई०) यशोत्वर्णनं वर्तते। कविः माधवसिंहस्य चरितं निरुपयन् त 'काव्य-प्रकाशेन तुल्यं उद्घोषयति, यथा

सोल्लासः कविताविचारगहनोऽलङ्कारकान्ताकृति-
र्नानादुर्गम शक्तिलक्षणलसद् व्यक्तिर्गभीरध्वनिः।
माधुर्यादिगुणः स्तुतः कविकुलैः साहित्यविद्यावधि-
श्चञ्चत्प्रौढरसो विराजसि विभो काव्यप्रकाशोपमः॥१०

पञ्चमोल्लासे भारतप्रसिद्धाना विदुषां सामन्तानाञ्च वर्णनमस्ति। विद्वत्सु चरितनायकस्य गुरुः श्रीजीवनाथो वर्णितः। श्रीब्रह्मचारी - राजीवलोचन - ओझा-कृष्णनाथशास्त्री - गोपीनाथशास्त्री दाधीच - महामहोपाध्यायशिवदत्त शास्त्री-हीरालाल-वैदिकादीनां वर्णनं वर्तते। सामन्तेषु विजयसिह - राजावतनारसिंह-सीकरनरेश-सेनापति वक्शी - पुरोहितरामप्रसाद - दानाध्यक्ष - श्रीजगन्नाथप्रसाद राजमुंशी - रामदास - कायस्थ - महाराजपार्श्वसेवक - कृष्णलालु - कृपापात्र सेवक-बालजी-शिक्षा सञ्चालक-श्रीहरिदासशास्त्रिमहोदयानामुल्लखो विद्यते।

## मुक्तकमुक्तावली

मुक्तावलीयं कवेर्विरचितानां स्फुटपद्यानामेकावलिः। अस्यां सप्त 'सरः' इति खण्डा विद्यन्ते। अवसाने चैका 'भाषाचित्र' नामा ललन्तिका प्रयुक्ता विद्यते,

यस्यां हास्यप्रधानानि हिन्दी - उर्दू - संस्कृत - जयपुर्यादीनि मिश्रितानुप्रासमयानि पद्यानि योजितानि। तत्र प्रथमे 'सरसि' देवानामालङ्कारिकं स्तवन, द्वितीये समस्यापूरणं, तृतीये ऋतुवर्णन, चतुर्थे शृङ्गार-वर्णनं, पञ्चमे काव्यमालाप्रशंसनं, षष्ठे हास्यवर्णन, सप्तमे च संकीर्णवस्तुवर्णन विद्यते। संकीर्णवस्तुवर्णनमिदं वापीवर्णन-पक्वान्नवर्णन - वैद्यवर्णन - श्रीविक्टोरियावर्णन रेलशकटीतारादिषु बहुषु खण्डेषु विभक्तम्। कविः यावन-वैद्यविद्यायाः (हकीम-विद्या) ज्ञाता आसीदिति स्फुट्यते अधस्तनेन श्लोकेन—

ज्वरार्दिता या कटुकान् कषायान् न चेत् पिबेत् कि वद वैद्य देयम्।
निबोध हंसी मधुरप्रचारे "वहा वनप्सा शरबत् पिलादे॥
पित्त तापित शरीरवल्लरी सा सखी, वद हकीम, दवाई।
औषध शृणु मृगाक्षि मनोज्ञं 'जा गुलाब गुलकन्द खवादे॥

## कच्छवंशमहाकाव्यम्

विंशतिसर्गात्मकमिदमैतिहासिकं महाकाव्यम्। अप्रकाशितोऽय ग्रन्थोऽद्यापि कविवरस्य प्रपौत्रः श्रीदेवेन्द्रकुमारभट्टसविधे जयपुरे सुरक्षितः। ग्रन्थेऽस्मिन् जयपुरस्य नृपाणां वंशानुक्रम वर्णन कृतम्। अत्रानुष्टुप्छन्दः प्राधान्येन प्रयुक्तम्। अन्यान्यपि छन्दांसि यथास्थानं व्यवहृतानि। ग्रन्थोऽयं श्रीसीतारामभट्ट पर्वणीकरस्य 'जयसिंह-महाकाव्यात्' भृश प्रभावितः। महाकाव्यस्यास्य रचनायां कविना प्राक्तन-वंशावल्याः साहाय्यं गृहीतम्। दशमैकादशयोश्च सर्गयोः सवाई-जयसिंहस्य वर्णनमित्थं कृतम्—

राज्यं वर्धितमाहवेषु विजित स्वच्छं यशोऽप्यर्जितं,
शिल्पिक्षुण्णमयस्मय जयपुर निर्माय विख्यापितम्।
येनायाजि तुरङ्गमेधविधिना द्रव्यं द्विजेभ्योऽर्पितं,
सोऽयं जयसिंह-वीरनृपतिः स्यात् कस्य वाग्गोचरः॥

## पलाण्डुदिग्विजम्

वीररसप्रधानमिद पुस्तकं काव्यकोटिकम्। कविना स्वयमेव भूमिकायां स्पष्टमित्थं प्रतिपादितम्––

"तत्र राजकीयप्राणाचार्येषु कश्चिदेकोऽहं होलामहोत्सवाद्यनेककाव्य-विधाता संस्कृतपाठशालाध्यापको निघण्टुपरिषत्प्रतिपादितेष्वपि पलाण्डुरसोन्नादिगुणेषु काव्यामृतकल्लोललुलच्चेतसां सचेतसां चेतस्तथा न चन्दतीति

श्रीमदादित्यरामशर्मणो नियोगादिदं वीररसप्रधान पलाण्डुराजशतकापरपर्यायं पलाण्डुदिग्विजयकाव्यं कनीयः कमनीयञ्च यथामति निरमासिषम्। तत्र च काव्यनायकस्य भगवतः श्रीपलाण्डुप्रकाण्डस्य विपूचिकाजीवकौ विजातीय-सजातीयतया प्रतिनायकावप्यकल्पयम्।"

कविना पलाण्डो. सर्वगुणसम्पन्नत्व स्वीकृतम्। एकस्मिन् स्थलेऽस्य सर्वरोग-विनाशकत्वमित्थं वर्णयति—

जित्वाऽसौ लशुनः सरवो दिशश्चतस्रः कन्दानामधिजगदेकचक्रवर्ती।
सोत्कण्ठप्रभृति समुत्पतत्पताक धर्माद्य पुरमरुणोदये विवेश॥

सर्वगुणसम्पन्नेऽस्मिन् पलाण्डौ 'पलाण्डु-भक्षणादेव पुन. नस्कारमर्हतीति धर्मशास्त्रीय-निषेधत्वात् 'पलाण्डु लशुन चैव जग्ध्वा चान्द्रायण चरेदिति प्राय-श्चित्तविधानात् कविवरोऽयमस्य भक्षणे मतिं न ददाति। स्पष्टमनेन लिखि-तम् यत्—

नाद्मि कदापि पलाण्डु पाण्डुविरोधिनमपि स्वय पाण्डुम्।
केवलमादित्यगुरोर्नियोगतः काव्याडम्वरो विहितः॥१०४॥

## जयपुरमेलककुतुकम्

पुस्तकेऽस्मिन् जयपुरस्य प्रसिद्धानां द्वादशमेलापकानामुत्सवानाञ्च रुचिरं वर्णनं कृतम्। तेषु नवमीस्वर्णगौरी - विजयदशमी - सलगमेलक - मारगपाली-मेलक - वसन्तपञ्चमी - रामनवमी - होलिकादयः प्रमुखा वर्तन्ते। अप्रकाशितेऽस्मिन् ग्रन्थे आश्विनशुक्लषष्ठ्या मेलापकस्य वर्णनमित्थमुपलभ्यते—

भवत्याश्वयुजः षष्ठ्यामर्जुनात्विषि मेलकः।
प्रधानं मेलकानां यो गव्यूति-द्वय-विग्रहः॥१॥
जयपत्तनमारभ्य यावदम्बावती पुरीम्।
तावती भूमिमारभ्य द्राघीयानपि यः स्थितः॥२॥

## गोविन्दभट्टभङ्गम्

'न कोपनीयाः कवयः कदाचिदि'ति सिद्धान्तमनुसृत्य विरचितोऽयं ग्रन्थः। ग्रन्थस्यास्य रचना-विषये एका किवदन्ती श्रूयते। गोविन्दभट्टो लेखकस्य श्रीकृष्णभट्टस्य पितृव्य आसीत्। अस्य पितरि श्रीकुन्दनलालभट्टे पञ्चत्वं गते सति पितृव्येन राज्याधिकारः काङ्क्षितः। अस्माद्धेतोः क्रुद्धेन कविना लघुतमस्यास्य

काव्यस्य रचना कृता। ग्रन्थोऽयं साहित्यिकगालिं विहाय नान्यत् किञ्चित्। एकस्मिन् स्थले पितृव्यं प्रत्ययशब्दमुच्चारयन् कविरित्थं वक्ति—

येषां स्फारपराक्रमध्वनिरनुप्रासा महाशक्तयो,
मासान्तेऽन्तिकमर्थकोशनिचया श्रीदुर्गबन्धादयः।
वीरेन्द्रैरपि वन्दिताः कविनृपाश्चेत् कोपिताः केनचित्,
तस्य ध्वंसकृते कुकीर्तिकटकं सयोज्य संशेरते॥

## गप्पसमाधानम्

अष्टानां श्लोकाना समवायरूपोऽयं लघुकायो ग्रन्थः। कविना व्याख्यातं गप्पस्वरूपमीदृग्विध सन्दृश्यते—'न सम्भवति या वार्ता लोके सा गप्पमुच्यते'। अप्रकाशितेऽस्मिन् ग्रन्थे कवेर्हार्दिकी भावना यत्र तत्र स्फुरिता विद्यते। एकस्मिन् स्थले स भणति यत्—

स्फुरन्ति मे गप्पकथाः परः शतास्तथापि कुर्वे नहि बन्ध-गौरवम्।
यतः परं पण्डितलोकससदि रसोत्तरोपि स्वदते न विस्तरः॥

## सम्राट्सुताभिनन्दनम्

अप्रकाशितेयं रचना 'प्रिन्स आफ़ वेल्स' महाभागस्य भारतागमनकाले कविना कृता। सर्वे श्लोकाः तस्यैव स्तुतौ विरचिताः सन्ति।

## होलोत्सवः

'होली' इति नाम्ना प्रसिद्धस्य भारतीयहिन्दूत्सवस्यावसरे लोकैः गीयमानानां संगीतानां सस्कृतश्लोकबद्धोऽयं ग्रन्थः। ग्रन्थेऽस्मिन् विरचिताः सर्वेऽपि श्लोकाः मर्यादातिरेकिणोऽश्लीलाश्च।

## काशीनाथस्तवः

'काशीनाथस्तव.' अपरपर्यायः 'श्रीनाथस्तवः' इति नाम स्तोत्रकाव्यम्। टिप्पणिसंवलितेऽस्मिन् ग्रन्थे श्लेषमादधाना दशश्लोकाः विद्यन्ते। इमे मन्दाक्रान्ताछन्दोबद्धाः। सर्वेऽपि श्लोकाः द्व्यर्थकाः। भगवता काशीनाथेन सह श्रीकाशीनाथद्रविडस्यापि अर्थबोधो जायते। यथा ग्रन्थस्यावसानश्लोकेन स्फुट्यते—

श्रीमत्कुन्दननन्दन - वैद्यश्रीकृष्णराम - रचितम्।
मन्दाक्रान्तादशकं काशीनाथं द्विधा परामृशन्॥

## माधवपाणिग्रहोत्सवः

अस्मिन् पुस्तके महाराजमाधवसिंहद्वितीयेन सह सम्पन्नस्य राज्याः सूर्यायाः शुभपाणिग्रहणोत्सवस्य वर्णनं वर्तते।

**गोपालगीतम्**

अप्रकाशितोऽय ग्रन्थोऽद्यापि नयनगोचरता नागमत्। नाम्ना प्रतीयते यदस्मिन् ग्रन्थे कविना भगवतः श्रीकृष्णस्य स्तुतिः कृता।

**काव्यमाला प्रशस्ति**

लघीयसी पुस्तिकेयं 'काव्यमाला' इति नाम प्रसिद्धायाः मुद्राक्षरशालायाः प्रशंसायां विरचिता। अनया सह सम्पादकस्यापि स्तुतिः कृता। प्रकाशितस्यास्य ग्रन्थस्य केचित् श्लोकाः 'मुक्तक-मुक्तावल्यां नयनगोचरतां समायान्ति।

## सिद्धभेजमणिमाला

ग्रन्थोऽयमायुर्वेदविषयकः। अस्मिन् पञ्चगुच्छकाः वर्तन्ते। तत्र प्रथमः उपोद्घातरूपः, द्वितीयश्च हरीतकी - पक्वान्न - वर्णनपरः। एतेषामपि बहून्यवान्तराणि प्रकरणानि सन्ति। येषु पौष्टिकवर्ग - शतावरी - सुगन्धिवर्ग-फलवर्ग-सिद्धान्तादि-वर्गाः वर्तन्ते। भिषग्वरोऽयं पक्वान्नेनैव रोगार्तानां जनानां रोगान् दूरीकृतवान्। एकस्मिन् श्लोकेऽयं लड्डुक वर्णयन्नित्थं वक्ति—

मिष्टं नटीनामधरोष्ठवत्परं प्रबुद्धपीनस्तनवत् सुवर्तुलम्।
स्नेहप्रगाढं सुहृदा चरित्रवल्ललत्यलं लोचनलोभि लड्डुकम्॥

जयपुरनगर्याः मिष्ठान्नेषु प्रसिद्धतम 'चूरमा' इत्याख्यं भोज्यान्नमत्रापि वर्णितम्। अस्य निर्माणविधिं वर्णयन् कविरित्थ वक्ति—•

मृदितविरलसर्पिः गुद्धगोधूमचूर्णं,
सलिलनिबिडवद्ध गोमयाग्नौ विपक्वम्।
'तितउ' शुचिघृतेन प्लावितं शर्कराढ्यं,
गुटि-सुरभि सुहृद्भि र्भुज्यता चूर्णमाख्यम्॥

यद्ययं चूर्णः वाट्या माष-सूपेन सहोपभुज्यते खाद्यते वा, तह्र्यनेका रोगा दूरीभवन्ति।

पित्तरोगार्तानां पुरुषाणां कृते जलवल्याः (जलेबी) भक्षणमेवावश्यकं स्वीकुर्वन् भिषग्वरोऽयमित्थं वक्ति—

जलबलिवलयानि प्रौढपित्तक्षपाणि,
क्षतपवनभयानि प्रोल्लसद्-विस्मयानि।
मधुररसमयानि श्लाघनीयानि यानि,
स्फुरदरुचि - जयानि प्रेमतो वर्णयामि॥१८२

मिष्ठान्नेषु प्रसिद्धस्य कलाकन्दस्यापि वर्णनं प्राप्यते। 'आलू अरवी' इत्याख्ययोः शाकयोः भक्षण हानिकरं भवतीति साधु निर्दिष्टमनेन। तृतीये गुच्छके स्वास्थ्य-संरक्षणार्थं रसादिभेदस्य, चतुर्थे ज्वरादिरोगग्रस्तानामौषधिसकेतस्य, पञ्चमे च पारदादीनां वर्णनं कृतं वैद्येन। कया रीत्या कश्चिदपि चिकित्सकः रोगनिदाने साफल्यमाप्नोतीति सम्यक् वर्णनेन ग्रन्थोऽयं परिसमाप्यते। उपयुक्तभाषायाः कवित्वशक्तेश्च सम्यग्ज्ञानं जायते।

# वसुमतीचित्रसेनीयम्

शंकरलाल स्वर्णकारः

**लेखकपरिचयः**

नाटकस्यास्य कर्त्ता अप्पय्यदीक्षितो दक्षिणभारतस्य प्रख्यातविदुषोऽप्पय-दीक्षितस्य सोदरस्य पौत्रः। स खलु नीलकण्ठदीक्षितस्य सहोदर नारायणदीक्षितस्य पुत्रश्च। किन्तु नाटकस्य प्रस्तावनाया नाटककारेण स्वपितुर्नाम 'अप्पय्यदीक्षित' इति कथितम्। अप्पय्यदीक्षितः खलु नाटककारस्य पितृव्य आसीत् नाटककारश्च तस्य पुत्रकृतकः। नाटककारस्य वास्तविक नाम 'चिनप्पः' 'चित्र अप्पयो' वा आसीत्।[1] नारायणदीक्षितस्य पञ्च पुत्रा आसन्—आच्चन्, अय्या, चिनप्प, चन्द्र-कलावतंस, अतिरात्रयाजी च।[2] तेषु तृतीय चिनप्प एव प्रस्तुतनाटकस्य रचयिता।

नीलकण्ठदीक्षितस्य सहोदरत्वेन अप्पय्यदीक्षितस्य तेन सह समकालिकत्वमपि

---

1. Dr. V. Raghavan—New Catalogus Catalogorum, p. 200.

**नाटककारेण तन्त्रसिद्धान्तदीपिकाख्यायां स्वकृतौ स्वमातुर्नाम भूमिदेवीति कथितम्। तद्यथा—'इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठाप-नाचार्यचतुरधिकशतप्रबन्धनिर्माणधुरन्धरमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्या-य्यादीक्षितपौत्रेणालंकारतिलकाद्यनेकप्रबन्धनिर्मातुरप्पयदीक्षितपुत्रेण भूमिदेवी-नन्दनेन अप्पयदीक्षितेन विरचितायां तन्त्रसिद्धान्तदीपिकायां प्रथमस्याध्यायस्य द्वितीयः पादः।'**

**[अनेन नाटककारस्य भूमिदेवीनन्दनत्वं स्पष्टं भवति। तेन चास्य नील-कण्ठदीक्षितस्य सोदरत्वमपि स्पष्टमेव यतो हि नीलकण्ठदीक्षितेन नलचरितनाटकस्य प्रस्तावनायामात्मनः कृते "भूमिदेवीगर्भसंभव" इति कथितम्।] तन्त्रसिद्धान्त-दीपिकाया हस्तलेखो मद्रपुरे अड्यरग्रन्थालये वर्तते। तत्र हस्तलेखसंख्या—** 30 A. 16.

2. Foreword to Accādikṣitendravamśāvali by P. P. S. Sāstrī, p. ii.

स्पष्टम्। नीलकण्ठदीक्षितेन १६३७ तमे खिस्ताब्दे 'नीलकण्ठविजयचम्पूः' विरचिता। अन्यच्च नाटककारोऽयं मदुराधीशस्य चोक्कनाथनायकस्य (१६५९-१६८२ ई०) 'चिन्नबोम्म' नाम्नः सामन्तस्याश्रयं लब्धवान्।[1] अतो नाटकस्यास्य रचनाकालः खिस्ताब्दीयस्य सप्तदशशतकस्य उत्तरभाग इति विनिश्चेतुं शक्यते।

**कृतयः**

नाटककारेणानेनाधोलिखिता ग्रन्थाः प्रणीताः।

(अ) वसुमतीचित्रसेनीयम् नाटकम्[2]
(आ) अतिदेशलक्षणपुनराक्षेपम्[3] (मीमांसाग्रन्थः)
(इ) तन्त्रसिद्धान्तदीपिका[4] (मीमांसाग्रन्थः)
(ई) दुरूहशिक्षा[5] (मीमांसाग्रन्थः)
(उ) प्रसिद्धशब्दसंस्कारः[6] (व्याकरणग्रन्थः)
(ऊ) प्राकृतमणिदीपः[7] (व्याकरणग्रन्थः)
(ए) उमापरिणयः[8]

**नाटकस्य कथा**

कलिंगाधिपतिः शान्तिमान् स्वकन्याया वसुमत्याः कृते श्रेष्ठवरप्राप्त्यर्थं तपश्चरितं प्रयाग गन्तु निश्चिनोति। राज्यस्य भारं स्वामात्यस्य रैवतकस्योपरि निक्षिप्य वसुमतीं च धात्र्याः ज्वालावत्याः संरक्षणे निधाय स तपोहेतोः प्रतिष्ठते। तदनन्तरमेकदा मलयकेतुनामा शबरचौरः वसुमतीं तस्याः सखीं चतुरिकां ज्वालावतीं चापहरति। स ताः वने नयति। तत्र मृगयाप्रसङ्गागतः राजा चित्रसेनस्ताः

---

1. New Catalogus Catalogorum, p. 200.

2 Printed in the Journal of Kerala University Oriental Manuscripts Library, Vol. XIII, pt. 4 to Vol. &V, pt. 1.

3. Des. Cat. of Skt. Mss. in the Adyar Library Vol. IX, Serial No. 306, Ms. No. 20.0.24.

4. Do. Serial No. 162, Ms. No. 30.A.16

5. Do. Serial No. 307, Ms. No. 21.M.37.

6. Do. Vol. VI, Serial No. 611, Ms. No. 25.I.8.

7. Govt. Oriental Manuscripts Library, Madras. Ms. No. R. 2346.

8. New Catalogus Catalogorum, p. 200.

मोचयति। मलयकेतुश्च तस्य मित्रं जायते। प्रथमदृष्टावेव वसुमतीचित्रसेनयोः पारस्परिकानुराग उत्पद्यते। अनन्तर वसुमत्यादयः स्वदेशे निवर्तन्ते।

स्वदेशे वसुमती चित्रसेनस्य विरहेऽतीव खिन्ना दुर्बला च जायते। तस्यां भृशमनुरक्तश्चित्रसेनोऽपि योगिवेशं कृत्वा विदूषकेण सह कलिंगराज्ये आगच्छति। विरहविक्षिप्तां वसुमतीं भूताविष्टां मत्वा तस्या रोगनिवारणार्थं रैवतकस्तां योगिवेशधारिणश्चित्रसेनस्योटजे आनयति। तत्र तयोर्मेलनं जायते। किन्तु नेपथ्ये ज्वालावत्यास्तर्जनं श्रुत्वा वसुमती शीघ्रमेव स्वप्रासादे निवर्तते।

अनन्तर चित्रसेनस्य कथनेन मलयकेतुः वसुमतीं चतुरिकां चापहृत्य तस्योद्याने आनयति। तत्र पुनस्तयोस्संगमो भवति। किन्तु तदैव राज्ञः प्रधानमहिषी देवी पद्मावती तत्रागच्छति अतो राजा वसुमतीमङ्के आदाय तत्रत्यामेकां गुहां प्रविशति। देवी च चतुरिकामेव वसुमतीं मन्यमाना तां राज्ञः सहायकं विदूषकं च कारागृहे निक्षिपति।

वसुमतीचित्रसेनयोः प्रेम ज्ञात्वा देव्याः सखी सूक्ष्मदर्शिनी देवीं मन्त्रयति यत्तया स्वयमेव राज्ञे वसुमत्याः समर्पणं कर्तव्यम्। अनेन सा राज्ञः स्नेहभाजनं भविष्यति भागिनेयस्य शान्तिमतोऽपि प्रियमेव करिष्यति। अनया मन्त्रणया तुष्टा देवी तथैव कर्तुमुद्यता भवति। चतुरिकावेशं कृत्वोद्याने गन्तुं सा निश्चिनोति। उद्याने विदूषकः केनापि प्रकारेण बन्धनान्मुक्तो राज्ञः समीपमागच्छति। स कथयति यच्चतुरिका-ऽत्रागच्छत्येव। तदानीमेव चतुरिकावेशधारिणी देवी तत्र समायाति। तां चतुरिकामेव मत्वा राजा तया सह वार्तालापं करोति। वार्तालापेन देवी शीघ्रमेवावगच्छति यत्तया चतुरिका निगडिता न तु वसुमती। वसुमतीं प्रति राज्ञः स्नेहाधिक्यं श्रुत्वा सा त्वरितमेव वसुमतीदर्शनव्याजेन निर्गच्छति। तदैव देवीवेशधारिणी चतुरिका तत्रागच्छति। तया सह वार्तालापेन सर्वं रहस्यमुद्घाटितं भवति। तदैव नेपथ्यात् देव्या वसुमत्या बन्धनं श्रुत्वा सर्वे विषादपरा भवन्ति। तदानीमेव कलिंगतः प्रतिनिवृत्तः कञ्चुकी राजानं निवेदयति यत् क्रुद्धा ज्वालावती वसुमतीं हन्तुं कृत्यायाः प्रयोगं करिष्यति। अनेन सर्वे भृशं शोकाकुला जायन्ते। किन्तु तदैव राज्ञोऽमात्यः सुनीतिरागच्छति। युवराजकुमारसेनेन दानवाः पराजिता अतः प्रसन्नो भूत्वा इन्द्रः कृत्यायाः प्रतिहननायाङ्गिरसमादिदेश इति समाचारं स ददाति।

देवी पुत्रस्य कुमारसेनस्य विजयेन प्रसन्ना सती राज्ञे वसुमत्याः समर्पणं निश्चितवतीति अन्तिमाङ्के चतुरिका राजानं निवेदयति। तदैव वसुमत्याः पितुः शान्तिमतस्तपश्चर्या पूर्णा भवति। स आकर्षविद्याप्रयोगेण वसुमतीं स्वसमीपमाकर्षति। वसुमतीमदृष्ट्वा सर्वे शोकाकुला जायन्ते। तदैव आङ्गिरसेन प्रहृता स्तोकजीवशेषा वस्त्रावरणेनावृता कृत्या तत्रागच्छति। तामेव वसुमतीं मत्वा सर्वे विलपन्ति।

किन्तु विदूषकः तां कृत्यां प्रत्यभिज्ञाय सर्वान् निवेदयति। सर्वे चकिता जायन्ते। अत्रान्तरे दिव्यविमानारूढः सपरिवारः शान्तिमांस्तत्रागच्छति। स निवेदयति यज्ज्वालावती पिशाच्याविष्टासीत् अतोऽत्र तस्याः कोऽप्यपराधो नास्ति। तदा देवी वसुमती राज्ञे समर्पयति।

## समीक्षा

**कथावस्तु**

नाटककारेणास्य रूपकस्य नाटकमिति सञ्ज्ञा कृता। किन्तु तस्यैव कथनानुसारं 'अप्रयुक्तपूर्वमुत्पाद्यवस्तुकं च रूपकमिदम्।' उत्पाद्यवस्तुत्वेनास्य नाटकं नाम न सिद्ध्यति यतो हि नाटके कथावस्तुना प्रख्यातेन भवितव्यम्।[1] रूपकमिदं प्रकरण-कोटावपि गणना नार्हति यतो हि 'अमात्यविप्रवणिजामेकं कुर्याच्च नायकमि' ति[2] नियमस्यात्रोल्लंघनं वर्तते। तथाहि रूपकस्यास्य नायको राजास्ति। वस्तुनायकयोः दृष्ट्या रूपकमिदं नाटिकाकोटिमर्हति।[3] किन्त्वङ्कविधानादिदृष्ट्या रूपकमिदं नाटिकाकोटिमपि नाधिरोहति। अतो रूपकमिदं नाटकं वा प्रकरणं वा नाटिका वेति प्रश्नः समुत्पद्यते। सत्स्वपि सर्वेषु नाटकधर्मेषु केवलं प्रख्यातवृत्तस्याभावे सति रूपकमिदं नाटकश्रेण्यामेव स्थानमर्हतीति मे मतिः।

नाटकेऽस्मिन् पञ्चाङ्काः सन्ति। द्वितीयतृतीयपञ्चमाङ्केषु विष्कम्भस्य चतुर्थाङ्के च प्रवेशकस्य प्रयोगः नाटककारेण कथांशानां सूचनाय कृतः। विष्कंभकाः सक्षिप्ताः सन्ति। तृतीयाङ्कस्य विष्कंभे केवलमेकमेव मध्यमं पात्रमस्ति। अतस्तत्र शुद्धविष्कंभोऽस्ति।[4] घटनानां संयोजने नाटककारस्य कौशलं श्लाघनीयं वर्तते। द्वितीयाङ्के योगिवेशधारिणः राज्ञो नायिकायाश्च मिलनमतीव कौशलेन संयोजितम्। चतुर्थाङ्के चतुरिकया देवीवेशधारणेन देव्या च चतुरिकावेशधारणेन कथायां रोचकता कौतूहलं च विवर्धिते।

अर्थप्रकृतिकार्यावस्थानां समावेशोऽत्र सम्यग्रूपेण कृतः। राज्ञश्चित्रसेनस्य वसुमतीविषयकोऽनुराग एव नाटकस्यास्य बीजम्। द्वितीयाङ्के नायकनायिकयो-स्सगमानन्तरं कथार्थविच्छेदे सति 'निरोद्धव्या' इत्यादि ज्वालावत्या कथने बिन्दुः परिलक्ष्यते। विदूषकस्य चरितमेवात्र पताकारूपेण वर्णितम्। ज्वालावत्या कृत्या-

---

१. साहित्यदर्पणः ६।७; दशरूपकम् ३।२४।
२. दशरूपकम् ३।३९; साहित्यदर्पणः ६।२२५
३. दशरूपकम् ३।४३।
४. साहित्यदर्पणः ६।५६।

वेष्टमानां महीपृष्ठे पांसुरक्तावकुण्ठिताम्।
पश्यन् प्रियतमामेवं पाटये किं न मे दृशौ।। ५।१७

प्रजापालकः स प्रजारक्षणाय सदैव तत्परोऽस्ति। प्रजाः तद्विषये कथयन्ति—

यस्मिन् न जातु वन्ध्या नः प्रार्थना त्वयि गोप्तरि। ५।२०

**भाषा-शैली**

नाटकेऽस्मिन् गद्यपद्ययोः परिमाण प्रायः समानमेवास्ति। संस्कृतनाटकेषु सामान्यतो गद्यापेक्षया पद्यस्याधिक्यं वर्तते। किन्तु पञ्चमाङ्कपरिमितेऽस्मिन्नाटके केवला एकादशाधिकशततमा श्लोकाः वर्तन्ते। शार्दूलविक्रीडितम्, अनुष्टुभ्, वसंततिलका, मंदाक्रान्ता, गीति, मालिनी, स्रग्धरा, हरिणी, शिखरिणी, पुष्पिताग्रा, प्रहर्षिणी, शालिनी, आर्या, वंशस्थ, उपजाति, इंद्रवज्रा, रथोद्धता, द्रुतविलंवितञ्चेत्यष्टादशछन्दसां प्रयोगोऽस्मिन् रूपके नाटककारेण कृतः।

अलकाराणां निवन्धनमपि स्वाभाविकरूपेणास्मिन्नाटके वर्तते। रूपकोपमासमासोक्तिव्यतिरेकपरिकरसभावनानन्वयादीनामलंकाराणां प्रयोगेन भाषा समलंकृता वर्तते। अनन्वयस्योदाहरणं यथा—

करचरणदृगाद्य सद्वितीयं यदस्या
भवति वपुषि किञ्चित् तन्मिथः साम्यमेति।
यदपि सुवदनाया वक्त्रमेकं सुवृत्तं
तदपि वहति हन्त स्वानुबिम्बेन सम्यक्।।१।१०

लोकोक्तिसुभाषितादीना समावेशः पर्याप्तमत्र विद्यते। तद्यथा—
शारिकां वर्धयित्वा मार्जाराय दत्तवानेषः—चतुर्थाङ्के
एष नवनीतोद्भेदकाले योक्त्रविच्छेदः—चतुर्थाङ्के
घर्मतप्तस्य वनस्पतेरयमशनिघातः—चतुर्थाङ्के
प्रायो मतिर्वा रूपं वा यस्य बाल्ये प्रकृष्यते।
स विपर्ययते ताभ्यां प्राप्ते वयसि यौवने।।३।४।।
तावत्समाद्रियते कृतकः स्वाभाविकोऽपि मणिः।
एकस्मिन्नपवरके यावन्नो चेक्ष्यते युगपत्।।३।३।।
णीहला पंकदिद्धा वि बिसिणी एव्व सोहणा।।३।४।।
कथोपकथनानि सरलानि प्रभावोत्पादकानि च सन्ति। यथा—

चतुरिका—भर्तः! अद्यापि दुर्लभदर्शना प्रियसखीति भणितुं न निस्सरन्ति जिह्वातोऽक्षराणि।

देवी—अय्यउत्त ! किं भणामि ? ठिओ अपजसो जं वहिणीमुहेण पोम्मावई सपत्तिं णासिअवइ त्ति। ज सच्च उर विदारिअ दंसेमि। तह वि को एत्थ वीससदु।

कतिपयेषु स्थलेषु कविकल्पनातीवोत्कृष्टा वर्तते। तद्यथा—

सर्वाङ्गीणमनीलनं च मघवा भेजे सहस्र दृशां
धाता विभ्रमगर्भमैक्षत दृशा जीर्णोऽप्युदीर्णस्मरः।
देवोऽपि स्मरशासनः स भगवान् पञ्चाननत्वं दधे
द्रष्टु नाम तिलोत्तमामपि पुरा स्वर्वारवामभ्रुवम्॥२०१॥

**रसनिष्पत्तिः**

नाटकेऽस्मिन् शृङ्गारोऽङ्गी रसः। विभावानुभावसंचार्युपचितः शृङ्गाररस उत्कृष्टतया निष्पन्नो वर्तते। अन्ये प्रायः सर्वे रसां अङ्गरूपेण समाविष्टाः। यथा—योगिवेशधारणप्रसङ्गे शान्तरसः, कुमारसेनस्य दानवविजयप्रसंगे वीररसः, म्रियमाणायाः कृत्याया वर्णने करुणबीभत्सौ, शान्तिमता आकर्षविद्याप्रयोगप्रसगे च अद्भुतरसः परिलक्ष्यते। नाटककारेण अन्तिमाङ्के निर्वहणसंधौ अद्भुतरसस्य समावेशो नाट्यशास्त्रनियमानुसारमेव कृतः।[1]

**अलौकिकतत्त्वानां समावेशः**

ज्वालावल्या कृत्याप्रयोगः, कुमारवीरसेनेन दानव-पराजयः, प्रसन्नेनेन्द्रेण कृत्याप्रतिकारायाङ्गिरसस्य नियुक्तिः, शान्तिमतस्तपश्चर्यया भगवतः शिवस्य कृपा, तया च शान्तिमत आकर्षविद्याप्राप्तिश्चेति घटनानां संयोजनं कृत्वा नाटक-कारेणात्रालौकिकतत्त्वानां समावेशान्नाटके कौतूहलं रोचकता च विवर्द्धिते।

---

१. साहित्यदर्पणः ६।१०।

# जागरणम्

माया तिवारी

विंशशताब्द्यां नवीनशैली-विषय-प्रकाराश्रितानि गीति-काव्यानि रचितानि बहुभि. कविभिः । गीतिकाव्यानि स्वमार्मिकतया कल्पनाप्रवणतया स्वानुभूत्या च मनोरमाणि सन्ति। डॉ० शिवशरणशर्मशास्त्रिणा प्रणीतं 'जागरणम्' इति ख्यातं मनोहरगीतिकाव्यमत्र विश्लेषितम्।[1]

**लेखक-परिचयः**

डॉ० शिवशरणशर्मा विक्रम-संवत् १९८५ वर्षे भैरमपुरग्रामे फतेहपुर-जनपदे समजनि। जात्या ब्राह्मणोऽस्ति कविः। कान्यकुब्जद्विजश्रेष्ठः प० सत्यनारायण द्विवेदः श्रीमती सौभाग्यवती च पितरौ स्तः। कविना प्रयाग-विश्वविद्यालयतः- डी० फिल्० उपाधिः प्राप्तः। एम० ए० परीक्षा संस्कृते हिन्दीविषये च काशी-विश्वविद्यालयतः उत्तीर्णा। अधुना स दतियापुरीस्थे शासकीय-स्नातक-महाविद्यालये मध्यप्रदेशे संस्कृतस्य प्राध्यापकोऽस्ति। तेन 'श्रीमद्भागवतानुशीलनं', 'कालिदास और उनका मेघदूत' इति ग्रन्थौ लिखितौ। साहित्यालोचने, काव्यकर्मणि च तस्य प्रवृत्तिः।

'जागरणम्' इति काव्यं शर्मणा वि० सं० २०२० वर्षे विरचितम्। १९६३ ख्रिष्टवर्षे तत् प्रकाशितम्, कविना स्वयमेवैतस्य सुरुचिरः हिन्दीभाषायामनुवादः कृतः।

**काव्य-विषयः**

अस्मिन् काव्ये २९ गीतयः सन्ति। यद्यपि काव्ये विविधा विषयाः सन्ति, किन्तु कविना राष्ट्रिय-कवितानां देशवासिना जागरणसबंधिकवितानां वैराग्य-भावपूर्ण-कवितानाञ्च रचना विशेषतः कृता।

'भरतमही' कवितायां कविना भारतभूमेः बाह्यस्वरूपस्यातःशक्तेश्च निरूपणं

१. प्रकाशक—भारतीय-निकेतन, अमरजयी, फतेहपुरी, उ० प्र०, १९६३ ई०

कृतम्। नगराजहिमालयविन्ध्येन्द्रकीलादिपर्वतानां त्रिविधतापशमनशीतल-समीरयुक्ताया गंगाशोणयमुनादितरंगिणीभिः पूताया भारतभूमेः क्षात्रधर्मः, तस्याः मूर्तिमत्सौन्दर्यञ्च कविना चित्रिते—

'बहुविधसाधनसहिता,
दुर्गाऽखिलशक्ति युता,
सज्जनपालननिरता, दुष्टनाशिनी ॥
शौर्यतपस्त्यागमयी,
शान्तिरता कान्तिमयी,
जननीयं क्षेममयी स्नेहमयी स्नेहरूपिणी ॥
जयतु जयतु भरतमही पुण्यशालिनी।'

कवेर्मातृभूमिप्रेमात्यन्तभक्तिभावपूर्ण तरलञ्चास्ति। मातृरूपिणी भरतमही मृदुहृदया कल्याणमयी निर्मलमहिमयुक्ताऽस्ति। तस्याः कल्याणमयी वाणी जगति गुञ्जरिताऽस्ति। देशवासिनः न केवल देशभक्ता किंतु रक्षणसामर्थ्येन युक्ता भवन्तु। तद्यथा—

'चत्वारिंशत्कोटिमितास्ते पुत्रा जयिनो वीराः,
वज्रबाहुधृतखरकरवालाः, साहसिनो रणधीराः,
कस्त्वां जेतुं शक्तः?'

भारतभूमेः महत्ताज्ञानपरम्परया कवेः जागरणगीतिषु चेतनास्फूर्त्योः संचारः क्रियते। प्राचीनगौरवं संस्कृतिश्च सदैव प्रेरणां यच्छतः, स्मरणीये च स्तः। अतीतं सर्वदा संदेशप्रदातृ मार्गदर्शकं च भवति। भारतदेशस्य दर्पपूर्ण-वैभवशालि-गौरवं स्मृत्वा कविः पुनः पुनः तामेव स्थितिं, पुरातनभारतस्यादर्शं समक्षं कर्तुं प्रार्थयते। यथा 'भारतदेशः' गीतौ—

'प्रार्थयामो देश भारतवर्ष हे!
देहि पूर्वस्मिन् स्वरूपे दर्शनम्!
बन्धुवत् स्युर्यत्र सर्वे प्राणिनः,
स्नेहतः स्यात् सर्वमप्यनुशासनम्,
यत्र भक्तिज्ञानसत्कर्मस्थितिः,
यत्र शौर्यं दुष्कृतानां नाशनम् ॥

यत्रातीतकालेन मनसे शान्तिः मार्गदर्शनं ज्ञानज्योतिश्च दीयन्ते, तत्र वर्तमान-

कालेन चिन्ता आक्रोशश्च जनमनसि जन्यते। वैभवदर्पपूर्णमतीतम् वर्तमान-दुष्कालश्च कवेः मानसमांदोलयत्युद्वेलयति च। 'निश्चयः' इति गीतौ कविः संतप्तेन हृदयेन चीत्कारं करोति—

'कीदृश सुखसेवन रे
व्याकुल-जननी, मदीयं ज्वलति रम्यनिकेतन रे।
स्वर्णभूमिरियं मनोज्ञा हन्त! जाता दैन्यपूर्णा,
पीडिताऽस्ति बुभुक्षया या, स्वामिनी स्वयमन्नपूर्णा;
कीदृशी शान्तिर्विनाऽस्या. सर्वदुःखविदारणं रे।"

कविः निश्चय करोति—

"कण्टकानिच्छामि बन्धो! सर्वथा कुसुमानि हित्वा,
स्वेप्सितं प्राप्स्याम्यह , त्यक्ष्यामि वेद जीवन रे!"

वंचकसंसारस्य दुर्गुणै. पीडितः कवि. स्वार्थभावनायाः तिरस्कार करोति। वैमनस्यहिंसादिभिः पीडितां धरामुद्धर्तु कः समर्थः। भारतं सर्वदा उदात्तभावनानां प्रोत्साहनं करोति, कितु युद्धभूमौ तत्सदैव विजयि अभवत्। शरणागतवत्सला भारतभूमिः शक्तिशालिनी वर्तते। आधुनिकबुद्धिवादियुगे बुद्धिः सर्वत्र शासिकाऽस्ति। भारतमेव भूतपरायण-बुद्धिवादियुगे शान्ति प्रदातुं समर्थम्। यथा—

"कीदृशीयं भौतिकी सम्पन्नता?
मानसे शान्तिर्न चेदिह विद्यते।
आत्मविज्ञानं त्वदीय वाञ्छित
यत् समस्ताना सुखानां साधनम्॥"

कविना राष्ट्रदेवस्यार्चनाया जीवन कुसुमान्यर्पितानि। भारतराष्ट्राय रामदधीच्यादिभिर्महापुरुषैः प्राणानामुत्सर्गः कृतः। भारतभूमिः कवये ईश्वररूपिणी वर्तते। कविः कथयति यद्धन्याः पुरुषाः भारतस्य मगलमय्यां भूमौ जन्म गृह्णन्ति। आर्यावर्तस्य धूलिः निखिलपापहरणाय समर्थ.। आधुनिकभारतस्याह्वानमित्थं क्रियते कविना। 'राष्ट्रदेव' इति गीते सतप्तः कविः कथयति—

एकस्मिन् दिवसे त्व सर्वेषा गुरुरासीर्विख्यातः,
अद्यास्मान् क्लैव्यादतिविषमां दुरवस्थां हा सम्प्राप्तः।
धिग् जीवनमस्माक यत् पश्यामस्त्वां विपदामग्नम्॥"

तथा हि—

"हन्त! न किं द्रक्ष्याम्येतस्या वैभवयुतं सशक्तं रूपम्?
किं तद् दन्तकथावत् स्थास्यति, यदिह सदा प्रत्यक्ष भूतम्?
अद्य सैव भारतवसुंधरा दीना हीना सहते तापम्,
व्यर्थमिद जीवनं धिगस्मान्, धिग् धिक् सर्व क्रियाकलापम्।
धिक् तान् सुतान्, सम्मुखं येषां रोदिति माता दुःखकातरा॥"

देवैरपि वन्दिता भारतवसुधा दीना हीना जाता। शान्तिदात्री माता कष्टान्यायसन्तप्ता दृश्यतेऽधुना। यत्र दुष्टाना विनाशहेतू रामकृष्णौ युद्धवन्तौ तत्रैव दुष्टानां स्वतन्त्रता कथं वर्तते। अधुनैव महात्मगान्धिना सत्यहिंसासरणिः निर्मिता किंतु अत्र कुत्रापि शान्तिर्न दृश्यते। कविना देशदुर्दशां पश्यतापि नैराश्यं विहाय जागरणोद्बोधनस्य गीतयः गीयन्ते। जागरणस्य गीतौ तारुण्यस्य दर्शनमोजसो स्फुरणञ्च वर्तते। जागरणस्य प्रेरणां प्रकृतिरपि यच्छति। कविः अन्यकवीनां युगप्रवृत्तिमालोचयति। पुरातनपद्धतिस्त्याज्यास्मिन्नवीनयुगे। यतोऽद्य तादृशः सुकालो नास्ति यस्मिन् मधुररागिणी गेयाऽऽसीत्। परम्परागतकाव्यविषयाः श्रृंगारपरिहास-विनोदादयश्चोपयोगहीना, जाताः। भैरवी-रागः जागरणायोद्बोधनाय च रचनीयः। रौद्रादिरसानामपेक्षा वर्तते न तु मधुरशिखरिण्याः।

'तद् गानं गीयता, यन्मनसि कुरुतां नवसाहससञ्चारम्।
उत्तिष्ठन्तु जना यच्छ्रुत्वा, सद्य एव कृत्वा हुङ्कारम्,

अथवा भज मूकतां, यतो मा कलङ्किता स्याद् हंसगामिनी॥"

आत्माजरामरनित्यश्चास्ति। 'उद्बोधनम्' इति गीते कथयति कविः। 'मार्गस्य निर्धारणं कुरु! अन्यानपि सन्मार्गं दर्शय। भारतवासिनः प्रति कथयति यत् कान्यपि कार्याणि कठिनानि न सन्ति विश्वे। सर्वशक्तिमन्तः बुद्धिमन्तः अजरामरा देशवासिनः स्वात्मगौरव स्मृत्वा कर्त्तव्यपथे संलग्ना भवन्तु। अस्यां वसुधायामेव हि रामकृष्णादयोमहापुरुषा जाताः। देशवासिनः पुनः तेषां महापुरुषाणामादर्शं स्वीकुर्युः। भारतमाता उद्धरणीया। 'उद्बोधनम्' इति गीते यथा—

"हा! मोहनिशायां सुप्तस्त्वम्,
जागृहि शीघ्रं निद्रां हित्वा।
उत्तिष्ठ साम्प्रतं पुरुषसिंह!
गर्जनं महाभीमं कृत्वा॥

त्वं सकलदुरितनाशक्षमोऽसि
संस्मर पराक्रमिन् ! निजशक्तिम्।
को रणस्थले स्यात् शक्तः ?
त्व यदि धारयसि वीरवृत्तिम्॥
संसृति वेदनामयी वीर ! निजपौरुषेण शीघ्र हर्षय॥"

प्रयाणगीतौ कर्मगानविजयगाने स्तः। सघर्षेषु सुखमनुभवति कविः कर्त्तव्यपथे एकाकी गमनायोद्यतः। ससारस्य विचित्रा गतिरस्ति। मानवस्य तृष्णाऽपरिमिता। मृगमरीचिका-सदृशं संसारमनुधावति मनः। करुणस्वरेण कविर्मानसभावमुद्घाटयति—

'सर्वजीवजीवनाख्यायिका, करुणाया लिप्या लिखिता,
सुखेन साक दुःख तिष्ठति, जीवनेन साक मरणम्।
लोको मामवगच्छति सुखिन, दृष्ट्वा मे बाह्यं रूपम्,
विडम्बनेयं हा ! ससारे, कोऽपि न पश्यति हृत्तापम्।'

'प्रेम' इति कवितायामुदात्तभावनाया विस्तारो दृश्यते। प्रतिजनं स्निह्यति यः तस्य प्रेमापि दिव्यमस्ति। किंतु विक्रये समर्थपुरुषैः तत्प्रेमाधुना कलङ्कितं जातम् कविः तान् धिक्करोति—

'संसारः सुखिनं कामयते,
विपद्गतं दूरत उपेक्षते,
सञ्जातः प्रणयो व्यापारो विडम्बना महतीयम्॥

कृष्णप्रेमसम्बन्धि पद्यत्रयमस्ति। 'वृन्दावनम्', 'दर्शनोत्कण्ठा', 'भ्रमरगीतम्' च। भगवन्निवासे वृन्दावने सर्वाणि वस्तूनि सन्ति। 'भ्रमरगीतम्' इति गीते भ्रमरगुंजनेन कृष्णविरहव्याकुलगोप्यै सतोषोऽस्ति यत् कृष्णो लोककल्याणकार्येषु संलग्नोऽस्ति। 'मृत्युः' इति गीते मृत्योः अजेयशक्तेः परिचयो दीयते कविना। मृत्योः लोकसाम्यकारिस्वभाव एव तस्य श्रेष्ठताऽस्ति। मृत्योः स्वाभाविकं मानवीकरणं कृतं कविना। यथा—

"विद्यते सर्वत्र मृत्यो ! ते विचित्रं शासनम्
भूतले सर्वोन्नत तव राजते सिंहासनम्।

विस्तृत - भुवन समस्तं, ते प्रिय क्रीडास्थलम्
सर्वसहारोऽतिघोरः, क्रीडनं तव मञ्जुलम्।
रसमयं गान त्वदीयम्, लोककरुणाक्रन्दनम्।।"

'संसृतेर्वैचित्र्यम्' इति कवितायां कविः संसारस्य वैचित्र्यमसमानता-मसारतां मृत्योरपराजेयताञ्च वर्णयति। वैचित्र्य ज्ञातु न कोऽपि शक्तोऽतः कविरस्य वैचित्र्यं नटवरलीलाविस्तारमात्र मत्वा सतुष्टो भवति।

'प्रश्नः' इति गीते दरिद्रताया विडम्बनाया वास्तविकचित्रणमस्ति। सत्य-वादिदरिद्रव्यक्तिरपि 'चौरः' इति कथ्यते धनिकवर्गेण। दरिद्रता तस्य विवशता-ऽभिशापश्च।

'पीतमुखोऽसौ खिन्नो जातः।
दुर्बलेन चाग्रजेन साकम्
विवशो गृहाद् बहिर्निर्गच्छन्
सोत्कण्ठाभ्यां मृदुनयनाभ्याम्
आलोकितवान् गुडं तदाऽसौ,
यस्तु पिहितं आसीदतिजीर्णे
मलिनपटे बहुयत्नपूर्वकम्।।'

'सिद्धार्थस्य महाभिनिष्क्रमणम्' इति कवितायां सिद्धार्थस्य सुखपूर्णगृहस्थजीवनं पितृमातृस्वसृणा वात्सल्य, पत्नीपुत्रौ प्रति सिद्धार्थस्य मोह वर्णयति कविः। तत्रापि जगतो दुःखेन पीडिताना जनाना क्रन्दनं श्रुत्वा विश्वकल्याणहेतोः सिद्धार्थस्य गृहत्यागस्य मानसिकद्वन्द्व वर्णयति। जगत्कल्याणहेतोः स सर्वाणि सुखानि त्यजति स्म। सिद्धार्थः छन्दक कथयति—

'अहमिच्छामि जगद्द्वन्द्वानामचिरं भवतु विनाश;
अहमिच्छामि पीडितानां नश्यतु पीडासंत्रासः।
यातु लय सर्वथा चराचरतस्तापानां सत्ता,
शीघ्रं भवतु समग्रेयं सुखशान्तिमयी मानवता।'

'भावना-बुद्धिसंवादः' इति कवितायां कविः सभामञ्चे बुद्धिभावनासंवादं करोति। बुद्धिरात्मानं ससारस्य शासिकां व्यवस्थापिकाञ्चादर्शयत्। सैव पुरुषान्सभ्यान् संस्कृतान् च करोति। सा कल्पना-हृदयात् दूरं यथार्थे विचरति। तस्याः पद विज्ञानमयं समुज्वल-कांतिमयमस्ति। भावना स्वं तर्केणासंस्पृष्टास्मि इति वदति। तस्याः प्रकाशनं मौनभावेनापि भवति। सा क्षुद्रानुत्तमांश्च समानं मन्यते।

तस्याः क्षेत्रे समभाव आनन्दश्च भवतः। तदनुसारं बल-शास्त्र-यन्त्र-धनैः सुखं न भवति किंतु भक्त्या भवति। सरस्वती सभापतिरासीत् तस्याः सभायाः। सा बुद्धिभावनयोः मेल शिक्षयति। यथा—

'विरोधिता चेदनयोर्व्रजेत् क्षयं,
सुसङ्गमश्चात्र भवेद् द्वयोः शुभः।
तदा तु लोकस्य कृतार्थताऽखिला
सुनिश्चिता चापि सुखस्य पूर्णता।'

**भावपक्षः**

अस्मिन् ग्रन्थे कवेः मनसो विभिन्नभावोर्मयो वर्णिताः सन्ति। क्वचिद्देश-वासिभ्यः स्फूर्तिप्रदोद्‌बोधनानि क्वचिदतीतस्य मधुरस्मृतयः क्वचिच्च विशुद्ध-साहित्यिकोद्‌गाराः सन्ति। काव्ये भावात्मिका नवीनता वर्तते। विषयवर्णनस्य नूतनता, हृदयपक्षस्य बहुलता च सर्वत्र दृश्यते। यत्र राष्ट्रियगानं कृतं कविना ओजः पूर्ण वीररसमयं गीतञ्च गीयते। तत्र विश्वकल्याणहेतोः तत्परोऽस्ति कविः। दुःखजर्जरसघर्षपूर्णे जीवनेऽपि स दुःखं प्रताडयति।

'अरे दुःख! विवशान् प्रपीडयसि भीतान् त्वं व्यर्थ दीनान्;
शक्तिश्चेदागच्छ मदीय सम्मुखमिह हित्वा हीनान्॥'

स भारतवासिभ्यः कर्मणः परिश्रमस्य च दिशां दर्शयति। शासितवर्गं प्रति सहानुभतिं प्रदर्शयति। यथा 'प्रश्नः' इति कवितायाम्। प्रकृतिवर्णनेऽपि औदार्यपूर्णा उत्साहवर्धकाः भावनाः सन्ति। यत्र कविरानदसुखमंगलानि कांक्षति बन्धुतायाः कर्मण्यतायाश्चाह्वानं करोति। अस्मिन् काव्ये राष्ट्रियकवितासु आत्मगौरव–जातिरक्षादीना वैशिष्ट्यं प्रदर्शितम्।

**रसच्छन्दोऽलंकाराः**

अस्मिन्काव्ये मानवोचितोदात्तभावना विश्वबन्धुतायां समावेशिताः। यद्यपि त्रिगुणात्मकजगदेव हि कवेः गीतीना प्रेरणाभूमिरस्ति तथापि कवेरात्माभिव्यंजनायाः प्राधान्यं वर्तते।

कविनाऽधुनिकभावा आधुनिकच्छन्दःसु निबद्धाः। छंदः सहायकमस्ति। नवीनविषययुक्ता गीतयो नवीनछन्दःसु सचेतसः पाठकस्य हृदयमावर्जयन्ति। ओजः माधुर्यप्रसादगुणानां सरलसरसभाषायां सुरुचिरगुम्फनानि कृतानि। यथा—

'चेतश्चल वृन्दावनकुञ्जम्
नन्दकुमारचरणकमलाभ्यां परिपूतं छविपुञ्जम्।

विविधविहग - कुलकलरवयुतमृदुतरुवरराजितगुञ्जम् ।
निर्मलकालिन्दीश्यामलजलविलसितलोल तरङ्गम् ॥'

ओजपूर्णः वीररसात्मकोऽयं श्लोकः—

"पौरुषं कुरुष्व हे !
नानयं सहस्व हे ॥
काल आहुतेरयम्
हन्त ! कीदृशं भयम् ?
मृत्युमन्यथा जयम्
सत्वर वृणीष्व हे !"

अलंकाराणां बाहुल्यमस्मिन् काव्ये न दृश्यते किंतु गेयतायाः माधुर्यं विशिष्टं वर्तते। अस्मिन् वीरशान्तरसयोः उचितपरिपाकोऽस्ति। युगचेतनां प्रति कवि-र्जागरितोऽस्ति। स्वानुभूतिर्मर्मस्पर्शिता गेयता भावप्रौढता इत्यादीनि वैशिष्ट्यानि काव्येऽस्मिन् सविशेषं विराजन्ते।

# कामस्य रसरूपेण प्रथमः समुल्लासः

रमाशङ्कर जैतली

कस्यापि पदार्थस्य प्रथमा परिभाषामवलोक्य परिभाषितपदार्थस्यायमेवारम्भ-काल इत्यवधारण नितान्तमसमीचीन प्रतिभाति। परिभाषा तु परिभाषितवस्तुन पूर्वसत्ताया निश्चित प्रमाणम्। अयमेवविधो नियमो य कदापि नापवदति। परन्तु यद्वस्तु गाम्भीर्यसवलित सृष्टिमूले निहित च सत् सृष्टिस्थितिकालपर्यन्त जीवनस्य चेतनायाश्च प्रत्येक पार्श्वे समुदीय प्राणिनो नानाकर्मसु व्यापारयितुं प्रणोदयितु च क्षमते तद्वस्तुनो विकासस्य चरमां काष्ठामासादयितु शताब्द्यः सहस्राब्द्यो वापेक्ष्यन्ते। दृष्ट्यानया रसरूपेण कामस्य प्रतिष्ठाया न जाने कियान् कालः व्यतीतो भवेत्। अस्य प्रथम सन्दर्शन तु तदैव सजात यदा विश्व निर्मातु नियन्तु च कामयमाना कापि [illegible] देह द्विधा विभज्य भागेनार्धेन पुरुषमपरार्धेन नारीं च समसृजत् तथा तत्सयोगेन नामरूपात्मक जगत् प्रसारयामास इयं विश्व विधातुः कमनीया कथा। यद्यपि विषयस्यास्य प्रत्यक्षसम्बन्धो न विश्वसृजा तस्य सृष्ट्या वर्तते तथा विषयमिमं निरीक्षितु परीक्षितु च सृष्टितत्त्वान्येवाश्रय-णीयान्यस्माभिः, परन्तु पूर्वोक्तेन प्रसङ्गेन निर्भ्रान्तिमिदमायाति यत् सामान्यतः समस्त-सृष्टिमूले विशेषतश्च शृङ्गाररसमूले कामतत्त्व प्रतिष्ठित वर्तते।

सृष्टिमूले प्रतिष्ठितस्य कामस्य विकासोऽपि शनैः शनैः समजायत। सर्वप्रथम शरीरेन्द्रियभूम्यामुत्तेजनारूपेण कामो निज रूपमाविरभावयत्। बहुकाल यावन्मा-नवचेतना तत्रैवापादमस्तक निमज्जिता आसीत्। एव याते बहुतिथे काले सकल्पा-शारूपेण मनसि विराजमानस्य कामस्य दर्शन सजातम्। स एव कामो वृद्धौ विचार-स्फूर्तेश्चेतनायां च गतेर्विस्तारस्य स्फीतेश्च कारणमस्तीति परिज्ञान तु पश्चादभवत्। कामस्यास्य बृहतो रूपस्य विकासे सुदीर्घः कालो निश्चितमत्यवर्तत। एतद्रूपावाप्तौ शताब्द्यः व्यतीताः समभवन्। कामस्येद रूप रसानुकूलमिति धारणा तु पश्चाद् विचारपथमायाता। सयोगवियोगयोर्विविधावस्थानामन्तराले नानानूतनरूपस्य सन्दर्शन तु ततः परं संजातम्। अनन्तरमेतस्य कारण-कार्य-सहकारिकारणदिशि ध्यानं सकेन्द्रितमभवत्। परिणामतो विभावानुभावसचारिसात्त्विकभावाः परि-चिताः समजायन्त तथैतेषां सयोगाद्रसनिष्पत्ति-प्रसगः समुत्पद्यत। लक्षणोदाहरण-

स्यावसरस्तु नितान्तमनन्तरमायातः। विस्तरेणानेन मदीयमिदमेवोद्देश्य स्फुटीभवति यत् शृङ्गाररसस्य लक्षणनिर्माणात्पूर्व तद्घटकतत्त्वानां विकासस्य या कथा भारतस्य वाङ्मये तस्य ललितकलाकृतिषु च विकीर्णा समुपलभ्यते, सा तत्परिभाषापेक्षया निश्चितमनल्पमहत्त्वपूर्णा वर्तते। इममेव मूलाधारमाश्रित्य परतः परिभाषा विनिर्मिता अभवत्। अतः परिभाषाकाले प्रवेशात्पूर्वमिदमत्यन्तमावश्यकं प्रतीयते यत्प्रथममस्माभिरपरिभाषितकाले विकीर्णानि शृङ्गाररसस्य घटकतत्त्वानि सचेतव्यानि तदनन्तरं तत्प्रकाशे परिभाषाणामुपरि विचारं कुर्मः।

प्रकृतेः पदार्थानामुपभोग स्तेषामास्वादनञ्च मानवमात्रस्य सहजः स्वभावः। उपनिषदि रम्यमेकं रूपकं प्राप्यते यत्सृष्टेरुपर्युक्त सत्यं समर्थयति। यथा—एको वृक्षोऽस्ति। तत्र सुपर्णद्वयं स्थितं वर्तते। तयोरेकः सुस्वादुफलमत्ति। अनश्नन्नन्यः केवलं द्रष्टृरूपेण स्थितः सन्नभिसचकास्ति। रूपकेऽस्मिन् वृक्षेण प्रकृतेरभिप्रायः। प्रकृतेर्भोक्ता जीवात्मा तटस्थभावेन द्रष्टा परमात्मा च वर्तते। जीवात्मा निजां क्षुधा शमयितु प्रकृतौ स्वीय पूर्णमाधिपत्यञ्कामयते। यथायथा सोऽग्रे सरति प्रकृतिस्तत्-पुरस्तान्निजं चिरनूतनमाकर्षणमुद्घाटयति। तदाकर्षणाकृष्टहृदयः स जागतिकान् पदार्थजातान् हस्ते करोति, उपभोगक्षणे तानत्यर्थ मनसा चिन्ययति तथा नवेन रूपेण तानुपस्थापयितु तन्मनसि तीव्रः समभिलाषो जागर्ति। स्थितावस्यां सः केवलं भौतिकावश्यकतापूर्त्या न सन्तोषमादधाति। पूर्वापेक्षया स्वकं जीवनं सरसं समाकर्षकं च सम्पादयितु स सर्वथा प्रयतते। परिणामतस्तद्द्वारा सङ्गीतस्य, साहित्यस्य ललितकलानां च सृष्टिः सजायते। एतेनैकतः सः स्वमनस आत्मनश्च पिपासां शमयति, अपरतश्च सः सभ्यता-संस्कृति-संवलितो भूत्वान्येषां कृते प्रगतिद्वाराणि समुद्घाटयति।

सृष्टेरादिकाले मानवो निजायामादिमायां प्रकृतायाञ्चावस्थायामासीत्। विधिनिषेधबन्धनानि हृदयेनादृत्य कार्यसम्पादने तस्य प्रकृतिर्न कदाप्यानुकूल्यमवाप। साहसशक्तिराशिर्निद्वन्द्वः संयमहीनश्च सः स्वेच्छाचारं नितान्तमाद्रियत। एवंविधो जनः कियत्या निर्द्वन्द्वतया पौरुषेण च स्वकीयां कामक्षुधमशमयत्, अस्य तु केवल कल्पनैव कर्तु शक्यते। अद्यतनो लघुकायः स्वास्थ्यदृष्ट्या जीर्णः शीर्णश्च मानवस्तदानीन्तनाना- देवदारुतरुवद्तुत्ङ्गानां स्वस्थपूर्वजानां कामोद्दीप्ति मनसो विक्षोभञ्च नानुभवितुमलम्। भोक्तृस्वभावापन्नत्वेन कामोपभोगरतास्ते पूर्वजा निर्बन्धरूपेण निजां काम-सतृप्तिमासादयितु बद्धपरिकरा आसन् उपभोगक्षणे च शरीरस्य मनसश्चेतनायाश्च स्थूलमद्वैतमन्वभवन्। परन्तु नेयं तृप्तिः शृङ्गाररसः। इयं तु क्षुतृप्तिवदेका तृप्तिरेव। एवप्रकारस्य कामोन्मेषस्य नास्ति शृङ्गाररसेन सह कोऽपि सम्बन्धः। शृङ्गाररसे कामस्य शरीरेन्द्रियभूमित ऊर्ध्व-

सचरणं नितान्तमनिवार्यम्। रसानुभूतिक्षणे कामो रसिकस्य मनसि बुद्धौ तथा तस्य कलात्मकचेतनायास्समस्तभूमौ सचरति। रसिकस्तदैवालौकिकमुखं, शान्तिं, चित्तद्रुतिं, बौद्धिकं सन्तुलनं, परां निर्वृतिञ्चानुभवति। शरीरेन्द्रियभूमौ यदा कामः समुन्मिषति मानवस्तदोत्ताप, समुद्वेग, सम्मोह, चित्तसंकोच, बुद्धौ तमसः सञ्चारं, शक्तिक्षयञ्च केवलमासादयति। परन्त्वस्यां प्रक्रियायां यदा सामाजिकमन्यविधं वा व्यवधानमायाति, तदा स पूर्वापेक्षया सूक्ष्मान् समुन्नतांश्चोपायानवलम्बते। स शरीरेन्द्रियभूमित ऊर्ध्वं सचरति, परिणामत. प्रमाथीनीन्द्रियाणि तत्कार्ये बाधा न संजनयन्ति। अवसरेऽस्मिन् तच्चेतसि स्मृतीच्छाशाप्रत्याशाकांक्षादयो नाना-रूपेष्वाविर्भवन्ति, फलतस्तज्जन्या विविधाः प्रतिक्रियाः परिदृश्यन्ते। मनोविक्षोभ-स्थाने मनसः प्रसादः, बुद्धौ तमसः संचरणस्थाने तन्नैर्मल्यमायाति। स्थितिरियं रसोदयाय नितान्तमनुकूला। अस्योदयकाले कामस्य शरीरेन्द्रियावश्यकतात ऊर्ध्वं संचर्य तस्य स्थूलव्यापारैः सर्वथा विरतो भूत्वा निजादिमप्रकृतावस्थाया वर्तमानेनापि मानवेन स्वपूर्वकामप्रसङ्गस्य तज्जन्यानन्दोल्लासस्य वा मनोबुद्धिभूमौ निर्विकार रूपेण यदैकान्तिकमास्वादनं कृतं तदेव रसनं शृङ्गाररसस्य सर्वप्रथमावस्था आसीत्। आचार्यैं निबद्धानां परिभाषाणा विलोडने कृतेऽपि प्रसङ्गमिममनवाप्य न कोऽप्येतद्विषये मनागपि सन्दिहीत। वस्तुस्थितिं दृष्ट्वा नात्र कोऽपि सन्देहः समुल्लसति। अहं तु विश्वसिमि यत् परिभाषयिता स्वपरिभाषया परिभाषित-वस्तुनो विषये स्वां दृष्टिं—यत्र वस्तुनः केवलमांशिकी व्याख्यैव भवति—संज्ञापयितुं प्रयत्नं विदधाति। परिभाषाकारो या दृष्टिं पुरतः स्थापयति, सा विवेचनायाः कृत्रिमभाण्डतः स्वं रूपमाधृत्यायाति, अतोऽधिकतरमपूर्णा कृत्रिमा च भवति। अनुभूतिस्तु निजं रूपमाधातु यदा विवेचनाभाण्ड प्रविशति सा क्षत-विक्षता भूत्वा सामान्यतः स्वक रूपमपजहाति, कियताप्यंशेन निसर्गप्रतिकूला च जायते। इदमेव कारणमस्ति यदहं शृङ्गाररसस्यापरिभाषितं रूपं नाल्पत्वेन परिगणयामि।

अत्राहं प्रसङ्गमेक स्पष्टीकर्तुमभिलषामि। शृङ्गारमूले कामः प्रतिष्ठितो वर्तत इतीमं स्थिर-सिद्धान्तमनुसृत्य नेदं संकल्पनीयं यद्रसानुभूतिक्षणे कामस्य समस्ताः स्थूलोद्दीप्तयस्तस्य निखिलः शुभाशुभप्रेरकावेगवर्गो रसास्वादयितुरनुभूतिपथ-मवतरति। प्रसङ्गेऽस्मिन्निद तु सर्वथावधारणीयं यद्रसो न भौतिकमपितु भावनामयं जगदाश्रित्यैव समुन्मिषति। अतएवाचार्या रसस्यालौकिकत्वं मुक्तकण्ठं भूयोभूयः प्रख्यापितवन्तः रसोद्भूत्यै च जगतः स्थूलकारणकार्य-परम्परामनादृत्य विभावा-नुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिं प्रोद्घोषितवन्तः। अत्रेदमपरमत्यन्तावश्यकं वर्तते। अस्माभिरिदं निश्चयनावधार्यं यद्रसदशायां कामग्रन्थीनां न स एव व्यापारः

प्रवर्तते यः कामदशायां गोचरीभवति। प्रसङ्गोऽयं किञ्चिदधिकं विवेचनमर्हति। कामग्रन्थीनां द्विविधो व्यापारो दृष्टिपथमवतरति। तेषां व्यापारस्य प्रथमः प्रकारस्तु प्रजननात्मको भवति। व्यापारोऽयं शरीरेन्द्रियभूमौ कामोन्मेषे संजाते स्वकं रूपं प्रकटीकरोति। एतेन समस्तं शरीरमुत्तेजना-संवलितं भूत्वा मारुतान्दोलितलतेव जायते, स्नायुमण्डले तीव्रा गतिरुदेति, श्वासोच्छ्वासे परिवर्तनं सदृश्यते, रुधिरे मांसपेशीषु च नवानि रासायनिक-तत्वानि संसृज्यन्ते, शुक्रग्रन्थिभ्यो रसक्षरणं संलक्ष्यते तथा विशिष्टासु पेशीष्वेकोऽपूर्वो व्यापारः समुदेति। फलतः कामस्य समस्तान्यधिष्ठानानि—'इन्द्रियाणि मनो बुद्धिः'—किमपि विशिष्टं कुण्ठत्वमनुभवन्ति। व्यापारोऽयं सर्वसाधारणस्य कृतेऽतितरां सुलभः। अस्य परिधिमासाद्य मानवास्तिर्यञ्चश्च समं व्यवहरन्ति। एतदर्थं सामान्यस्थूलचेतनायाः केवलमपेक्षा भवति, यामाश्रित्य न केवलं मानवो, निखिलोऽपि प्राणिवर्गः प्रवर्तते। कामग्रन्थीनामन्यविधो व्यापारो द्विप्रकारकोऽस्ति सर्जनात्मक आनन्दानुभूत्यात्मकश्च। सर्जनात्मकप्रकारः कारयित्रीप्रतिभावत्सु कविप्रभृतिषु समुपलभ्यते। आनन्दानुभूत्यात्मकप्रकारस्तु भावयित्रीप्रतिभावतां सहृदयानां धनम्। अत्र चेतनायाः सामान्या भूमिः कार्यं सञ्चालयितुं नितान्तमक्षमा। ये जना हृदयसंवादभाजो भावजगतः प्रोन्नतां भूमिमधिगन्तुं पारयन्ति, त एवास्याधिकारिणस्त एव च कामस्यानिष्टकर-रूपस्यान्तरालतस्तस्य हृद्यं मेध्यं च रूपमनावृत्य सन्दर्शयन्ति। वस्तुत इयमेवावदाता कामदशा रसनीया स्व-रस्यमानतास्वभावत्वात् शृङ्गारो रसः कथ्यते। आनन्दानुभूत्यात्मक-क्षमतापि न सर्ववशगा। येषां 'काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीय-तन्मयीभवनयोग्यता' भवति, त एवास्याधिकारिणः। अतएव कविः सत्यमनुरुध्य अरसिकेषु कवित्वनिवेदनाय विश्वसृजमुपालभते साहित्यसङ्गीतकलाविहीनं च नरं पुच्छविषाणहीनं पशुमुद्घोषयति।

कामग्रन्थीनां व्यापारस्य पूर्वोक्ते प्रकारद्वयेऽतिमात्रं वैसादृश्यमवलोक्यते। प्रथमे प्रजननात्मकप्रकारे केवल संघर्षः सुलभो भवति द्वितीये च सर्जनात्मक-आनन्दानुभूत्यात्मके द्विविधे प्रकारे प्रमाता विगलितवेद्यान्तरानन्द-पर्यवसायिनीं विश्रान्तिं लभते। पूर्वस्मिन्नुद्वेगोत्तापयोः समुच्छलनं दृष्टिपथमायाति, अपरस्मिंश्चाह्लादजनकश्चर्वणावेगः स्फुट समुल्लसति। एकत्र कामस्य नग्नमश्रेयस्करं च रूपं सचेतस्सामाजिकस्य हृदये जुगुप्सां जनयति, अपरत्र तस्योदात्तं रूपं मानवजीवने समस्तं, प्रेयः श्रेयो वावतारयति। एकतो 'यो वै भूमा तत्सुख'—मितिभावनानुभूतिपथमवतरति, अपरतस्तु 'यदल्पं तन्मर्त्यमिति भावः प्राधान्यमावहति। एको व्यापारस्तु व्यक्तिविशेषसम्बद्धत्वेन परिमितप्रमातृधर्मी, अपरस्तु प्रमातृविशेषानालिङ्गितत्वेन सहृदयजनसंवेद्यः। यद्यपि रसनाद्रसत्वमुभयत्रापि वर्तते

तथापि प्रथमे प्रकारे रसनं तु केवलमिन्द्रियसापेक्षं द्वितीये चेन्द्रियनिरपेक्षत्वेन सहृदयमनोबुद्धिमात्रसमास्वाद्यम्। संक्षेपत एकस्य सीमाधः संचरणमस्ति, अपरो मानवस्योर्ध्वसंचरणे साहाय्यमादधाति। शृङ्गारस्य प्रसङ्गे कामस्य पूर्वोक्तं वैशिष्ट्यं ध्यानपथमारोपयतो जनस्य कृते काममादाय न कस्यापि भ्रमस्य विप्रतिपत्तेर्वावसर इत्यवधेयम्।

# तैत्तिरीयसंहिता ५।६।१।१-२ मन्त्रगणस्य विनियोगः

डा० कृष्णलालः

तैत्तिरीयसंहितायाः (५।६।१।१-२) अधोलिखितस्य मन्त्रगणस्य वैदिक-कर्मकाण्डे विशिष्ट महत्वं विद्यते—

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः।
अग्निं या गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु॥१॥
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम्।
मधुश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु॥२॥
यासां देवा दिवि कृण्वन्ति भक्ष या अन्तरिक्षे बहुधा भवन्ति।
यः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शं स्योना भवन्तु॥३॥
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे।
सर्वां अग्नीरप्सुषदो हुवे मयि वर्चो बलमोजो निधत्त॥४॥

अस्याः संहिताया एते मन्त्रा अक्षरशः कृष्णयजुर्वेदीयमैत्रायणीसहितायाम् (२।१३।१) उद्धृताः। एतेषाम् आदिरूपमथर्ववेदे दृश्यते बीजं च ऋग्वेदे उपलभ्यते। अथर्ववेदे (१।३३) तावत् प्रथममन्त्रस्योत्तरार्धं द्वितीयतृतीयमन्त्रयोरप्युत्तरार्धत्वेन स्थितम्। प्रथममन्त्रेऽथर्ववेदे 'कश्यपो यास्विन्द्रः' इत्यस्य स्थाने 'सविता यास्वग्निः' इति पाठः प्राप्यते। अस्मिन् वेदे उपरिलिखितस्य द्वितीयमन्त्रस्य उत्तरार्धं पुनश्च-चतुर्थमन्त्रस्योत्तरार्धत्वेन गृह्यते। अयमेव चोपरिलिखितो द्वितीयो मन्त्र ऋग्वेदस्य (७।४९।३) अधोलिखितेन मन्त्रेण साम्य धत्ते—

यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्।
मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु॥

निखिलस्यैवास्य ऋग्वेदीयसूक्तस्य देवता आपः, अतएव मन्ये एतदेव सूक्तमाधारीकृत्य कृष्णयजुर्वेदे उपरिलिखिता मन्त्रा विरचिताः।

विनियोगविषये सर्वप्रथममेतदुल्लेखनीयं यदयं मन्त्रगणः केवलं कृष्णयजुर्वेदीय-ग्रन्थेषु विनियुक्तो दृश्यते। कौशिकसूत्रे तावद् अस्य मन्त्रगणस्याधारभूतं सम्पूर्ण-

मेवाथर्ववेदीयं सूक्तं (१।३३) बहुषु तेषु स्थलेषु प्रयुक्तं येषु जलस्योपयोगो भवति।[1] एकस्मिन् स्थले (९०।९) एतत् सूक्तं 'हिरण्यवर्णा ऋचः' इति नाम्ना अभिधीयते।

यद्यपि मन्त्राणामेतेषामर्थो जलेन सम्बन्धं स्पष्टमेवाभिव्यनक्ति तथापि अतीवाश्चर्यकरमिवैतद् यत् तैत्तिरीयसंहितायां तथा च तैत्तिरीयब्राह्मणे (२।८।९।३) स सम्बन्धो न लक्षितः। तद्यथा तैत्तिरीयसंहितायां वेदीचयनावसरे आहितासु कुम्भेष्टकासु अस्य मन्त्रगणस्य अभिमन्त्रण निर्दिष्टम्। तैत्तिरीयब्राह्मणे पुनः पशुकल्पे वपाया आहुतिवेलायां प्रथमो मन्त्रः पुरोनुवाक्येति द्वितीयो मन्त्रश्च याज्येति निर्दिष्टः, तथा च पुरोडाशस्याहुतिवेलायां तृतीयो मन्त्रः पुरोनुवाक्येति चतुर्थो मन्त्रश्च याज्येति निर्दिष्टः।

गृह्यसूत्रेषु पुनः अस्य मन्त्रगणस्य उपयुक्ततमो विविधश्च विनियोगो दृश्यते। सम्भवतया अस्य मूलरचना गृह्यकर्माण्येवोद्दिश्य विहिता। एतद्धि कथनमथर्ववेदेऽस्य मन्त्रगणस्याधारभावेनापि पुष्यते, अथर्ववेदो हि गृह्यमन्त्राणां निधिरिति विद्वद्भिः स्वीक्रियते एव। एते मन्त्राः कृष्णयजुर्वेदातिरिक्तानामन्येषां वेदानामंगभूतेषु गृह्यसूत्रेषु कथं न विनियुज्यन्त इति प्रश्ने प्रतीयते यत् तदानीमृग्वेदीया आपोहिष्ठीयमन्त्राः (१०।९।१-३) अधिकमिव प्रचलिता अभूवन् यतः कृष्णयजुर्वेदीयगृह्यसूत्रेष्वपि बहुषु येषु हिरण्यवर्णाः इति मन्त्रा विनियुक्तास्तेष्वेव तत्रैव कर्मणि आपोहिष्ठीयमन्त्रा अपि विनियुक्ताः।

अस्य मन्त्रगणस्य प्रमुखो विनियोगः समावर्तनकर्मणि स्नातकस्य स्नानावसरे दृश्यते।[2] अस्मिन् एव कर्मणि आपस्तम्बमतानुसारेण स्नातकः प्रथममन्त्रेण सूत्रोक्तं सोपधानं सौवर्णं मणिम् उदपात्रे त्रिः प्रदक्षिणं परिप्लावयति, द्वितीयमन्त्रेण च तं मणिं ग्रीवायामाबध्नाति।[3] कतिपयेषु गृह्यसूत्रेषु अस्य मन्त्रगणस्य विनियोगो वार्षिकस्याध्यनावकाशस्यावसरे उत्सर्गकर्मणि विहितः।[4] तदनुसारेण शिष्या आचार्याश्च एतान् मन्त्रान् जपन्तो नदीमवगाहन्ते।

विवाहकर्मण्यपि कैश्चित् सूत्रैरयं मन्त्रगणो विनियुक्तः। तद्यथा भारद्वाज आग्निवेश्यश्चैतद् विधानं कुरुतो यत् वरपितृभ्यां शुल्कदेयायां कन्यायां प्रतिगृहीतायां

---

१. कौ० सू० ७।१४; ९।१, ४; १८।३; ४१।१४; ५४।६; ९०।९; १२१।१; १३६।८।

२. भा० गृ० १।२।११, का० गृ० ३।५, वा० गृ० ९।९, भा० गृ० २।१९, हि० गृ० १।१०।२, आग्नि० गृ० १।३।३।

३. आप० गृ० २।१२।८ (मं० पा० २।७।१३-१७)।

४. भा० गृ० ३।८, हि० गृ० २।१८।९, आग्नि० गृ० १।२।२।

जलेन तस्या मार्जनमेतस्य मन्त्रगणस्योच्चारणेन कर्तव्यम्।[1] काठकगृह्यसूत्रे (१६।५) एतद् विधान यत् यदा शुल्कदेयायाः कन्यायाः शुल्करूपेण प्राप्तं जलपूर्णे कांस्यपात्रे निहितं सुवर्ण सर्वे कन्याबान्धवाः समवमृशन्ते तदास्य मन्त्रगणस्योच्चारणं कर्तव्यम्। आपस्तम्बोऽपि मन्त्रानेतान् विवाहकर्मण्येव विनियोजयति । विशिष्टं कर्म तावदत्र भिन्नम्। तदनुसारेण वध्वाः शिरसि निहितात् सुवर्णमणियुक्तात् युगच्छिद्रात् जलं प्रवाह्य तेन तस्या. स्नापनावसरे एतेषा मन्त्राणां पाठः कर्तव्यः।[2] गृह्यसूत्राणां मध्ये आपस्तम्बीयमन्त्रपाठे एषां मन्त्राणां प्राचीनतमा परम्परा सुरक्षिता प्रतीयते अत्र मत्राणाम् अथर्ववेदीयमन्त्रैः सहातीवसाम्यत्वात्। यथाऽथर्ववेदे तथैवात्रापि प्रथममन्त्रस्य सम्पूर्णमुत्तरार्ध द्वितीयतृतीयमन्त्रयोरप्युत्तरार्धत्वेन स्थितम्। अथर्ववेदवदत्रापि प्रथममन्त्रे 'इन्द्रः' इत्यस्य स्थाने 'अग्निः' इति पठ्यते। अस्यैव मन्त्रस्योत्तरार्धे मन्त्रपाठे 'विरूपास्ता नः' इत्यस्य स्थाने 'सुवर्णास्तास्ते' इति पठ्यते। अत्र 'ते' इति पाठोऽपेक्ष्यत एव यतः एभिर्मन्त्रैर्वधू· उच्यते। हिरण्यकेशि-गृह्यसूत्रे (१।२१।५) सप्तपद्यनन्तरं वरेण एभिर्मन्त्रैर्वध्वा अभिषिञ्चनं विहितम्।

वाराहगृह्यसूत्रे (४।३) चूडाकर्मणि एते मन्त्रा. उदपात्राभिमन्त्रणाय विनियुक्ताः। बौधायनगृह्यसूत्रे (१।११।६) अस्य मन्त्रगणस्य विनियोग. सीमन्तोन्नयनकर्मणि प्राप्यते। आग्निवेश्यगृह्यसूत्रे (२।५।१२) पुनः बीजवपनकर्मणि एते मन्त्राः लांगलादीनामद्भिमर्जनाय प्रयुक्ताः।

अत्र स्वाभाविकोऽयं प्रश्नः समुदेति अस्य मन्त्रगणस्य बहुविधविनियोगानां किं कारणम् इति। प्रथममेतत् सुस्पष्टं यत् किमपि कर्म स्यात् कश्चिदपि वा संस्कारः, सर्वत्रास्य मन्त्रगणस्य जलेन सम्बन्धो दृष्टिपथमायाति। जलेन किं कार्यं क्रियते इति नास्ति विचारणीय, तत् कार्य स्नानं वा स्यात्, मार्जनं वा स्यात्, अभिषेको वा स्यात्, अवगाहन वा स्यात्, जलाभिमन्त्रण वा स्यात्, जले कस्यापि पदार्थस्य प्लावनं वा स्यात्—तत्र सर्वत्र जलमेव प्रधानम्। आवश्यकमेव जलं तस्मिन् तस्मिन् कर्मणि यत्रैते मन्त्रा विनियुक्ताः। एतदप्यत्र स्मरणीयं यत् गृह्यसूत्रेषु जलकर्मसु एतेषां मन्त्राणां विनियोगो मौलिकः न स परम्परागतः। एतदेव तथ्यमेतेषां मन्त्राणां गृह्यचरित्रं पुष्णाति। अपर वैशिष्ट्य केषुचित् विनियोगेषु यद् दृश्यते तत् सुवर्णेनापि सम्बन्धः। यद्यपि मन्त्रेऽत्रेषु आप एव स्तूयन्ते तथापि 'हिरण्यवर्णा.' इत्याद्यः शब्दः सुवर्णकर्मसु विनियोगकारणमिति सम्भाव्यते। आपो हि ऋग्वेदेऽपि सुवर्णवर्णा

---

१. भा० गृ० १।१८, आग्नि० गृ० १।६।१।

२. आप० गृ० २।४।८ (मं० पा० १।२।२-५)।

उच्यन्ते यत्र (२।३५।९) यह्वयो (नद्यः) हिरण्यवर्णा उक्ताः[१]। गृह्यसूत्रेषु अस्य मन्त्रगणस्य विनियोगस्यापवादरूपेण काठकगृह्यसूत्रं (४३।४) तिष्ठति यत्र चतुर्होतृकव्रते एते मन्त्राः अग्नौ समिदाधानाय विनियुज्यन्ते। एतदपि गृह्यसूत्रमस्मिन् विनियोगे तैत्तिरीयसंहितामेवानुसरतीति प्रतीयते, यतो हि तत्रापि मन्त्रविनियोगः (इष्टिकानाम्) आधानकर्मणि विद्यते।

अत्रैवान्यस्याप्येकस्य समानरूपस्य मन्त्रस्य बिनियोगो विमर्शितव्यः। अधोलिखितस्य तस्य मन्त्रस्य विनियोग आपस्तम्बेन उपरि विमृष्टेन मन्त्रगणेन साकमेव वध्वाः शिरसि युगच्छिद्रात् जलप्रवाहाय विहितः।[२] मन्त्रस्तावत्—

हिरण्यवर्णाः शुचयः पावकाः प्रचक्रमुर्हित्वावद्यमापः।
शतं पवित्रा वितता ह्यासु तामिष्ट्वा देवः सविता पुनातु॥

काठकगृह्यसूत्रे (३।५) अयं मन्त्रः समावर्तनकर्मणि स्नातकस्य स्नानार्थमन्यैर्मन्त्रैः सह विनियुज्यते।

स्वल्पेन पाठभेदेनायमेव मन्त्रो मैत्रायणीसंहितायां (१।२।१) प्राप्यते। तत्र 'विततांहि' इत्यस्य स्थाने 'विततानि' 'त्वा' इत्यस्य स्थाने च 'मा' इति पाठो लभ्यते।

आपस्तम्बश्रौतसूत्रे (१०।६।१) अपि गृह्यसूत्रवदस्य मन्त्रस्य विनियोगो दृश्यते। तत्र हि सोमयागस्य दीक्षायां यजमानोऽनेन मन्त्रेण जलम् अभिमन्त्रयते।

अस्मिन्नपि प्रसगे पूर्ववत् काठकगृह्यसूत्रम् (४३।४) अपवादरूपेण तिष्ठति यत्रास्य विनियोगश्चतुर्होतृकव्रते अग्नौ समिदाधानार्थं विधीयते।

अस्य मन्त्रस्य रचना पूर्वोक्तानेव मन्त्रानाधारीकृत्य प्रवृत्ता इति प्रतीयते। अतएवायमपि मन्त्रो मूलतो गृह्यमन्त्र एवाख्यातु शक्यते।

---

१. अस्मिन् विषये 'वैदिक सम्पत्ति' इत्यस्मिन् ग्रन्थे रघुनन्दनशर्मणो मतं न विस्मर्तव्यं येन ऋग्वेदे अपां हिरण्यवर्णत्वमेव दृष्ट्वा न हि जलं हिरण्यवर्णं भवतीति विचार्य एतत् निर्णीयते यत् ऋग्वेदे आपो नद्यो वा न तु जलरूपा अपितु महाप्रकाशकिरणरूपा वर्ण्यन्ते। तेषां वर्णोऽपि सुवर्णवत् दृश्यते।

२ आप० गृ० २।२।८ (मं० पा० १।२।१)

# ग्रन्थसमीक्षणम्

## अभिनवमनोविज्ञानम्

लेखक—श्रीप्रभुदयालु-अग्निहोत्री:।

प्राप्तिस्थानम्—प्रकाशन विभाग, वाराणसेय संस्कृत विश्वविद्यालयः, वाराणसी—२। मूल्यम् ९ रूप्यकाणि, १९६४ ई०, पृष्ठानि २१६।

ग्रन्थेऽस्मिन् पञ्चविंशाध्यायाः वर्तन्ते। तेषु मनोविज्ञानस्य परिभाषा, शाखाः, अन्य विज्ञानैः सह सम्बन्धः, स्नायु संस्थानम्, चेतना, मानसिकप्रक्रियाः, अवधानम्, संवेदना, प्रत्यक्षीकरणम्, शिक्षणम्, स्मृतिः, कल्पनाक्रिया, विचाराः, अनुभूतिः, सवेगाः, सहजाःक्रियाः, ऐच्छिकानि कर्माणि, अर्जितः स्वभावः, बुद्धि-परीक्षा, निद्रास्वप्नः, व्यक्तित्वमस्यभेदकारणानि च, अचेतन मनः, एतद्विषयकं भारतीयं मतम्, मनोविज्ञानस्येतिहासमित्यादयः विषयाः सरलसंस्कृतभाषया सुललितपरिमार्जितशैल्या च सम्यक् स्पष्टीकृताः। यद्यप्यत्र प्रतिपादिता अनेके विषया नीतिपुराणेतिहासदर्शनयोगवासिष्ठादिषु बहुषु ग्रन्थेषु समुपलभ्यन्ते किन्तु पुनश्चापि मनःसम्बन्धिनां सर्वेषा विषयाणामनुस्यूतिः प्रतिपादनशैलीच। नूतना काप्यत्र दृश्यते। ग्रन्थेऽस्मिन् प्रतिपादितैः मनोविषयकैः सिद्धान्तैःसह प्राच्यभारतीयदार्शनिकविचाराणां तौलनिकी समीक्षा कर्तु शक्यते। भारतीया मनोविज्ञानविषयकाः पुरातनविमर्शा आधुनिकमनोविज्ञानस्य नवीनदिशा-प्रवर्तनं विधास्यन्तीति महत्त्वपूर्ण तस्यानुसन्धानम्। सस्कृतभाषायामर्वाचीनमनोविज्ञान-विषये प्रथम एवाय ग्रन्थः। अत. प्राच्यपाश्चात्यपद्धतिमनुसृत्य मनोविज्ञानस्याध्येतॄणां शोधच्छात्राणामध्यापकानां च कृते ग्रन्थस्यास्य महती उपयोगिता प्रतीयते।

## श्रीगान्धिचरितम्

रचयिता—पण्डित साधुशरणशर्मामिश्र. सरयूपारीणः।

प्राप्तिस्थानम्—प्रकाशकः, श्रीराधावल्लभमिश्रः, श्रीजानकीसस्कृत विद्याल-याध्यापकः नरकटियागञ्जम्, चम्पारण्यम्। मूल्यमष्टौ रूप्यकाणि। प्रथमं संस्करणम् १०००, सवत् २०१९ वैक्रमः। पृष्ठसख्या २३०।

एकोनविंशसर्गात्मकः महाकाव्यकोटिकोऽयं ग्रन्थः विद्वद्वरेण्येन चम्-पार

ण्यनिवासिना श्रीजानकीसंस्कृतविद्यालयप्रधानाध्यापकेन पं० श्रीसाधुशरणमिश्र-महाभागेन १९६२ ख्रीष्टसम्वत्सरे विरचितम्। अस्मिन् महाकाव्ये महात्मगान्धिनः जीवनचरितस्य सम्यगाख्यानं कृतं कविना। ग्रन्थेऽस्मिन् महाकाव्यलक्षणमनुसृत्य उद्यानसरोवरादीनां वर्णनं दृश्यते। विविधच्छन्दसां चारुप्रयोगः प्रतिसर्गान्तं तेषां परिवर्तनं काव्यलक्षणसम्मतं वर्तते। काव्यस्य भाषा सरलसरला चकास्ति। काव्यमिदं सौष्ठवोपेतं प्रसादगुणाप्यायितमविच्छिन्नप्रवाहं विविधरससंवलितं च संग्रहणीय-मेव। कवेस्सुष्ठुभावानां मार्दवं, वस्तुसंघटनानां पाटवं, अलङ्काराणां चयनं, संयोजनं प्राचुर्यञ्च तस्यालौकिकव्यक्तित्वं द्योतयति। काव्येऽस्मिन् उपमा, परिणाम, भ्रान्तिमान्, अर्थान्तरन्यासः, सहोक्तिः, उत्प्रेक्षादय लङ्काराअ वैचियेण प्रयुक्ता। द्वितीयसर्गे गान्धिनमायान्तं दृष्ट्वा लताः 'काम एवायं भ्रमतीति' मेनिरे। अतोऽत्र भ्रान्तिमदलङ्कारस्य प्रयोगो दृश्यते। तद्यथा—

अतसीकुसुमश्यामलकाञ्चितसुन्दरम्।
पीताम्बरं महोरस्कं नवकञ्जारुणेक्षणम्॥
आजानुबाहुं सुनसं मन्दस्मितमनोहरम्।
तत्रायान्तममुं दृष्ट्वा वीरुधो मेनिरे स्मरम्॥

## राजारामचरितम्

रचयिता—केशव कविः।

प्राप्तिस्थानम्—भारत-इतिहास संशोधक मण्डल पुणें, विक्रयालय शाखा, ३१३, सदाशिव, पुणें–२। सम्पादक, वासुदेव सीताराम वेंद्रे, शक् १८५३। मूल्यम् १-५०।

ग्रन्थोऽयं पञ्चसर्गात्मकः। 'रत्नगिरि' निवासिना केशवकविना महाकाव्यमिदं सप्तदशशतके (जनवरी ४, १६९० ई०) विरचितमासीत्। तञ्जौरप्रदेशस्य सरस्वतीमहलग्रन्थागारेऽस्य हस्तलिखितं वीक्ष्य प्रो० दत्तोवामनपोतदार महाभागेन ऐतिह्यानुसन्धित्सूनां लाभाय प्रकाशितमिदं पुस्तकम्। म्लेच्छशासकैः तात्कालिकाः ब्राह्मणाः तिरस्कृताः आसन्। अतस्संघीभूय महाराजराजारामस्य नेतृत्वे सर्वे ते म्लेच्छानपसारयन्ति स्म। मुख्यमिदमितिवृत्तं शिवनारदसंवादरूपेण सविस्तरं समुपबृंहितं कविना। रचनाशैली इतिहासपुराणात्मिका दृश्यते। भाषा संयुक्ता-क्षरपदरहिता शोभते। शब्दानामनुरणनेनोच्चारणेन चाभीष्टार्थप्रतिपादनकलायां निष्णातोऽयं कविः। छन्दःसु अनुष्टुभः प्राधान्यं दरीदृश्यते। यत्र तत्र आर्याशार्दूल-विक्रीडितयोः समायोजनमपि परिलक्ष्यते। मयूराणां नर्तनस्य, पिकानां च मधुरालापस्य क्वचिद्वर्णनं कृतम्। महाकाव्यदृष्ट्या रचनेयमाधुनिकतां प्रकटयति।

## राष्ट्रसभापतिगौरवम्

रचयिता—विद्यालङ्कारः साहित्यशिरोमणिः साख्यतीर्थः श्रीलक्ष्मी-नारायणः।

प्राप्तिस्थानम्—प्रकाशक, बी० लक्ष्मीनारायण शंभोगू विद्यालङ्कार, तेजपालबिल्डिङ्ग, त्रिभुवन रोड, बम्बई–७। प्रथमावृत्तिः सन् १९३८ ई०। मूल्यम्-२५ नवपणक।

पुस्तकमिदं देशभक्तिव्यञ्जकानां लक्ष्मीनारायणपण्डितवर्याणां कवितानां सङ्कलनम्। याः किलायोजितेषु भिन्न-भिन्नसमयेषु काङ्ग्रेसाधिवेशनेषु विरचिता आसन्। पण्डितरामनरेशमिश्रेण संस्कृतभाषाबद्धानामेतासां कवितानां हिन्द्यामनुवादोऽपि कृत.। श्रीभिखाभाईमहोदयस्य गुर्जरभाषानुवादेन पुस्तकस्यास्योपयोगिता वृद्धिं प्रापिता। कांग्रेसाधिवेशनस्य सर्वप्रथमाधिनायकात् श्रीउमेशचन्द्रबनर्जीमहोदयादारभ्य डा० राजेन्द्रप्रसादं यावत् सर्वेषां काग्रेसाध्यक्षाणां गुण-यशः-कीर्तनेन काव्यस्यास्य चारुत्वं विवर्द्धितं कविना। एषां भारतभाग्यनिर्मातॄणां वर्णने कवेरलङ्कारस्य पाटवं वीक्ष्य मानसं मोदं समायाति। तद्यथा—

मुम्बापुरीं स्थानमवाप्य जन्मने,
वङ्गप्रवीरं विबुधेन्द्रमाश्रिता।
पञ्चाष्टनागैकमिते च वत्सरे,
सभा सुधर्मेयमिवागता भुवम्॥

कविवरोऽयं संस्कृतभाषायाः प्रसारार्थं प्रचारार्थञ्च दृढकटिबद्धो दृश्यते। येऽविमृश्यवादिनः वृथाजल्पकाः संस्कृतद्वेषिणश्च सन्ति तेषां प्रत्युत्तरं वक्तीत्थं कविः—

यदा प्राणा देहे मृत इति न मूर्खोऽपि निगदेत्,
तथा शाब्दे शास्त्रे सति किमु मृता प्राणसदृशे ?
वयं त्यक्तात्मानो न किल गणयामः प्रसविनीं,
महत्पापं त्वेतत्कथमपि निराकर्तुमुचितम्॥

## पाटलश्रीः

सम्पादक—देवेन्द्रनाथ शर्मा, पटना विश्वविद्यालय, बिहार।

प्राप्तिस्थानम्—मन्त्री, सस्कृतनाट्यपरिषदः, हिन्दी-साहित्य-सम्मेलन-भवनम्, कदमकुआं, पटना–३। वार्षिकं मूल्यं ३-५० रूप्यकम्, एकाङ्क च १-०० रूप्यकम् मात्रम्।

जनवरी २६, १९६६ ई० तमे वर्षे मनोरमा नयनाभिरामा 'पाटलश्री'रिति नाम्न्यास्त्रैमासिकपत्रिकायाः प्रकाशनं पाटलिपुत्रस्थया सुरसरस्वतीसपर्यापरया नाट्यपरिषदा समारब्धम्। नाट्यपरिषद उद्देश्यानि संस्कृतनाट्यकलायाः चतुर्मुखो विकासः, नाटकाभिनयेन संस्कृतवाङ्मयप्रचारः, संस्कृतनाट्यकलासाहित्य-स्याभिनयोपकरणानां प्राच्यसंस्कृतपाण्डुलिपीनां संस्कृतपत्राणां संस्कृतप्रचार-साहित्यस्य च सग्रहः, भारतीयसंस्कृतेः परम्परायाश्च संरक्षणं तत्र सञ्चितज्ञानस्य च सवर्द्धनम्, संस्कृतसम्मेलनानुसन्धान व्याख्यानविचारगोष्ठीनामायोजनम्, संस्कृतपत्राणां संस्कृतप्रचारसाहित्यस्य च प्रकाशनम्, यथाकालं सञ्चालकसमिति-नियतकार्य सम्पादनमादीति पत्रिकाया अवसानपृष्ठे उटङ्कितानि। अस्यां पत्रिकायां सम्पादिताः पं० ब्रह्मदत्तद्विवेदी प० केदारनाथ ओझा पं० जटाशङ्कर झा महोदयानां संस्कृतकोविदानां 'वर्तमान जगति संस्कृतम्' 'संस्कृत भाषाया आधुनिकपरिस्थितिः 'संस्कृतं भारतीयसंस्कृतेराधारभूतमि'त्यादयो पाण्डितपूर्णा. निबन्धाः संस्कृतज्ञान् प्रोत्साहयन्ति। पाटलिपुत्रतः प्रकाश्यमानेयं पत्री 'पाटलश्री.' स्वीयेन पटीयसा पाटलपरिमलेन सुसंस्कृतं भारत भावयिष्यतीत्यस्माभिः काम्यते।

## GLIMPSES INTO
## POETIC BEAUTY OF THE RIGVEDA

लेखक—महेन्द्रकुमार वर्मा, एम० ए०।

प्रकाशक—एस० एस० राय वर्मा, असाटीवार्ड, दमोह (म० प्र०) मूल्यम् ५ रूप्यकाणि। द्वितीयं प्रकाशनं, जनवरी १९६३ ई०।

आङ्ग्लभाषात्मके ग्रन्थेऽस्मिन् ऋग्वैदिकश्लोकानां काव्यात्मकतत्वानां संस्कृता-लङ्कारशास्त्रानुसारं आलोचनात्मकं विवेचनं कृतम्। वर्ममहोदयेनालोकितं प्रकृतेः स्वरूपं, रसभाववस्तुध्वनीनां वैशिष्ट्यं, उपमायाः परीक्षणं च पाण्डित्यपूर्ण नूतनं च विद्यते। सर्वत्र पुस्तकेऽस्मिन् विशदविवरणं प्रमाणपाटवं च सम्यक् सन्नियोजिते। मुद्रणस्य दुर्व्यवस्थातोऽशुद्धीनां प्राचुर्य पुस्तकस्योत्कर्षमपहन्ति। अभिनवसंस्करणे शोभनपत्रेण मुद्रणसौष्ठवेन च पुस्तकस्य स्वरूपं शोभनं भविष्यतीति विश्वसिमः।

**शिवदर्शनः**

# सा ग रि का

त्रैमासिकी

पञ्चमवर्षम्, २०२३ वि० सं०

चतुर्थाङ्कः

पूर्णाङ्कः १८

सम्पादकः

प्रो० रामजी उपाध्यायः एम० ए०, डी० लिट्०

संस्कृतविभागाध्यक्षः

प्रकाशिका
संस्कृतपरिषद्
सागरिका-समितिः
सागर विश्वविद्यालय. सागरम्

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | २ रूपकाः |
| वार्षिकम् | ६ रूपकाः |
| वस्त्रावरणसंहितवार्षिकचतुरङ्काणाम् | ८ रूपकाः |
| आजीवनग्राहकस्य | १०० रूपकाः |
| अङ्कनिर्गमनम् | आषाढ़-आश्विन-पौष-चैत्रमासेषु (जून-सितम्बर-दिसम्बर-मार्च) |

मुद्रकः
**श्री नरहरि गोविन्द बेडेकरः**
सागर-विश्वविद्यालय-मुद्रणालय.
सागरम्

# विषयानुक्रमणिका

# ९. शङ्कराचार्यः

शङ्कराचार्यस्य जन्मनो दिवसो भारतस्य परमाभ्युदयायोदियाय । 'स्वय शिव एव शङ्कराचार्य–रूपेण समवतरदिह लोके' इति शङ्करस्यालौकिकप्रतिभया लोककल्याण–प्रकृत्या च प्रभाविता जना वदन्ति । तत्र किमाश्चर्यम् । विरल-विरला हि महात्मानोऽवतारभूता एव तादृशीमाचार्यभूमिका चरन्ति । तद्यथा गीतायाम्—

परित्राणाय साधूना विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

पूर्णायास्तटे केरल - प्रदेशान्तर्गतकलादि (शशल) ग्रामे ७८८ खृीष्टाब्देऽद्वैतवेदान्त-प्रभाकरस्य प्रथमरश्मिर्दृशिमुपागत. । तस्य पिता शिवगुरुर्माता च सुभद्रादेवी आस्ताम् । स एव शङ्करोऽष्टवर्षदेशीयः सन् वेदवेदाङ्गादिषु परं दाक्ष्यमवाप । तस्मिन्नेव शैशवे स पित्रभावे मातुरनुज्ञया संन्यासिचर्यायै परिव्रजितुमियेष । तदा स्नेहनिर्भरा माता त त्यक्तुं नोदसहत । कस्मिंश्चिद्दिवसे मकरेण गृहीतपाद. शङ्करो मातरं न्यवेदयत्—मात., मकरगृहीतस्य मम मरणकाल एव समुपस्थित. । तर्हि अनुजानीहि मे संन्यासदीक्षाव्रताय । तेनैव क्रमेण चेत् मुक्ति· स्यात् भगवदनुग्रहेण । सा माता नान्यमुपाय तस्य रक्षार्थं दृष्ट्वानुमति दत्तवती । तत· प्रभृति शङ्करस्य प्रव्रज्याक्रमः समारभत ।

शङ्करो गोविन्दभगवत्पादगुरोर्दीक्षा गृहीत्वाऽद्वैतपारावारेऽचिरमेव निष्णातः सञ्जातः । गुरोराज्ञया स भारतस्य देशप्रदेशेष्वद्वैतध्वज स्फारयितु धर्मविजय समारब्धवान् । अस्या दिग्विजय–यात्रायां विविधैर्देवरूपैराचार्यै सङ्गतः, तेषामुपदेशेन च स्वकीय ज्ञानाम्बुधिविवेकोर्मिमालाभिः तरङ्गितवान् । दिग्विजयस्य प्रकरणे मण्डनमिश्रैः सह तस्य विवादोऽभवत् । तत्र मण्डनमिश्र-पत्नी निर्णायिका बभूव । स्वल्पे वयसि संन्यस्तो जीवन्मुक्त शङ्करो द्वात्रिंशद्वर्षीय एवेह-लोक-लीलां समापितवान् । तस्य लघुजीवनस्य प्रत्येकं क्षणं कार्य–व्यापृति-

नैरन्तर्य-विशिष्टमेव लक्ष्यते । आसीदेव परमो निष्कामकर्मयोगी सः। भारतस्य सास्कृतिकैक्यस्य विधानाय सोऽस्य देशस्य चतुर्षु सीमान्त-प्रदेशेषु अद्वैतविद्याप्रकाश-स्तम्भानिव महामठान् स्थापयामास । तस्मादेव कालादद्यापि विश्वविद्यालयरूपा सस्था बदरी-द्वारका-काञ्ची-पुरी-श्रीनगरादिषु प्रदेशेषु राजन्तेऽद्वैतप्रचारं देश-विदेशेषु च कुर्वन्ति । अहो, नैपुण्यमेत्र तस्य महाभागस्य यद् ऋषीणा सनातन-तपोभूमि ज्ञानशिखरमेव हिमालय सोऽद्वैतसूर्यस्य प्रतिष्ठापनायाचिनोत् । तस्मादेवोच्चशिखरादद्वैतरवेः रमणीया रश्मय सर्वासु दिशासु स्फुरिता ।

अद्वैत - सन्देशस्य प्रवचन - मात्र कृत्वैव स न तुतोष, अपि तु नैकान् ग्रन्थान् विरचय्य सोऽद्वैत-विद्याया सारभूतानि सिद्धान्तरूपाणि रत्नानि ग्रन्थरत्नाकरेषु शाश्वत निहितवान् । ब्रह्मसूत्रस्य शारीरक-भाष्य तस्य प्रथमतरो ग्रन्थ. काश्या विरचितम् । उपनिषदा गीतायाश्च भाष्याणि अपरत विरचितानि। अतः परमपि तेन आनन्दलहरी-मोह-मुद्गर-विवेकचूडामणि-स्वात्मप्रकाशिका-प्रबोधसुधाकर. इत्यादय. रचना कृता । तस्य भाष्यशैलीमधिकृत्य पद्मपादाचार्येण समीरितम्—

यद्वक्त्रमानससर प्रतिलब्धजन्म—
भाष्यारविन्दमकरन्दरसं पिबन्ति
प्रत्याशमुन्मुखविनीतविनेय भृङ्गाः
तान् भाष्यवित्तकगुरून् प्रणतोऽस्मि मूर्ध्ना ॥

एतेषु ग्रन्थेषु 'मानवमात्रस्यैक्यम्, विश्वात्मकब्रह्मत्वम्, वर्णजातिनिरपेक्ष-निश्रेयसप्राप्तिः' इत्येते विषया सरल-सरल-भाषया स्पष्टतया विचारा-क्षरैः हृद-यगमविधिना सुष्ठु प्रतिपादिता ।

शङ्करस्योदात्तवृत्त्या ज्ञान-विज्ञानेन च सर्वदा महता भारतीयानामुच्च-जीवनदर्शनमिति लाभो वर्तते । तेनोपकृता विद्वासो बहुशः तं प्रशसन्ति। आधुनिकयुगे महामना मदनमोहनमालवीय काशीविश्वविद्यालय - सस्थापकः शंकरप्रशस्ति विरचितवान्—

यद्वाचा लसितैस्त्रिलोकजनतामोहान्धकारक्षयः
पादाब्जस्मरणेन यस्य कलुषध्वसात् प्रसादः स्थिरः ।
तस्याद्वैतगिरा गुरोर्भगवत श्रीशङ्करस्योन्नतं
काञ्चीपीठपदं यतीश्वर महन् स्थाने त्वयाधिष्ठितम् ॥

किं बहुना, अष्टवर्षचतुर्वेदिने, द्वादशाखिलशास्त्रविदे, सर्वलोकख्यातशीलाय

प्रस्थानत्रयभाष्यकृते, पद्मपादादिमच्छिष्याय, पाषण्डध्वान्तभास्कराय, अद्वैत स्थापनाचार्याय, द्वैतादिद्विपकेसरिणे, व्यासनन्दिनसिद्धान्ताय, वादनिर्जितमण्डनाय, षण्मतस्थापनाचार्याय, षड्गुणैश्वर्यमण्डिताय, सर्वलोकानुग्रहकृते, सर्वज्ञत्वादि-विभूषणाय, श्रुतिस्मृतिपुराणार्थाय, श्रुत्येकशरणप्रियाय, सकृत्स्मरणसन्तुष्टाय, शरणागतवत्सलाय, निर्व्याजकरुणामूर्तये, निरहंभावगोचराय, प्रशान्तभक्तहृत्तापाय, सर्वज्ञानफलप्रदाय, सदसद्वस्तुविमुखाय मतामामान्यविग्रहाय च शङ्कराचार्याय नमः ।

## १०. मित्रम्

केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम् ।
आपदां च परित्राणं शोकसन्तापभेषजम् ॥

अहो, अनौपम्यं मैत्रीभावस्य । मानवस्य ननु मानवैः सह सम्बन्धानां नानात्वं वर्तते, तथापि मित्रत्वं नाम सम्बन्धः केनचिदद्वितीयेन माधुर्येण, लावण्येन, सामर्थ्येन च राजते । निःस्वार्थोऽप्ययं मैत्रीभावः सर्वार्थं साधयति । तदेव व्यासेन निर्दिशितम्—

मैत्री समस्तभूतेषु ब्राह्मणस्योत्तमं धनम् ।

अथकिम्, सर्वं जगत् मित्रचक्षुषा दृश्यमानं विदुषे शान्तिमानन्दं च वितनोति ।

प्रथमं तावद्देवैरेव मैत्रीभावस्य सर्वोत्तमादर्शः प्रतिष्ठापितः । तथाहि मित्रत्वेन सहचरास्ते बहवो देवाः सहाख्याताः । द्यावापृथिव्यौ, इन्द्राविष्णू, मित्रावरुणौ, अश्विनौ च मित्रोचितं साहचर्यमादर्शीकुर्वन्ति । अद्यापि तेषां देवानां मैत्रीभावस्यादर्शोऽस्माभिः स्वकीयेषु नामसु स्फुटीक्रियते । तद्यथा रामकृष्णः, हरिहरः, नारायणशङ्करः, हरीन्द्रश्च । लोकहितकरः कश्चिद्विशिष्ट एव देवो मित्र इति ख्यातः ।

भवतु नामास्माकं कौटुम्बिकसम्बन्धो जातिसम्बन्धो गोत्रकुलादि-सम्बन्धो वा द्रढीयान्, तथापि मानवसंस्कृतेरितिहासे दृढतमो वा उदात्ततमो वा सम्बन्धो मित्रत्वमेवाभिमतं । तदेवाभिलक्ष्य महाभारते प्रोक्तम्—

यौनात् सम्बन्धाल्लोके विशिष्टं सङ्गतं सताम् ।
सद्भिः सह नरश्रेष्ठ प्रवदन्ति मनीषिणः ॥

अपरे सम्बन्धास्तु कालव्यपायेन क्षीणा भवन्तु नाम, न तथा मैत्री-भावः। अयं तु नित्यमेवाभिनवरमणीयता धत्ते, कालक्रमेण च गाढतरो भवति। यत्तु कथितम्—

'अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति'

इति मैत्री-विषये न सत्यम्। यतः परमपरिचयस्य पश्चादेव मैत्रीभावस्य समारम्भो जायते। मैत्री तु सतामेवादर्शरूपा भवति। सुहृदां दर्शनमेव सता कृते परमानन्ददायक भवति। तथाहि—

सुहृदो भवने यस्य समागच्छन्ति नित्यशः।
चित्ते च तस्य सौख्यस्य न किञ्चित् प्रतिमं सुखम्॥

अथवा— तद्दिनं दुर्दिन मन्ये यत्र मित्रागमो हि ना।

मैत्रीभावस्य समारम्भस्तु निःस्वार्थ एव जायते। न किमपि प्रयोजनं निश्चित्य मैत्री-सम्बन्धः सस्थाप्यते। वस्तुतः प्रयोजन-विमर्शो मैत्रीभावस्य कालुष्यमेवोपजनयति। तथापि मित्राणि कानिचिदपरजनासाध्यानि कार्याणि परस्पर साधयन्ति। तद्यथा कस्यचिन्निष्कामकर्मयोगिनः किञ्चिदपि करणीयं न भवति तथापि स बहु करोति लोकसंग्रहार्थम्, तथैव निष्प्रयोजनमेव मैत्रीभावे सम्भूते मित्रं मित्रस्य बहूपकरोति। कविभिर्मित्रैः सम्पाद्यमानानि कार्याणि पर्यालोचितानि—

अहितात् प्रतिषेधश्च हिते चानुप्रवर्तनम्।
व्यसने चापरित्यागस्त्रिविध मित्रलक्षणम्॥
ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुक्ते भोजयते चैव षडविधं प्रीतिलक्षणम्॥

तदेव मित्र-सौष्ठवं परिष्कार-विधिना मृच्छकटिके समर्पितम्—

गुणप्रवालं विनयप्रशाखं विश्रम्भमूल महनीयपुष्पम्।
तं साधुवृक्षं स्वगुणैः फलाढ्य सुहृद्विहगाः सुखमाश्रयन्ति॥

मैत्रीभावस्य त्यागमयी प्रवृत्तिर्निदर्शिता महाकविबाणेन—

'प्राणपरित्यागेनापि रक्षणीया सुहृदसवः' इति।

अतः प्रोक्तमेवापरजनासाध्यानि कार्याणि साधयन्ति मित्राणि।

—आपत्तिकाले मित्राणां बहु करणीय वर्तते। दुर्दिने कतिपयमित्राणि संगं परित्यज्य दूर गच्छन्ति। न ते मित्रनामार्हाः। तथाहि—

आपत्काले तु सम्प्राप्ते यन्मित्रं मित्रमेव तत्।
वृद्धिकाले तु सम्प्राप्ते दुर्जनोऽपि सुहृद् भवेत्॥

अन्यच्च— ये चार्थकृच्छ्रेषु भवन्ति लोके समानकार्याः सुहृदां मनुष्याः ।
मित्राणि तानीति परैमि बुद्ध्या स्वस्थस्य वृद्धिष्विह को हि न स्यात्।।

अत्रास्मिन् श्लोके सन्मित्रस्य लक्षणं प्रतिपन्नमेव । तदनुसार बहवो भवन्तु सुहृदो नाम, तेषु सुहृत्सु केचन विपत्तिकाले समानकार्याः सन्त भवन्ति मित्राणि ।

मित्रस्य कोऽपि रहस्यमयोपयोगो भवति येन, पूर्णोऽपि कश्चिज्जनः सम्पूर्णता याति, अथवा नानन्दोऽपि परमानन्दो भवति । तदेव समर्थितं सुकविना—

अपि सम्पूर्णता-युक्तैः कर्तव्या सुहृदो बुधैः ।
नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते ।।

अतः परमपि दृश्यते उपयोगो मित्रस्य । दुर्भगा एव ते जना यैर्नानुभूतमिदं सत्यम्—

किं चन्दनैः सकर्पूरैस्तुहिनैः किं च शीतलैः ।
सर्वे ते मित्रगात्रस्य कला नार्हन्ति षोडशीम् ।।

वाल्मीकिरपि खलु निर्दिशत्येतदेवाभिलक्ष्य—

आढ्यो वापि दरिद्रो वा दुःखित सुखितोऽपि वा ।
निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ।।

इदमेव रहस्यमधोलिखिता सूक्तिः प्रमाणीकरोति—

बन्धनानि खलु सन्ति बहूनि प्रेमरज्जुकृतबन्धनमन्यत् ।
दारुभेदनिपुणोऽपि षडंघ्रिर्निष्क्रियो भवति पंकजकोशे ।।

कापटिकानि मित्राणि तु लोकविद्भिः सततं निर्दर्शितानि । तेषां 'विषकुम्भं पयोमुखम्' इति संज्ञा केनापि कविना सुष्ठु प्रयुक्ता—

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत् तादृशं मित्रं विषकुम्भं पयोमुखम् ।।

वात्स्यायनेन नवविधानि मित्राणि सज्ञापितानि । तेषु सुक्रीडितम् , सहाध्यायि, धात्रपत्य च निसर्गत एव निष्प्रयोजनमित्राणि भवन्तीति सर्वोत्तमानि सन्ति ।

भारते सुदूरकालत एव मैत्रीभावस्योत्कर्षोऽभिमतः। शूद्रकेण काव्यभाषया तद् निर्दर्शितम्—

द्वयमिदमतीव लोके प्रियं नराणां सुहृच्च वनिता च ।
सम्प्रति तु सुन्दरीणा शतादपि सुहृद्विशिष्टः ।।

सा वनिता परिणय-संस्कार-पूता सती पत्नी भवति अर्धाङ्गिनी । सुहृदपि तादृशेन संस्कारेण मित्रत्वमायाति । वाल्मीकिना स मित्रनिष्पत्ति-संस्कारो

राम-सुग्रीव-मैत्री-प्रसङ्गे वैशद्येनोपवर्णित । अत्रापि अग्निर्दीप्यते, तस्य प्रदक्षिणा क्रियते च । रामायणानुसार मैत्री विधातु निश्चितमनसौ राम-सुग्रीवौ प्रथम परस्पर-हस्तपीडन कृतवन्तौ, इति तु पाणिग्रहणमेव। पश्चाच्च

ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ।
सुग्रीवौ राघवश्चैव वयस्यत्वमुपागतौ ।

मित्राणा परस्पर पाणि-ग्रहण-विधि पुरा प्राय प्रचलित आसीत् । पद्मपुराणे—

हस्तैर्हस्तान् स्पृशन्तीव सुहृद्भिश्चिरसगता ।

मैत्रीभावस्व प्रभावो बोधिसत्त्वस्य जातक-कथासु अनेकशो व्याख्यात । न कश्चिद् हिस्रोऽपि जन्तुर्लोक प्रति मैत्रीभाव प्रपन्नस्य जनस्य हिसां करोतीति तत्र प्रतिपादितम् । मैत्रीभावात् नि.शङ्कता, निर्भीकता, शान्तिः, स्वास्थ्यमिति एते गुणा स्वभावत सम्भवन्ति कस्यचित् पुरुषस्य ।

## ११. पुरा भारते शूद्राणां स्थितिः

'के ते सन्ति इमे शूद्राः' इति प्रथमतर महान् वितर्क । बहवस्तत्र सन्ति चिन्तका येषा मतेनार्यैर्विजिता दासीकृताश्चार्येतरा शत्रव. शूद्रपदे न्यक्कृता । अपि च वैदिकवर्ण-व्यवस्थाया कश्चिदपूर्व एवैको नवीनो वर्णः सयोजित । नैतत् सत्यम् । यतो हि नामार्येषु प्रथमत एव बहवो जनाः सेवाकर्मणि शिल्पकर्मणि वा व्यापृता आसन् । ते शूद्रा इति ख्याता । तेषां शिल्प-वृत्तिः सेवावृत्तिर्वार्येतरैर्यैर्जनै स्वीकृता, ते आर्या अपि शूद्रा बभूवुः । सर्वेषु समाजेषु ईदृशानां शिल्पजीविना सेवा-परायणाना च जनाना प्राचुर्य सदा भवति । वैदिकयुगे तादृशा. शिल्प-विशेषज्ञा बहुसख्यका आर्येतरजना आर्यैरात्मनश्चतुर्वर्णव्यवस्थाया शूद्रवर्गे सयोजिताः । तथैवार्येतरेषु ये जना ब्रह्मवृत्ति क्षत्रवृत्ति वैश्यवृत्ति वा स्वीकृतवन्तस्तेऽपि सर्वे यथावृत्ति ब्राह्मणा वा क्षत्रिया वा वैश्या वा बभूवुः ।

'एतेषा सामाजिकस्थितिः कीदृशी आसीत्' इति प्रकरणेऽस्मिन् प्राचीनसमाजस्य तदनुसारिपरिचय प्रासङ्गिक । पुरा भारते प्रायः सदैवाश्रमव्यवस्था परिपालनीयासीद् द्विजातिभिर्ब्राह्मण-क्षत्रिय-वैश्यैः । तेषु ये केचिज्जना

यतो हि ते जीवनस्य परममुद्देश्यमेव नाभिजानन्ति स्म। तेषां पूर्वपुरुषाणां मानदण्डेन ते शूद्रा हीना भवन्तु नाम, किन्तु अस्माकीनानां पञ्चेन्द्रियसुखमेव सर्वमिति मन्यमानाना मतेन प्राचीनाः शूद्रा न निकृष्टा बभूवुः। यदि ते निकृष्टा आसन्, तर्हि आधुनिकयुगस्य सर्वे सेवावृत्तिधारिण उच्चपदाधीशा वा व्यवसायपरा वा (Engineers and Industrialists) हीना भवन्ति।

सेवाधर्मे नास्ति काचिद् हीनता। तथाहि—इयं सेवा सर्वेषां वर्णानां कृते निर्धारितासीत्। क्षत्रिया ब्राह्मणानां वैश्याः क्षत्रिय-ब्राह्मणानां शूद्राश्च वैश्य-क्षत्रिय-ब्राह्मणानां सेवां कुर्वन्तु इति धर्मशास्त्रकारा असकृद् वदन्ति। शूद्राणां सेवकानां सामञ्जस्यमधिकृत्य महाभारते प्रोक्तम्— स्वामी चेत् वृद्धो वा दुर्बलो वा भवेत्तर्हि स शूद्रेण सेवकेन भर्तव्यः। यदि नाम सोऽनपत्यस्तर्हि शूद्रेण तस्मै पिण्डो देयः। सेवकस्तु स्वयमेव विपत्सु स्वामिनो भर्त्ता भवेदिति। वैदिककाले तु एकस्मादेव पुरुषाच्चतुर्वर्णानामुत्पत्तेर्धारणा नियामिकेव दृश्यते। तथा हि वैदिकसंहितासु शूद्राणां कृतेऽपि यशःप्राप्तये ब्रह्मर्षिभी रचिता मन्त्राः सन्ति। शूद्राणामपि प्रियो भवितुं मन्त्रा रचिताः। बृहदारण्यकानुसारं शूद्रा पोषकाः सन्ति सर्वेषाम्। तद्यथा— स शौद्रं वर्णमसृजत्। पूषणमियं वै पूषेयेयं हीदं सर्वं पुष्णाति यदिदं किञ्च।

यज्ञावसरेऽपि सर्वेषां वर्णानां प्रतिनिधय आमन्त्रिताः सर्वे च ते सद्भावेन सत्कृताः पूजिताश्च। तत्र यज्ञेषु प्रार्थनाभवत्—

रुचं नोधेहि ब्राह्मणेषु रुचं राजसु नस्कृधि।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचारुचम्॥

महाभारतानुसारं शूद्रा अपि यज्ञ-वाहकाः सन्त्येव।

पुरा बहवः शूद्रा दार्शनिका धर्माचार्याश्च बभूवुः। तेषु महाभारते तुलाधारः प्रसिद्धो वर्तते। धर्मशास्त्रेषु मोक्षाय शूद्राणां निषेधो नास्ति। गीतानुसारं कृष्णाश्रिताः शूद्राः परमपदाधिकारिणः सन्ति। बौद्ध-जैनधर्माचार्याणामपि सिद्धान्तानुसारं शूद्राय निर्वाणपथो नावरुद्धः। ब्रह्मपुराणानुसारं तु

यस्तु शूद्रः स्वधर्मेण ज्ञान-विज्ञानवाञ्शुचिः।
धर्मज्ञो धर्मनिरतः स धर्मफलमश्नुते॥

—च शूद्राश्चाण्डाला अपि विष्णुमन्दिरे देवदर्शनेनात्मलाभार्हाः।

महाभारतानुसारं राजनीतिविधौ चतुर्णां वर्णानां साहचर्यं सुप्रतिष्ठितमासीत्। वैदिककालीने रत्निपरिषदि ब्राह्मणाः, क्षत्रिया वैश्याः, शूद्राश्च सर्वे सदस्या भवितुमार्हन्। महाभारतानुसारममात्य-परिषदि चत्वारो ब्राह्मणाः,

अष्ट क्षत्रिया', एकविंशतिर्वैश्यास्त्रयः शूद्राश्च सदस्या बभूवु ।

बहवः शूद्रा राजानो बभूवु पुरा भारते । ऐतिहासिकयुगेऽपि प्रायः प्रतिशत पचविंशति राजान. शूद्रा आसन् । राजपदाय क्षत्रियत्व नावश्यकमासीत् । ह्वेनसागानुसार सिन्धुप्रदेशस्य मतिपुरस्य च राजानौ शूद्रौ आस्ताम् । महाभारत-रामायणानुसार तु तत्कालीनभारते शूद्रराजाना सख्या शतप्रायासीत् ।

'मनुस्मृतौ वेदश्रुतेर्निषेध' शूद्राणा कृते वर्तते' इति तु सत्यमेव । वेदान् व्यतिरिच्य यत्किञ्चिद् विपुल साहित्य सूत्र-स्मृति-रामायण-महाभारतेतिहास-पुराण-काव्य-शास्त्रादि वर्तते, तत्सर्व शूद्राणामध्ययनार्थ सम्मतमेव । वेदाध्ययन तु मनुयुगे वैदिकयज्ञप्रवणाना द्विजातीना कृते निर्धारितमभवत् । शूद्रा वैदिकयज्ञपरायणास्तस्मिन्युगे नासन् । तदा तेषा धार्मिकविधिः पौराणिक. संजातः । एतदेव तत्र कारणम् ।

पुरा शूद्राणां विद्याधिकारो भृशमासीत् न केवल शिल्प-विज्ञानादिविषयाणां तेऽध्येतारो बभूवुरपि तु वैदिकयुगे ते वेदाध्ययनाय स्वीकृताः । अत एव बहवस्तत्रार्येतरा अपि विद्वांसो वेदमन्त्राणा रचयितारो बभूवुः । आश्वलायनगृह्यसूत्रे शूद्राणां समावर्तनस्य विधिरुल्लिखितः । महाभारते तु विद्याक्षेत्रे आदिकालीना चातुर्वर्ण्य-प्रवृत्तिर्निर्दिष्टा—

इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्व लोभादज्ञानतां गताः ॥

बौद्ध-संस्कृतौ शूद्रा अपि संघे प्रविष्टाः सन्तो ज्ञानिनो बभूवुः । जैनसंस्कृतौ चाण्डालानामपि विद्याधिकारः समीहितः ।

भारते पुरा कतिपयधर्मान्धप्रदेशा आसन् । तत्र शूद्राणां स्थितिः शोचनीयासीदित्यत्र न संशय । तथापि नात. पर मत्य यत् आधुनिकसुसभ्यता-युगेऽपि आष्ट्रेलियाफ्रीकामेरिका - महाद्वीपेषु आदिवासिनां यादृशी शोचनीया दुर्दशा वर्तते, तादृशी पुरापि भारते कदापि शूद्राणां चाण्डालानामपि नासीत् ।

# १२. भारतीया धार्मिक-सहिष्णुता

धर्मस्य बह्वः परिभाषा •वर्तन्ते । तथा हि–

यतोऽभ्युदय - नि श्रेयससिद्धिः स धर्म ।
धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजा. ।
धृतिः क्षमा दमोऽस्तेय शौचमिन्द्रिय-निग्रह ।
धीर्विद्या सत्यमक्रोधो दशक धर्मलक्षणम् ।।

इत्येतासु परिभाषासु क्वचिदपि तद्बीजमपि न दृश्यते, यस्य विकासेन धार्मिकी असहिष्णुतोत्पद्येत । यद्यपि अपरेष्वपि विश्वधर्मेषु तादृश तत्त्व नास्त्येव, येषां प्रभावेण धर्मानुयायिन परस्परं शत्रुभूता विद्वेषिण· स्यु, तथापि योरपीयमहाद्वीपे शतवार्षिकाण्यपि युद्धानि धर्मकारणात् समारब्धानि' इति इतिहास एव प्रमाणम् । प्राय कस्यचिद् धर्मस्यौदात्त्ये सत्यपि तस्यानुयायिनो स्वधर्मस्य तात्त्विकानादर्शान् विस्मृत्येव परधर्मोन्मूलनकर्मणि व्यापृता भवन्तु, अपरे वा युद्धेन कूटनीत्या वा परधर्मोन्मूलनमेव स्वधर्मस्य रक्षणाय सवर्धनाय चावश्यकं मन्यन्ते । वस्तुतस्तु एतादृशा जना. स्वधर्मस्यैव शत्रव इत्यलं पल्लवितेन ।

भारते बहुविधा. साम्प्रदायिका धर्मा· प्रादुर्भूता विकसिताश्च सन्ति । एतेषु धर्मेषु किञ्चिद्विशिष्टमेव तत्त्वमासीद्यस्य प्रभावेण तेषामनुयायिनः परस्परं युद्धं न कृतवन्त । सत्यानुसन्धित्सवो विविधसम्प्रदायानुवर्तिनो विद्वासो विवादं शास्त्रार्थं वा प्रायश. कुर्वन्ति स्म, किन्तु साधारणजनता यस्य कस्यापि धर्मस्यानुवर्तिन्यपि धार्मिकाभिनिवेशेन विवादमपि न कृतवती, का कथा पारस्परिकयुद्धस्य । तद्वर्तते खलु भारतीयधर्मस्य किञ्चिद्वैशिष्ट्यं येन धर्मानुयायिनः परधर्म प्रति सहिष्णुतामेव सर्वोत्कृष्टं भाव न केवल सिद्धान्त-रूपेणापि तु व्यवहाररूपेणापि भजन्ते । तदेव तत्त्वमत्रानुसन्धेयम्

महाभारते धर्माणां पारस्परिकसाहचर्य सम्यक् प्रतिपादितम् । तद्यथा—

धर्म यो बाधते धर्मो न स धर्म. कुधर्म तत् ।
अविरोधात्तु यो धर्म. स धर्मः सत्यविकम ।।

एतस्य महाभारतीय-धर्मरहस्योद्‌घाटनस्य पूर्वरूपं वैदिकसहितासु सन्दृश्यते । तथाहि—

एक सद्विप्रा बहुधा वदन्ति, एकं नियानं बह्वो रथासः ।

तदेव सत्यं सर्वेषां मातृभूता पृथिवी प्रति निर्देशितम्—

जनं बिभ्रती बहुधा विवाचसं, नाना धर्माण पृथिवी यथौकसाम् ।

ईदृशी पृथिवी तु वस्तुतः स्वकीयं क्षमा नाम सार्थं विदधाना सर्वानस्मान् पृथिवीपुत्रान् क्षमाधर्मं सहिष्णुतां वा स्वादर्शानुसारं शिक्षयति ।

एतस्याः सहिष्णुताया भित्तिमूलं तु 'किं वयम्' किं चेमे देवाः' इति प्रश्नयोः समाधानेन प्रतिष्ठितं वर्तते, यतो हि देवाननुकृत्य धर्माः प्रायशः प्रादुर्भूताः । प्रकरणेऽस्मिन् शङ्कराचार्यस्य मतं प्रकाशमाधत्ते—

स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः ।
स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किञ्चन ॥

भागवतेऽपि सिद्धान्तितम्—

एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् ।

विस्तृतेऽस्मिन् स्वस्य परिधौ तत्र कोऽवसरोऽसहिष्णुतायाः ।

यान् देवान् संविभज्याचार्याः साम्प्रदायिकधर्मानाविष्कुर्वन्ति, ते सर्वे देवाः स्वस्मिन्नेव वर्तन्ते । स्वयमेव सर्वदेवरूपः कश्चिज्जनोऽपरं कञ्चन भिन्न-धर्मानुयायिनमपि कथं न्यक्कुर्यात् । यथा सर्वे देवा मयि वर्तन्ते, तथैव त एवापरजनेष्वपि सन्ति । भागवतानुसारं तु जना यान् कानपि देवान् यजन्त एकं विष्णुमेव यजन्ति । तद्यथा—

सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम् ।
येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ॥
यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताःप्रभो ।
विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्ततः ॥
किन्तु ते सर्वे एकीभूय सम्यगाचरन्तु ।

न केवलं शास्त्रकारा अपि तु कवयोऽपि विविध-सम्प्रदायादर्शभूतानां देवानामेकत्वं साग्रहं प्रतिपादयन्ति । तथाहि कालिदासः —

एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ ॥

अन्यच्च तस्य प्रतिपादितम्—

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनःप्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥

'पञ्चतत्त्वरूपः शिव एव सर्वेषु प्राणिषु प्राणिति' इति उपर्युक्त-श्लोक-दिशा बोधितः शैवः कथमन्यं वैष्णवं वा बौद्धं वा जैनं वा द्वेष्टि ।

धर्मोपेता· शिल्पकारा अपि धार्मिक-सहिष्णुतां प्रदर्शयन्ति । तथाहि— अजन्तागुहासु न केवल बौद्ध-सस्कृतेरपि तु वैदिकसस्कृतेरपि देवादीना चित्राणि मूर्तयश्च निरूपितानि सन्ति ।

इय धार्मिकसहिष्णुता धर्माचार्यै· सम्यक् प्रतिष्ठापिता । गौतमबुद्ध. पौराणिकधर्मे विष्णोरवतार इति प्रतिष्ठापित: । जैनधर्मस्य त्रिषष्टिश्लाघ्य-महात्मसु रामकृष्णादय सगृहीता. । अशोक. शिलासु लेखितवान्— सर्वे पाषण्डा (धार्मिक-सम्प्रदाया) वसेयु: । शङ्कराचार्य षण्मतस्थापनाचार्यो बभूव । स शैव-वैष्णवसौर-शाक्त-गाणपत्य-कापालिकानां धार्मिकसिद्धान्तान् सप्रमाण सस्था-पयामास, विविधसम्प्रदायेषु आदर्शभूताना च देवाना स्तोत्राणि विरचितवान् ।

अपरञ्च केचिदादर्शभूता. सिद्धान्ता: सर्वेषु धर्मेषु समानं स्वीकृता. । तद्यथा सत्याहिसास्तेयब्रह्मचर्यापरिग्रहा इति यमा ब्राह्मण-बौद्ध-जैन-सम्प्रदायै-रामूलात् आम्नाता: । तेषु सर्वेषु व्रतोपवासैश्च शारीरिक-शुद्धिर्मानसिक पवित्रता च, सम्भाविते । न कोऽपि धर्मो घृणा वा वैषम्य वा शिक्षयति । पद्म-पुराणे सर्वेषां धर्माणामनुयायिनां कर्तव्यपथो निर्धारित: —

स्वधर्ममपि चावेक्ष्य परधर्म न दूषयेत् ।

प्राचीन-राजाना धार्मिक-सहिष्णुता, परधर्मसंवर्धनशीलता च प्रायश. तेषा न केवलं वचनैरपितु कार्यततिभिश्च प्रमाणिते । तथाहि–चन्द्रगुप्तमौर्य–हर्षवर्धन–कुमारपालादयो नृपतयो सर्वान् धर्मान् प्रति श्रद्धापरायणा बभूवु । अशोकस्य मानवधर्म. सर्वधर्मानुयायिना कृते समान एवासीत् । कश्मीरनरेशो ललितादित्योऽ सख्यविहारान्, चैत्यानि, स्तूपान्, वैष्णवमन्दिराणि च निर्मापितवान् । बौद्धधर्मा-नुयायिनौ राजानौ महीपालशुभाकरौ ब्राह्मणेभ्यो ग्रामान् दत्तवन्त: । शैवोऽपि वलभिराजो गृहसेनो भिक्षुसघाय चतुरो ग्रामान ददौ । वैदिकधर्मानुयायिनो गुप्तराजा नालन्दा-विश्वविद्यालयस्याभ्युदयार्थं बहु कृतवन्त: । 'यथा राजा तथा प्रजा' इति सिद्धान्तानुसार तत्कालीनलोकाना धार्मिकसहिष्णुता सम्प्रतिष्टितासीत् ।

विविधधर्माणां गृहस्थास्तु न केवलं स्वधर्मस्यापि तु अन्येषा धर्माणामपि आचार्याणामातिथ्य कृत्वा तेषामुपदेशभाजनानि बभूवु । बौद्ध-संघस्य निमन्त्रणं कृत्वा तस्मै भोजन-वस्त्रादिदानं ब्राह्मणैरपि कृतम् । अस्यां स्थिता एकस्मिन्नेव स्थाने विविधधर्माचार्याणा संस्था· केन्द्राणि च प्रादुरभवन् । तत्सर्व मथुरा–काशी-सांची–एलूरा–विदिशादिनगरीषु अद्यापि प्रत्यक्षमेव ।

प्राचीनकाले कतिपय-शिक्षण-संस्थासु प्रायश: सर्वेषां धर्माणां शिक्षाया-व्यवस्थासीत् । नालन्दाविश्वविद्यालय एतादृशीषु संस्थासु आदर्श आसीत् ।

हर्षचरिते महाकविबाणेन आचार्य-दिवाकरमित्रस्य या शिक्षणसस्था वर्णिता, तस्या विविधसम्प्रदायाचार्या स्वसिद्धान्तान् प्रतिपादितवन्त । तथैवैकस्मिन् मन्दिरे त्रिदेवाना मूर्तय प्रतिष्ठापिता । तत्र कश्चित् पुरुषो विविधदेवाना पूजनं कुर्यादिति विधानमधुनापि साधारण्येन दृश्यते । एकस्मिन्नेव कुटुम्बे विविध-सम्प्रदायानामनुयायिनो निर्विरोधं निवसन्ति स्म । तथाहि— हर्षवर्धनः शैव आसीत् । तस्य ज्येष्ठभ्राता राज्यवर्धनो बौद्धोऽभवत्, तयोः पिता च सौर-सम्प्रदायानुवर्ती बभूव ।

प्राचीनभारते सुविचारकाणामाचार्यादीना सदैव धार्मिक-सहिष्णुता संस्था-पनीयासीदिति उपर्युक्तविवेचनै स्पष्टमेव । अत. प्रोक्त महाभारते—

महानय धर्मपथ. बहुशाखश्च भारत ।

तत्र न कश्चिज्जन स्वकीयं धर्ममेव सत्य मत्वा तस्माद् व्यतिरिक्त सर्व मिथ्येति वार्तां कुर्यात् । अथकिम्— रूप रूप प्रतिरूप बभूवेति धर्म-सम्बन्धेनापि सत्यमेव ।

## १३. चारित्रिकविमर्शोऽभ्युत्थानञ्च

प्रथमतर तावत् हीनस्वार्थस्य साम्राज्यं वर्ततेऽस्माकं देशे । अय जनो मम सम्बन्धी वा जातीयो वा मित्रं वा मित्रपुत्रो वा मम स्वार्थं साधयिष्यति' इति विचार्य स पुरस्क्रियते, धुरि च नियोज्यतेऽधुना । यदि सोऽयोग्यो भवति, तर्हि तस्मात् जनात् समाजस्य हानिरेव जायते । अनेन प्रकारेणैकस्य नियुक्तिकर्तुः स्वार्थसाधनाय असख्याना जनाना हानिर्भवति । 'इयमेव विपत्तिमयी स्थितिः भारतस्य परा दुर्दशा जनयति' इति निश्चप्रचम । तथा हि—उपर्युक्तस्वार्थ-विचारानुसारं कस्यचिदयोग्यस्य पुरुषस्य यदा नियुक्तिर्भवति, तदा भयावहः परिणामो दृश्यते । प्रतिवर्षमसख्या विद्यार्थिनस्तस्यावराध्यापनेन हानिग्रस्ता भवन्ति । अत्र संस्थाया., विद्यार्थिनाम्, समाजस्य या हानिर्भविता तत्सर्व-मेकपदेऽनवधाय यत्किञ्चिदवद्य क्रियते, तदेव देशद्रोहं प्रकटयति तत्रस्थित-नियोगाधिकारिण. ।

आधुनिकभारते लोक-सभासु, विधान-सभासु वा ये जना अस्माकं

प्रतिनिधित्वं कुर्वन्ति, न ते प्रायश स्वचारित्र्यबलेन, लोककल्याण-भावनोत्कर्षेण वा तत्र विराजन्ते, अपितु वास्तविक-योग्यता-व्यतिरिक्ता या तेषा धन-शक्तिर्वर्तते अथवा नेत्रादेशानुसार किञ्चिदकरणीयमपि कर्त्तु या प्रवृत्तिर्वर्तते, सैव तेषा चयनस्य प्रथम कारणमिति हीनराजनीति-विदग्धाना व्यावहारिकी दृष्टि· भारतस्य चारित्रिकविनाशायालम् । चरित्रे विनष्टे कुतो देशस्य समृद्धिर्वा देश-प्रेम वा भविष्यति ।

अत्रास्माक देशे उत्कोचग्रहणं प्रति कश्चिद् घृणाभावो नास्ति साधारण-जनानाम् । नैतेषामुत्कोचग्राहिणा मुखमपि द्रष्टव्यम्, दृष्ट्वा वा प्रायश्चित्त करणीयमिति व्रत भवतु सर्वेषाम् । किन्तु वस्तुस्थितिस्तु विपरीतैव दृश्यते । येन केनोपायेन धनीभूतानां शक्तिमता वा जनाना समाजे प्रतिष्ठा वर्तते । परिणामत तेषा मनसि विचारोऽपि न जायते यदकार्यमिदं तु परिवर्जनीयम् । अन्यच्च, अपरेऽपि तादृशा भ्रष्टाचारिणा समाजे प्रतिष्ठां दृष्टवा स्वयमपि कुकर्मणि चित्तमादधते पतनोन्मुखाश्च भवन्ति ।

देशेऽस्मिन् शारीरिकश्रमस्य लज्जास्पदत्वं दृश्यते । विश्वस्य कस्मिन्नपि देशे शारीरिकश्रमस्य तादृशी हेयता नास्ति, यादृशी भारते शिक्षितजनानां मध्ये भृशं तिष्ठतितमाम् । प्रायश· शिक्षित-जना· स्वल्पतम-शारीरिक-श्रम-साध्यान् नियोगान् स्वीकुर्वन्ति । अस्या स्थितौ तेषा ·धनाभावोऽपि न सम्यक् विनश्यति, अथ च देशस्य समृद्धचर्थं यानि यानि शारीरिक-श्रम-साध्यानि कृषि-पशु-पालनादीनि कर्माणि सन्ति, तेषामवनति· वर्तते ।

'स्वल्पतम एव श्रमः करणीय इति । वेतनभोगिना मनोवृत्तिः प्राय. सर्वत्रैव परिलक्ष्यते । यतो नाम वेतनस्य मात्रा कृतस्य कर्मणोऽनुपातेन न भवति, स्वल्प वाधिक वा कर्म क्रियते, वेतन तु तदेव प्राप्यते । अतो नाधिकं कर्म करणीयम्' इति विचारं धारयमाणा युवका कार्यालयेषु अधिक-संख्यका अपि स्वल्पतमकार्य कुर्वाणा· कि न सन्ति देशोत्थानव्यवधायकाः ।

शिक्षण-संस्थानां नास्ति सर्वथा शोभना गति. । अनेका विद्यार्थिनः प्राध्यापकाश्च स्वकर्मणि दत्तचित्ताः न सन्ति । तेषां प्रवृत्तिः साधारण्येनाधिभौतिकी दृश्यते यदनुसृत्य ते स्वकीय जीवन भोगविलासार्थं गौणतस्तु अध्ययनार्थं मन्यन्ते । परिणामतस्तु प्रत्यक्षमेवाधिकाधिकपरीक्षार्थिनामसफलता विद्यते । गच्छतु तावत् कस्याञ्चिदुच्चशिक्षण-संस्थायाम् । तत्र विद्यार्थिनां शिक्षकाणा च तादृश आचार. प्रत्यक्षीभवेत् यन्नास्ति स्पृहणीय, प्रत्युत घृणास्पदमेव क्वचित् । विद्यार्थिनामाचार्याणा वा जीवनमादर्शपूर्णं तपःसाधनामय

भवेच्चेत्, देशस्य कल्याणम् चिरमेव सम्भवेत्। देशस्य समाजस्य वाभ्युदयार्थमपि अस्माभि. किमपि करणीय विद्यते इति न विद्यार्थिनो वा आचार्या वा प्रायः चिन्तयन्ति, अन्यथा तेषा सुगतिर्भवेत्।

धार्मिक-संस्था. मठ-मन्दिराणि च प्रायशोऽलसानां जनानां भोगविलासादीनामावासाः सञ्जाता। पुरा एतेषां संस्थाधिवासिनां चारित्र्य-प्रकाशेन समाजस्य दुर्वृत्ततमो दूरीभूतम्। न तत्तथाधुना दृश्यते। ये केचित् साधु-संन्यासि-वेशधारिणो याथार्थ्येनाध्यात्म-परायणा न सन्ति ते वस्तुत· शुद्धवृत्तानां महात्मनामपि निष्प्रभावत्व विदधति साधुपथस्योज्ज्वलतां मलिनयन्ति च। इमे साधवो यथापूर्व विद्यार्थिना गृहस्थानामपरेषां च साधूनां सदुपदेशका. सन्तः कदा राष्ट्रस्य चरित्र-निर्माणं करिष्यन्ति।

यत् किञ्चित् भारतीयमस्ति आसीद्वा तत्सर्वमुपेक्षाभावेन दृश्यतेऽस्माभिः। तथाहि भारतीयानां संस्कृति-भाषा-वेषभूषा-विद्यादीनां समादरो विलुप्त एव। भारतीयो यो रङ्ग· शरीरे निमग्न, तमपि रेत्र-लेप-पटवासादियोगेन निगूहितुं यत्नो नित्यमेव विधीयते युवजनै.। अस्या स्थितौ भारतस्य भारतीयतैव लुप्यतेतराम्।

तत्कथं देशस्योद्धारो भवेदिति महान् प्रश्नः समाधेयः। प्रथमं तावत् स्वल्पा एव जनाः समीहितं समाचरितु प्रभावशालिनः सन्ति। तेऽपि प्रायः देशस्य दुर्भाग्यविलसितेन मौनावलम्बिनो निष्क्रिया वा सञ्जाताः। तथापि उपायस्तु संचिन्तनीय एवास्माभि.। अद्य वा श्वो वा यत्करणीयं विद्यते, तत् सर्वं सर्वे जानन्तु इत्यस्माकं मनीषा।

सर्वेषां भारतवासिनां मानसे देशप्रेमा जननीयः। प्रेमेति पदेन किञ्चिदनुत्तममेव तत्त्व व्यज्यते। अनेन भावितो जनः प्रेमपात्राय महत्तम त्याग कर्त्तुं समर्थो जायते। देश–प्रेमापि सर्वान् देशवासिन आत्मनः सर्वस्वं प्राणान् वापि देशस्य रक्षार्थमभ्युदयार्थ वोत्स्रष्टुमेवोत्साहयतितमाम्, का कथा चारित्रिकदौर्बल्यानां परित्यागस्य। तत् सर्व गान्धिमहाभागेन प्रत्यक्षमेव दर्शितम्। पुनरपि एतादृशः कस्यचित् महाभागस्याविर्भावेन देशस्य वास्तविकाभ्युत्थान भृश जनिष्यतेतराम् इति तु निश्चितमेव। तथा अत्रान्तरेऽस्माभि देशप्रेम-संवर्धनाय सचेष्टैर्भवितव्यम्। अयमेव देशप्रेम–धर्मः सर्वथा चरणीयः।

# कालिदास-भारती-५

रेवाप्रसाद द्विवेदी

कालिदाससाहित्ये प्रणय-शब्द. स्वातन्त्र्येण प्रणयि-प्रभृतिपदान्तर-घटिततया चेति साकल्येन सप्तपंचाशद् वार प्रयुक्तो लभ्यते। तत्र —

"प्रणयप्रश्रयौ समौ, प्रणयास्त्वमी विस्रम्भयाच्ञाप्रेमाण" इत्यमरे,

"प्रणयः प्रेम्णि विस्रम्भे याच्ञाप्रसरयोरपी"-त्येवं विश्वप्रकाशे,

"प्रणयः प्रश्रये प्रेम्णि याच्ञाविस्रम्भयोरपी"-त्येवं मेदिन्याम्

"प्रणयः प्रेमयाच्ञयोः, विस्रम्भे प्रसरे चापी"-त्येवमनेकार्थसंग्रहे,

"प्रणयः स्यात् परिचये याच्ञायां सौहृदेपि चे"-त्येवं च यादवप्रकाशे। यथा शब्दस्यास्यानेकार्थत्वं लभ्यते तथैव कालिदाससाहित्येऽपि। तत्र तत्र संदर्भेषु टीकितृभिस्ते तेऽस्यार्थाः प्रदर्श्यन्तेऽपि। तथापि प्रतिप्रयोगं विहितानुवीक्षैरस्माभिस्तत्र कानिचन संशोधनान्यनुभूयन्ते। लेखेऽस्मिन् प्रणयशब्दस्य कालिदासकृतान् सर्वानपि प्रयोगानुपस्थाप्य यथास्वं स्वविचारानप्युपस्थापयितु प्रयतामहे।

सत्स्वप्यन्येष्वर्थेषु प्रणयशब्दस्य प्रमुखं प्रवृत्तिनिमित्त प्रेमतत्त्वमेव। तच्च साहित्यशास्त्रे[1] रतिप्रीतिभेदेन द्विधा विभज्यते। तत्रापि रतिपदेन स्त्रीपुसयोरन्योन्य प्रति एको निसर्गनियतो भावबन्धः तद्रूपं प्रेम, प्रीतिपदेन च तदितरविषयकमपि तत् परिभाष्यते। कालिदाससाहित्ये द्वावप्यमू प्रेमभेदौ प्रणयपदेन क्रोडीक्रियेते। तत्र सूचीकटाहन्यायेन प्रीत्यर्थका एव प्रयोगाः पूर्वमुपस्थाप्यन्ते। तथाहि—

## १ - प्रीत्यर्थकाः प्रयोगाः

१— कुमारसंभवे तपोवनमृगाः पार्वतीपाणिपल्लवगतान् दर्भान्—

---

[1] भोजराजः सरस्वतीकण्ठाभरणस्य पंचमे परिच्छेदे प्रेमद्वैविध्यमेतत् सप्रपंचमुपस्थापयति।

अपि प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु ।
य उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥५।३५॥—

इत्येव प्रणयेनापहरन्तो वर्ण्यन्ते । मल्लिनाथोऽत्र "अपहारि"–पदस्थाने "अपराधि"–पदमपि पाठान्तरतया दर्शयति । तत्र प्रथमे पाठे प्रणयपदं स्नेहपरं प्रतिपद्यमानोऽप्यसौ द्वितीये पाठे "दर्भाणां प्रणयेन प्रार्थनया"–इत्येवं प्रार्थनापरं प्रतिपद्यते । युक्तं च तत् । यतो हि प्रार्थनापदेन संस्कृतभाषायामर्थद्वयमभिप्रेयते १–अभिलाषः, २–अभिलषणीयार्थप्राप्त्यनुगुणव्यापारश्च । अनयोरभिलाष आदित्सामात्रम्, व्यापारस्तु द्विविधः १–आदानप्रवृत्तिरूपः २–आदानानुरूप्य-कृद्याचनरूपश्च । अनयोराद्यः पशुमात्रनिष्ठः, पशूनां हेयोपादेयताविवेकशून्यत्वात्, द्वितीयस्तु मानुषैकवृत्तिः, मानुषाणां प्रवृत्ति–निवृत्त्योर्व्यवस्थितविषयतायाः शास्त्रसिद्धत्वात् । प्रकृते च प्रणयपदार्थः पशुनिष्ठतया अपराधजनकतया च प्रतिपादितः । ततोऽस्य दर्भादानप्रवृत्तिमात्रपरत्वं सिद्ध्यति, अभिलाषमात्रस्यापराधज-नकत्वासंभवात् । नेयं प्रवृत्तिः प्रीतिमात्रम्, प्रीतेः सुखप्रदे वस्तुनि चित्तावर्जनं यावदेव सीमितत्वात्, प्रवृत्तेश्च प्रीतिमूलकादादानेच्छारूपादभिलाषाद् ऊर्ध्वं जायमानत्वात् । ततश्च तृतीयकक्षाप्रविष्टायाः प्रवृत्तेः प्रथमकक्षाप्रविष्टायाः प्रीतेः सकाशाद् भेदः स्पष्ट एव । 'अपहारि'–पदघटिते तु पाठे तादृशप्रवृत्ते-रपहारिपदेनैव प्रतिपादितत्वाद् अभिलाष–प्रीत्यन्यतर–विनिगमनाविरहाच्च प्रीत्यर्थक–स्नेहपरत्वेऽपि न दोषः ।

२—शाकुन्तले शकुन्तलाहस्तगत एव जले दीर्घापाङ्गो नाम मृगपोतकः प्रणयं करोति न तु दुष्यन्तहस्तगते (५।२२) । अत्र प्रणयपदेन जलादान-प्रवृत्तिं यावत् प्रसृता प्रीतिरेव मृगस्यावसेया ।

३—शाकुन्तल एव साक्षादुपागतां शकुन्तलां प्रत्यादिश्य शापनिवृत्तौ निजां विडम्बनामेव प्रतिपादयति—

'स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान् मृगतृष्णिकायाम् ॥६।१६॥

अत्र हि प्रणयः प्रीतिमात्ररूपः । न च मृग-तृष्णिकातः समासोक्तिविधया स्त्रीत्वप्रतीतेः प्रणयपदं तद्विषयकमपि रतिरूपं प्रेम प्रत्याययेदिति वाच्यम्, पूर्वार्धवाक्यार्थेन स्त्रीत्वस्य गतार्थत्वाद्, दृष्टान्तवाक्यार्थस्य पूर्वार्धप्रतीत-समर्थनीय-वस्तु-प्रतिबिम्बभूतस्य मृगतृष्णिकारूपस्य जडमात्रस्यैव वस्तुनस्तात्पर्यविषयतया प्रत्यायनाच्च । न च प्रणयोऽत्र प्रतिपादयिष्यमाण-याचनार्थकोऽपि संभवति, याचनायाः प्रस्तावाननुमोदितत्वात्, मृगतृष्णिकायां 'जलं देहि' ति संभाव्यमानाया

अपि तस्याः प्रमादमात्रविषयत्वात्, प्रमादस्य च दुष्यन्तगतस्य प्रस्तावेऽस्मिन्नलभ्यमानत्वात् ।

४—रघुवंशे दशरथपत्नी सुमित्रा पत्या स्वयमदत्त्वा सपत्नीभ्यामेव प्रतिपाद्यमानं चरुपायस प्रतिपत्तु न विचिकित्सते । तत्र समाधानं प्रस्तुवन् महाकविर्ब्रवीति—

'सा हि प्रणयवत्यासीत् सपत्न्योरुभयोरपि ।
भ्रमरी वारणस्येव मदनिष्यन्दलेखयोः ॥१०।५७॥

अत्र दानप्रतिग्रहयोः प्रसगपतितत्वेपि प्रणय प्रीतिमात्ररूप', सुमित्राकर्तृकाया याचनाया अत्रोपनिबन्धाभावाद् अर्थान्तरस्य चासभवात् । अस्ति च हेमाद्रिमल्लिनाथयोरप्यर्थोऽयमनुमतः ।

५—मालविकाग्निमित्रे इरावती चरणपतितमपि अग्निमित्रम् उपेक्ष्य गच्छति । तत्र तामनुनयता नायकेनोच्यते—"एव हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता" [३।२३] । अत्र काटयवेम. प्रणयवतीति पद प्रेमवतीति पर्यायकं प्रतिपादयति । युज्यते च तत् । इराग्त्याः "प्रणयवती कुपिते"त्येवमत्र प्रणयकोपस्यैव विवक्षाविषयत्वात् । तेन हि पूर्वमुपनिबद्धा प्रार्थनाप्यत्र प्रणयतया नेतुं शक्येतेति वक्तु न शक्यते ।

६—कुमारसंभवे भगवत्याः पार्वत्यास्तप समाधिं वर्णयता कालिदासेन—

"विसृष्टरागादधरान्निवर्तितः स्तनागरागारुणिताच्च कन्दुकात् ।
कुशांकुरादानपरिक्षतागुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥५।११॥

इत्येवं तस्याः करस्याक्षमालाप्रणयित्वं प्रतिपाद्यते । अत्र प्रकृतिभूतस्य प्रणयपदस्य "प्रणयी सहचर" इत्येव साहचर्यपरत्वं मल्लिनाथः प्रतिपादयति । वयं तु कोमलवस्तुपरित्यागपूर्वकं परुषवस्तुपरिग्रहे भगवत्या हार्दस्यान्यथानुपपत्तेः प्रीतिमात्रपरत्वमस्य मन्महे । तथाविध विपम वस्तु तया चित्तप्रातिकूल्येन न प्रत्यग्राहि, प्रत्युत मनस पूर्णेनाभिनिवेशेनेत्यस्यार्थस्य प्रीत्यर्थकत्वमात्रे [प्रणयपदस्य] स्वीक्रियमाणे सभवात् । परिग्रहस्य मनोयोगशून्यत्वविवक्षायां हि "तयाक्षसूत्रे स्वकरः प्रवर्तित" इत्येवमेव पदार्थयोजनां कविराद्रियेत । साहचर्ये पुनर्जपमात्रे नित्योद्यम. प्रतीयते, सोपि च केवलमंगुलिसचालनमात्ररूपः । तपसः कृते तपःसमाधिपदं प्रयुजानस्य कवे प्रतिभासरम्भास्पद चित्तस्थैर्यं तत्र प्रत्येतुं न शक्यते । कविरत्र "अक्षसूत्र-शब्देन" प्रणयिशब्दं योजयति, न तु "प्रणय" शब्दम् । अस्ति चाय "प्रणय" शब्दः प्रीतिमत्त्वमात्रे रूढः । साहचर्यस्य तत्र क्वाचित्कत्वमात्र भवति, न सार्वदिकत्वम् । ततः साहचर्यमत्र

भक्तिमात्रलभ्य संभवति । न तु स्वारसिकाद् व्यापारात् ।

इत्थमेषु षट्सु स्थलेषु प्रणयशब्दः प्रीतिमात्रार्थको दृश्यते ।

## २ — रत्यर्थकाः प्रयोगाः

इदानी रतिरूपप्रेमप्रतिपादकस्य प्रणयपदस्य प्रयोगानुपस्थापयामहे—

१– रघुवंशस्य षोडशे सर्गे जलविहारिणं कुशमवरोधजनो वर्णोदकैः सिंचति। तत्र कवि –

"वर्णोदकैः कांचनशृंगमुक्तैस्तमायताक्ष्यः प्रणयादसिंचन्" ॥ (१६।७०)। इत्येवं प्रणयशब्दं प्रयुङ्क्ते। मल्लिनाथो हेमाद्रिश्चेति द्वावपि तं स्नेहार्थकमेव मन्वाते। युक्तं च तत्, अर्थान्तिरस्य प्रसंगाननुमोदितत्वात्।

२– रघुवशस्यान्तिमे सर्गे तन्नायकोऽग्निवर्णो रात्रौ नर्तकीगृहेषु तिष्ठति, प्रातश्चावरोध प्रसादयितुं यतते। एतदेव वर्णयन् कविः श्लोकते—

"प्रातरेत्य परिभोगशोभिना दर्शनेन कृत–खण्डन–व्यथाः ।

प्राजलिः प्रणयिनीः प्रसादयन् सोऽदुनोत् प्रणयमन्थरः पुनः ॥१९।२१॥

अत्र प्रणयपदं मल्लिनाथः स्नेहार्थकं मनुते। हेमाद्रिरत्र "प्रणय"–शब्दस्य स्थाने "ग्रहण"–शब्दमुपादत्ते। 'विश्वप्रकाशस्य' ग्रहणं तूपलब्धौ स्यादादरे ग्रहणे कर इति "मन्थर सूचके कांस्ये"–इति च वचनद्वयमुद्धृत्य "ग्रहणमन्थर"–शब्दाय "आदरसूचक" इति पर्याय स्थिरयति। अस्ति चायमेव पाठो वल्लभः, चरित्रवर्धनः, दिन्नकरः, सुमतिविजयः, विजयानन्दशिष्यश्चेति प्राचां रघुवंशटीकितॄणां मूलत्वेनाभिमतः।

३– पूरूरवा गन्धमादने विद्याधरदारिकां सविशेषमवलोकयते। उर्वशी तेन मानग्रहिला जायते। तदीयां स्थितिं सखीमुखेन कविरेवमुपस्थापयति–"असहना सा, दूरारूढश्चास्याः प्रणय"–(४।३)–इति। सोयं प्रणयः प्रेमातिशयरूप एव।

४– मेघदूते यक्षो यक्षिण्याश्चित्रं शिलायामालिखति, संदेशपदे च कथयति–

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया–

मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्। (२।४२)–इत्यादि।

अत्रापि प्रणयो भावबन्धरूपः स्नेह एव। स्नेहाश्रितोऽयं कोपः चतुर्भाणीप्रमुखेषु शृंगारप्रबन्धेषु नितान्तमेव प्रसिद्धः। भरतो मल्लिनाथश्चेति टीकितारौ पदमिदं स्नेहार्थकमेव मन्वाते।

५– दुष्यन्तो दुर्वाससः शापाच्छकुन्तलां प्रत्याख्याति। प्रत्याख्यानकषायि-

तायास्तस्याश्चेष्टाश्चैवं निवर्णयति—

मय्येव विस्मरणदारुणचित्तवृत्तौ वृत्तं रहःप्रणयमप्रतिपद्यमाने ।

भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या भग्नं शरासनमिवातिरुषा स्मरस्य

शाकु०-५।२४

अत्र प्रणयशब्देन दुष्यन्तः शकुन्तलया सह संपन्नमात्मनः प्रेमैव परामृशति । राघवभट्टो मानियरविलियम्समहोदयश्चात्रामुमेवार्थं दर्शयतः ।

६–रघुवंशस्थे वसन्तावतारविवरणे किंशुके समुद्भिद्यमान मुकुलजालं वनमालाप्रणयिन्याः प्रत्यग्रनखक्षतौपम्येन कविरेव वर्णयति—

उपहितं शिशिरापगमश्रिया मुकुलजालमशोभत किंशुके ।

प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया ॥ ९ । ३१ ॥

अत्र प्रणयिपदेन प्रेमवत्त्वमेव, नार्थान्तरम् ।

७—विप्रयुक्तानामंगनाना हृदयस्थितेर्यन्निबन्धनं तद् उपस्थापयन् कालिदासो वक्ति—

"आशाबन्धः कुसुमसदृशं प्रायशो ह्यंगनानां

सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥१।१०॥

अत्र हृदयस्य प्रणयित्वं प्रेमयुक्तत्वमेव नान्यत् । मतं चैतद् भरतस्य मल्लिनाथस्य च । तौ हि प्रणयिपद प्रेमार्द्रजनपरं दौर्भाग्यरहितव्यक्तिपरं च क्रमेण मन्वाते । तत्र दौर्भाग्यं नाम प्रेयसोरन्योन्यभावबन्धरूपस्य सौभाग्यस्याभावः, दौर्भाग्यराहित्यं च उभयाभावमुखेन सौभाग्यरूपमेव । तच्च रतिरूपमेव । यथा चैतत् तदस्माकमेव सागरिकायां प्रकाशिते कालिदासभारतीप्रथमपुष्पे यथातथं विशदीकृतमेव ।

८—नक्त नीलकण्ठपरिभुक्तयौवना पार्वती दिवा परिभोगचिह्नानि मुकुरे पश्यति । तदेव वर्णयता सुकविनोच्यते—

"दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।

वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कानि न चकार लज्जया ॥कुमा० ८।११॥

अत्रापि प्रस्तावेन शिवपरत्वेऽपि प्रणयिपदस्य योगलभ्यं प्रवृत्तिनिमित्तं प्रेमपूर्णत्वमेव । मल्लिनाथ-सीतारामौ च तथैव व्याकुरुतः ।

९—अस्यामेवोज्जयिन्यां यक्षो मेघं कस्याश्चिद् भवनवलभावेकरात्रं वासयते। ततश्च प्रातःकृत्यं निर्दिशन्नसौ कथयति—

"तस्मिन् काले नयनसलिलं योषितां खण्डितानां

शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।

प्रालेयास्रं कमलवदनात् सोऽपि हर्तुं नलिन्याः

प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥१।४३॥

अत्र प्रणयिपदं किंवान्यत् प्रतिपादयेद् ऋते प्रेमिमात्रम् ।

१०—मेघदूत एव कैलाशोत्संगे विद्यमानाया अलकाया वर्णने कविरात्मनः काव्यशिल्पं—

तस्योत्संगे प्रणयिन इव स्रस्तगंगादुकूलां

न त्वं दृष्ट्वा न पुनरलका ज्ञास्यसे कामचारिन् ॥१।६३॥

इत्येवं चित्रयति । अत्र प्रणयी प्रेयानेव । ततश्च समासोक्तिविधया प्रस्तुतेन तथापि स्वशब्दकथितत्वात् पुनरुक्तभूतेन सादृश्यशिल्पेन अलकागतस्त्रीत्वसमर्थितं कैलाशगत-पुंस्त्व-पोषितं च नायकनायिकागताया अन्योन्यविषयिण्या रतेरेवात्र प्रणयिपदघटकीभूतप्रणयपदार्थत्वं पर्यवस्यति । मल्लिनाथो भरतश्चात्रानुकूलतां धत्त. ।

११—यक्षपत्नी लब्धनिद्रामुखा स्याच्चेत् तस्याः प्रबोधाय मेघेन याममात्रं प्रतीक्षितव्यम् । तत्र यक्षो हेतुमुपन्यस्यन् श्रूयते—

"मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथंचित्

सद्यः कण्ठ-च्युत-भुज-लता-ग्रन्थि-गाढोपगूढम् ॥२।३४॥ इति ।

अत्रापि मल्लिनाथः प्रणयिपदार्थं प्रेयसा, भरतश्च प्रेमवता तादात्म्यापन्नं दर्शयतः । युक्तं च तत्, अर्थान्तरस्यासंभवात् ।

१२— विक्रमोर्वशीयप्रयोगदर्शने सूत्रधारः—

"प्रणयिषु वा दाक्षिण्यादथवा सद्-वस्तु-पुरुष-बहुमानात् ।

शृणुत जना अवधानात् क्रियामिमां कालिदासस्य ॥१।२॥

इत्येवं प्रणयिषु दाक्षिण्यमभिसंधीकुरुते । तत्र प्रणयिपदस्यार्थः शृंगारकथाया रतिशबलितानि पात्राण्येव ।

१३—विक्रमोर्वशीय एव नायिकासमागमोत्सुकं नायकं विदूषको वारद्वयं वक्ति—"चिन्तितो मया दुर्लभ-प्रणयिजनस्य समागमोपायः" [२।१० प्रा०] इति । अत्र प्रणयिजनपदेन नायिका विषयीकृतास्तीति प्रेमयुक्तत्वमेव प्रणयिपदार्थः ।

१४– उर्वशी श्लिष्टयोक्त्या प्रणयिजनं लोचनाभ्यां पिबन्ती वर्ण्यते (१।१३) । तत्र प्रणयिजनपदेन वाचकत्वव्यापारात् सखीजनस्य बुद्धौ क्रियमाणायामपि व्यंजनव्यापारात् पुरूरवस एव तात्पर्यविषयत्वं सिद्ध्यति । तेन हि सखीजनविषयताया प्रणयिजनपदस्य प्रीति–प्रतिपादकत्वेपि नायकविषयतायां रति–प्रतिपादकत्वं स्थिरमेव । तदेव च चमत्कारभूमिः ।

१५- उर्वशी पुरूरवसो नत्रे पृष्ठत उपेत्य निमीलयति। यदा च सा हस्तयोरादाय पुरूरवसा निजासने उपवेश्यते तदा तयोच्यते- देव्या दत्तो महाराज अतोऽस्य प्रणयवतीव शरीर सगतास्मि- (३।१८)। अत्र श्रीमन्तो वेलणकरमहोदया प्रणयवतीपदान्मदनातुरत्व द्योत्यमान मनुते। युक्त च तत्। प्रणयो हि प्रकर्षोभिलाषस्य। तत्र धैर्य-व्रीडादि-च्युतिरपि सभाव्यते। तत एव चोर्वशी झटिति नायकमभिमृत्य स्प्रष्टु शेके।

१६- विक्रमोर्वशीयस्यैव चतुर्थेऽङ्के सगमनीयमणिपार्श्वमभिक्रामत. पुरूरवस: स्थिति गजान्योक्त्या प्रस्तुवन् सुकविरेप गज प्रणयिनी-बद्धास्वादम्-(४।३२) उदीरयति। तत्रापि प्रणयिनीपदार्थं प्रियारूप एव। परस्पर प्रति प्रेमरूपश्च प्रणयपदार्थस्तद्घटकीभूत.।

१७-१८- रघुवंशस्य पूर्वोद्धृते प्रानरेत्य परिभोगेत्रत्यादौ (१९।२१) पद्ये यथा प्रणयिनीपदं समापतित तथैव तस्यैव सर्गस्य-

अगुलीकिसलयाग्रतर्जन भ्रूविभगकुटिल च वीक्षितम्।
मेखलाभिरसकृच्च बन्धन वंचयन् प्रणयिनीरवाप स॥

१७- इत्यत्र पद्ये समापतति। अत्रोभयत्रापि प्रणयिनीपद मल्लिनाथो प्रेयसीपदार्थपरं प्रतिपादयति। मान्य च तत्।

१९- मालविकाग्निमित्रस्य तृतीयेऽङ्के मालविकायाश्चरणौ रंजयित्वा बकुलावलिका ता कथयति त्व भर्तुरपि प्रियासीति, कथयति च एतानि खलु भर्तुरेव प्रणयमृदुलान्यक्षराणि मम वक्त्रान्तरितानि-इति। अत्र वकुलावलिकाया नायकदूतीत्वात् प्रणयशब्दो नायकनिष्ठा मालविकाविषयिणी रतिमेव विषयीकरोति। प्रसगान्तरेषु दूतीमुखेन नायकाना समागमयाचनाया अपि दृश्यमानत्वाद् अत्रापि प्रणयशब्दस्य याचनापरत्वमप्युन्नेतु शक्यते तथापि प्रस्तुते प्रसंगे समागमयोजनामात्रे दौत्यस्य सीमितत्वात् तादृशार्थस्य सभवो नास्ति।

२०- शाकुन्तले नलिनीपत्रे 'तव न जाने हृदयम्'-इत्यादिक्रमेण नखैरर्पितनिवेदनां शकुन्तलाम् उपसृत्य निजपर्युत्सुकत्व तपति तनुगात्रि कामस्त्वता मां पुनर्दहत्येवेत्येव प्रतिपादयन्त दुष्यन्त शकुन्तला सप्रणय-कोपस्मितम् अन्तःपुरपर्युत्सुकं प्रतिपादयति। तत्र प्रणयकोप प्रेमाश्रित एव कोप. संभवति। प्रेम च रतिस्वरूपमेव।

२१- यक्षराजस्य अलकाया विप्रयोग. प्रणयकलहाद् ऋते न भवति- नाप्यन्यस्मात् प्रणयकलहाद् विप्रयोगोपपत्ति-

विस्त्रेशाना न च खलु वयो यौवनादन्यदस्ति (२।२ उ मे०)। इति अत्रापि प्रणयकोप समनन्तरोक्तस्वरूप एव। ततश्च प्रणयोपि परस्परं प्रति प्रेमैव प्रेयसो। प्रेम चैतत् सर्वथा रतिरूपमेव। इमे खल्वेकविंशतिः प्रयोगाः प्रणयशब्दस्य यत्रास्य रत्यर्थकत्वं संदर्भशुद्ध विचारसहं च। एवं कालिदास-साहित्ये प्रीति-रति-प्रेम-प्रतिपादकानां प्रणयशब्दप्रयोगाणामनुशीलनं जातम् संकलनेनेमे सप्तविंशतिर्भवन्ति। इमे हि प्रणयशब्दस्य मुख्या प्रयोगाः।

## ३—याचनार्थकाः प्रयोगाः

गौणेषु प्रयोगेषु प्रणयशब्दः कालिदाससाहित्ये याचनार्थको भूम्नोपलभ्यते। तत्र याचना द्विविधा भवति १—अभिलाषप्रकाशाद् व्यज्यमाना २—याचनादिशब्दप्रयोगादभिधीयमाना च। प्रणयशब्द उभयविधामपीमां क्रोडीकरोति। अस्यैव लेखस्य प्रथमतमसंदर्भानुसारं याचनेय प्रार्थनाशब्दतोप्यभिधातु शक्यते। अत्रायं विशेषो यदस्या याचनायाः प्रार्थनाया वा प्रागुक्तोभयविध-प्रेमपूर्वकत्वं न व्याहन्यते। एतदर्थकान् निखिलानपि प्रयोगानिह प्रस्तूय परिशीलयेमहि। तथा च—

१—गोचारणव्रतो दिलीपो हिमगिरिगुहाया कुम्भोदरनाम्ना भगवत्पशुपतिसेवकेन सिंहेन व्यापाद्यमानां नन्दिनीमवेक्ष्य विहितबहुविधसंभाषणस्तमेव सिंहं वक्ति—

"सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते।

तद् भूतनाथानुग नार्हसि त्वं सम्बन्धिनो मे प्रणयं विहन्तुम्।।२।५८ रघु। इति। अत्र चरित्रवर्धन प्रणयपदं स्नेहपरं मनुते, मल्लिनाथो याचनापरं, हेमाद्रिभट्टश्च तदुभयपरम्। नन्दर्गीकरो मल्लिनाथमनुकुर्वाण प्रणयपद "रिक्वेस्ट" पदेनाग्लवाचानुवदति। संदर्भः पुनरत्र प्रणयपद याचनापरमेव साधयति। उक्तेरितः प्राक् दिलीपः स्वदेहार्पणनिष्क्रयेण नन्दिनीमोक्ष याचितवानेव।

"स त्वं मदीयेन शरीरवृत्ति देहेन निर्वर्तयितु प्रसीद।

दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ।।२।४५ रघु०। इत्यतः

"सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितु भवत्तः।

न पारणा स्याद् विहता तवैवं भवेदलुप्तश्च मुने. क्रियार्थः।।२।५५।। रघु०। इत्यतश्च पूर्वप्रसंगादयमर्थः स्पष्ट एव। इत्थं च प्रणयशब्दोत्र याचनार्थक एव सिद्धयति।

याचनापि चेयं प्रेमपूर्णेति चरित्रवर्धनादीनामपि पर्याययोजनात्र न विसंवदति, अथापि सा नियतमेव टीकान्तरमपेक्षते ।

२—रघुवंशस्य षोडशे सर्गे कुशेन सह साकेतदेवतायाः संवादमुपसंहरता सुकविनोच्यते—

तथेति तस्याः प्रणयं प्रतीतः प्रत्यग्रहीत् प्राग्रहरो रघूणाम् ।
पूरप्यभिव्यक्तमुखप्रसादा शरीरबन्धेन तिरोबभूव ॥१६।२३। इति ।

अत्र हेमाद्रिः, मल्लिनाथो नन्दर्गीकरश्चेति त्रितयोऽपि प्रणयपदं याचनापरमेव मन्यन्ते । मान्यं च तत् । नवमात् पद्याद् एकविंशं पद्यं यावद् आत्मनो दुर्दशां प्रतिपाद्य "तदर्हसीमां वसतिं विसृज्य मामभ्युपेतुं कुलराजधानीम्" १६।२२। इत्येवं कुशावतीपरित्यागपूर्वकमात्मनः पुनः परिग्रहाय कुशस्य याचितत्वात् । याचनेयं न न प्रीतिपूर्णा ।

३—शाकुन्तलस्य सप्तमेऽङ्के सर्वदमनस्य पाणितलसौभगेन जातविस्मयो दुष्यन्तः स्वाभिप्रायं प्रकटयति—

"प्रलोभ्य - वस्तु - प्रणय - प्रसारितो विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्य-पत्रान्तरमिद्धरागया नवोषसा भिन्नमिवैकपंकजम् ॥७।१६। इति ।

अत्र राघवभट्टः प्रणयपदं याचनापरमिव प्रीतिपरमपि मनुते । मानियरविलियम्समहोदयश्च प्रार्थनापरमेव । तदनुसारं शंकरपण्डितोपि प्रार्थनार्थकमेव । युक्तं च तत् । सिंहपोतं मोचयितुकामया तापस्या "बालमृगेन्द्रं मुञ्च, अन्यत् ते क्रीडनकं दास्यामी "ति दत्तप्रलोभनेन सर्वदमनेन "देहि" त्येवं ललितेन वचनोपन्यासेन प्रलोभ्यं वस्तु याचितुं प्रसारितस्य पाणितलस्य दुष्यन्तकर्तृके वर्णनेस्मिन् प्रणयशब्दः किं वार्थान्तरं प्रत्याययेत् । अथापि राघवभट्टस्य प्रीतिरूपोर्थोपि प्रार्थनया सह पूर्ववदत्रापि योजनीय एव, तापसीं प्रति दुर्ललितस्य वत्सवचनोपन्यासस्य प्रीतिं विना असंभवात् ।

४—अग्निमित्रो मालविकाग्निमित्रे प्रियामिरावतीमुपेतुमशक्नुवानो विदूषकं ब्रूते—

"उचितः प्रणयो वरं विहन्तुं बहवः खण्डनहेतवो हि दृष्टाः ।
उपचारविधिर्मनस्विनीनां ननु पूर्वाभ्यधिकोपि भावशून्यः ॥३।३

अत्र काटयवेमभूपः प्रणयपदं प्रार्थनार्थकं मनुते । टानी-महोदयोऽपि प्रणयपदाय "रिक्वेस्ट" पदं पर्यायतया प्रयुक्ते । यद्यप्यसौ बॉलेन्सन-तारानाथादिभिर्विप्रलब्धः "उचित" पदप्रतिपादितमौचित्यं विधेयभूतमप्युद्देश्यकोटौ

निवेश्य "उचितः प्रणय. प्रापर रिक्वेस्ट" इत्येवमनुवदति । प्रस्तुते प्रणय-शब्दे तु सर्वेपीमे टीकितारो युक्तवचना एव । "अद्यैव प्रथमावतार-सुभगानि रक्तकुरवकान्युपायनीकृत्य नव-वसन्तावतार-व्यपदेशेन इरावत्या प्रार्थितो भवान् 'इच्छाम्यार्यपुत्रेण दोलाधिरोहमनुभवितुम्' इति भवताप्यस्यै प्रतिज्ञातम्, तत् प्रमदवनमेव गच्छाम" इति विदूषकोक्तौ "न क्षममिदम्" इति प्रतिवदतो नायकस्य हि पूर्वोक्तेयमुक्तिः तत्र प्रणयपदम् अर्थान्तरप्रत्यायक न सभवति। अस्ति चात्र प्रेमतत्त्वं बद्धमूलम् ।

५– विक्रमोर्वशीये–

महदपि परदु ख शीतल सम्यगाहु प्रणयमगणयित्वा यन्ममापद् गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता फलमभिनवपाकं राजजम्बूद्रुमस्य ॥

इत्यत्र चतुर्थे पद्ये प्रणयपद काटयवेम. प्रार्थनार्थक मनुते तथैव च कल्पलताकारो डा० शास्त्री । अस्ति चायमेवार्थोऽत्र प्रकरणसमर्थित । पुरूरवसो हीयमुक्ति । इत पूर्व पुरूरवा लताभावेन परिणताया उर्वश्याः प्रवृत्तिं कोकिला 'यावदेना पृच्छामी' ति प्रष्टुमिच्छति । कृतनिश्चयश्च वक्ति–यावदेनामभ्यर्थये-इति अभ्यर्थयते च–

"तामानय प्रियतमा मम वा समीप मां वा नयाशु कलभाषिणि तत्समीपम्" इति । तत्र पतिगृह यान्ती शकुन्तला कण्व-वचनमनुपालयन्ती वनस्थली कोकिलामुखेना-नुमन्यमानापि पुरूरवस प्रियाप्रवृत्ति वेदयितु विमुखयति । तत्र प्रतिक्रिया-व्यंजनोक्तिरियं नायकस्य–"महदपि परदु खमि"त्यादिः । अत्र प्रणयपद यत्सत्यं प्रीतिपूर्ण-प्रार्थनापरमेव ।

६—असौ पुरूरवा एव प्रियाप्रवृत्तये भ्रमरमपि पृच्छति । कथयति च "भ्रमरे प्रणयं करिष्य" इति । अत्रापि प्रार्थनैव प्रणयपदार्थः, मधुकर मदिराक्ष्या. प्रवृत्तिम्" इत्येतेनानुपदिकेन सदर्भेण तस्यैवानुमोदितत्वात् । मनुते च कल्पलताकारस्तथैव ।

७—शकुन्तलासमीपमुपेत राजान प्रियम्वदा प्रार्थयते—"अर्हसि, अभ्यु-पपत्त्या जीवितमस्या धरूयितुम्" इति । तत्र राजा प्रत्युत्तरति—"भद्रे साधारणोऽय प्रणयः" [३।१७] इति । वक्ति च समनन्तरमेव "सर्वथानुगृहीतोस्मी" ति । अत्र प्रणयपदस्य प्रियवदापक्षे प्रार्थनापरत्वे प्रकरणात् सिद्धे, साधा-रण्यान्यथानुपपत्त्या दुष्यन्तपक्षेपि तत्परत्वमेव सिद्ध्यति । अत एव राघवभट्टोपि व्याख्याति "प्रणयो याच्ञा, यथा भवतीभिरेतदर्थमहमभ्यर्थये एव मयाप्येतदनुग्रहार्थं भवत्यौ प्रार्थनीये" इति । उद्धरति च विश्वप्रकाशस्य वचनम्—"प्रणयः

प्रेम्णि विस्रम्भे याच्ञाप्रत्यययोरपी" ति परस्पराभिलाषिणोर्नायकयोरन्योन्यानुग्रहार्थितेय विक्रमोर्वशीयेऽपि कविनानेनोपस्थाप्यते । तत्र—

८—चित्रलेखामुखेनोर्वशी पुरूरवसं प्रार्थयते—"मम तस्मिन् सुरारिसम्भवे दुर्नये महाराज एव शरणमासीत् साम्प्रतं साहं तव दर्शनसमुत्थेनायासिना बलवद्. बाध्यमाना मदनेन पुनरपि महाराजस्यानुकम्पनीया भवामि" इति । उत्तरे पुरूरवा —

"पर्युत्सुका कथयसि प्रियदर्शनां तामार्त्तिं न पश्यसि पुरूरवसस्तदर्थाम् ।
साधारणोऽयमुभयोः प्रणयः स्मरस्य तप्तेन तप्तमयसा घटनाय योग्यम् ।।३।१५।।

इत्येवमात्मनोऽपि प्रणयं प्रकाशयति । सोऽयं प्रणयः पूर्ववदेव साधारण्यान्यथानुपपत्त्या प्रार्थनारूप एवावसेयः । कल्पलताकारो डा० शास्त्री, संस्कृतांग्लकोषकार: श्रीमान् आप्टेमहोदयश्च प्रणयपदं प्रेममात्रपरमत्र प्रतिपादयतः । तत्र कविना कण्ठरवेणैवोदीरितं साधारण्यं तादृशोऽभ्यर्थनाप्रस्तावश्च प्रसादं न भजेते ।

अस्मिन्नुर्वशीशकुन्तलाप्रणयप्रस्तावे चित्रलेखाप्रियंवदे दूतीकार्यकरणात् स्फुटमेव प्रणयदूत्यौ । ततः—

९—इन्दुमतीस्वयंवरप्रस्तावे राज्ञां शृंगारचेष्टानां चित्रणे—

"सा प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालचेष्टा इव पादपानां शृंगारचेष्टा विविधा बभूवुः ।। रघु० ६।१२।।

इत्येवमागते प्रणयाग्रदूतीपदे घटकीभूतमपि प्रणयपदं प्रार्थनार्थकत्वमेव बिभृयात् । मनोरथपदेनाभिलापस्य प्रतिपादितचरत्वे प्रणयपदेनाभिलाषानन्तरीय-समागमप्रार्थनाया एव प्रतिपादनस्य स्वारसिकत्वात् । हेमाद्रिः मल्लिनाथश्चेति द्वौ व्याख्यातारौ प्रणयपदमत्रापि प्रेम-प्रार्थनोभयपरं प्रतिपादयतः, नन्दर्गीकरमहोदयश्च प्रेममात्रपरम् । शकुन्तलादिगत-संदर्भान्तर-पात्रयोजनापवादेन तु प्रणयपदस्य केवलप्रेमपरत्वं विहातुं न न विचिकित्सते धीः । अस्ति हि दूतीकर्म कामशास्त्रादिषु प्रणयप्रसंगे प्रथितम्, अस्ति च कालिदासस्यापि तत्र प्रायेण सर्वत्रावधानम् । स हि मालविकाग्निमित्रेऽपि बकुलावलिकां नायकदूतीत्वेनोपस्थापयति । तत्र ईर्ष्याकषायिता इरावती बकुलावलिकामुपालभते—"बकुलावलिके त्वया साधूपक्रान्तम्" [३।१४] इति रघुवंशेऽपि शृंगारनायकोऽग्निवर्णः प्रियजनस्य विप्रलम्भकातरं वचो दूतीमुखेन शृणोति [१९।१८] । स हि क्लृप्तपुष्पशयनान् लतागृहान् दूतिकृतमार्गदर्शनः सन् उपैति [१९।२३] । संगमाय गूढचारिणमग्निवर्णं चारभूताभिर्दूतीभिरुपलभ्य प्रमदाः कर्षन्ति [१९।३३] एवमादिषु स्थलेषु संवादप्रवृत्तस्य कवेरेकत्र विसंवादः सामान्यतः कल्पयितुं

न शक्यते । तेनात्र प्रणयपदं प्रेमपूर्णप्रार्थनापरं प्रेमयाचनातात्पर्यकमेव वा मन्तु युज्यते । एवमेव—

१०—रिचर्डपिशेलसंस्कृतस्य शाकुन्तलस्य तृतीयेऽङ्के मूलत्वेन, निर्णयसागरीयादिषु च संस्करणेषु पाठान्तरत्वेन दर्शिते—

"अयं स यस्मात् प्रणयावधीरणामशकनीयां करभोरु ! शंकसे ।

उपस्थितस्त्वां प्रणयोत्सुको जनो न रत्नमन्विष्यति मृग्यते हि तत् ॥१७॥

इत्यस्मिन्नपि पद्ये प्रणयपदद्वयमपि प्रार्थनापरं मन्तु युक्तम् । तत्रापि नायकयोः परस्परानुग्रहप्रार्थनायामवधीरणभयस्य प्रासंगिकत्वात् । तथाहि मदनलेखं कर्तुमुपदिष्टया शकुन्तलया "अवधीरणभीरु वेपते मे हृदयम्" इत्युक्त एव सन्निहितेन लताप्रच्छन्नेन च दुष्यन्तेन पद्यमिदमुच्यते । सन्निधानादेव च प्रार्थना, प्रच्छन्नत्वाच्च तदवधीरणा नायकपक्षेपि कल्पितु शक्येते । रत्नान्वेषणोपन्यासेनापि प्रार्थनारूप एवार्थः पोषं लभते । प्रेमार्थकत्वे हि प्रेम्णोऽन्वेषणमस्वाभाविकं भवति । ततश्च प्रेमिपरत्वमेव तत् पर्यवस्यति । प्रेमिणश्च रत्नौपम्यं न न संजाघटीति । "जातौ जातौ यदुत्कृष्टं तद् रत्नमभिधीयते" इत्यभियुक्तोक्त्या केवलस्योत्कृष्टत्वमात्रस्य रत्न-नायिका-सादृश्यप्रयोजकीभूतधर्मत्वमत्र संभवति । उत्कर्षश्चासौ

"शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु तदोद्यानलता वनलताभिः ॥ (१।१६)—

इत्यादिभि. पूर्वोपन्यासैरसकृदेव नायकमुखेनैव प्रतिपादितः ।

अभिलाषार्थकत्वेपि नास्ति गति. । अवधीरणासंगतिप्रसंगात् । अभिलाषस्यावधीरणं हि प्रकृतिविरुद्धम् । यत्र चैतदविरुद्धं तद्धि अभिलाषस्य प्रकटनमेव याचनारूपम । तदित्थं विडम्बनामात्रमेव प्रणयपदस्यात्र प्रार्थनयाचना-न्यतरेतरार्थपरत्वसाधनप्रयासः ।

११—अवधीरणप्रसंगो मालविकाग्निमित्रेऽपि लभ्यते । तत्र पंचमेऽङ्के नायको जयसेनामुखेन पुत्रविजयं देव्यै धारिण्यै निवेदयति । विदित-मालविका-राजदारिकाभावा च सा मालविकापरिग्रहरूपं प्रियनिवेदनपारितोषिकं नायकाय प्रयच्छन्ती कथयति-"इदमार्यपुत्र. प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु इति" राजानं त्व निरुत्तरं वीक्ष्य सा पुनः कथयति—"किमवधीरयति मामार्यपुत्रः" इति । इयं हि प्रणयावधीरणैव । उत्तरत्र प्रणयपदार्थस्य प्रस्तुतत्वात् । तथाहि मालविकां पत्रोर्णेनावगुण्ठ्य धारिणी पुनर्निवेदयति "इदानीमिमामार्यपुत्रः प्रतीच्छतु" इति । तत्र स्वमुखं वीक्षमाणस्य राज्ञः पक्षं प्रबलयन् विदूषको वक्ति 'अथवा

देव्यैव कृत-प्रणय-विशेषां दत्तदेवीशब्दां मालविकामत्रभवान् प्रतिग्रहीतुमर्हति'(५।१८ इति। अत्र "यतोहि देवी सविशेषमनुरुणद्धि तत उचित एव मालविकायाः परिग्रहः' इत्यभिप्रायकमेव विदूषकवचनं तिष्ठति। तेन चात्र प्रणयशब्दोऽनुरोधरूपप्रार्थनार्थक एव सिद्धयति।

१२– मेघदूते निर्विन्ध्यायाः कामविह्वलतां प्रतिपाद्य यक्षः कथयति-

"स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु" (१।२८) इति।

अत्र प्रणयशब्दोऽभिलाषप्रकटनपूर्वकं नायकानुग्रह-याचन-रूपमेव अर्थं तथैव प्रकटयति यथा शाकुन्तले विक्रमोर्वशीये च तन्नायिकयोर्दर्शितचरमनुग्रह-प्रार्थनम्।

१३– मालविकाग्निमित्रे मालविका छलिकमभिनयन्ती नायके स्वमनुरागं प्रकाशयति–

दुर्लभः प्रियो मे तस्मिन् भव हृदय निराशम्
अहो अपांगो मे परिस्फुरति किमपि वामः।
एष स चिरदृष्टः कथं पुनरुपनेतव्यो
नाथ मां पराधीनां त्वयि गणय सतृष्णाम्॥

एतस्याभिप्रायमवगच्छन् विदूषको वक्ति–

भो वयस्य चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपस्थापित
इवात्मा तत्रभवत्या। इति।

अत्र नायकः स्वां प्रतिक्रियामेव प्रकटयति–

जनमिममनुरक्तं विद्धि नाथेति गेये वचनमभिनयन्त्या स्वांगनिर्देशपूर्वम्।
प्रणयगतिमदृष्ट्वा धारिणीसन्निकर्षादहमिव सुकुमारप्रार्थनाव्याजमुक्तः॥
(२।५ मालवि०) इति।

अत्र नायिकायाः स्नेहप्रवृत्तौ धारिण्याः सन्निकर्षो बाधकः इति सा सुकुमारेण प्रार्थनाव्याजेनैवमुक्तवती इति स्वं प्रति नायके स्नेहप्रवृत्तिरूपां प्रणयगतिमदृष्ट्वा धारिणीसन्निकर्षात् स्पष्टं वक्तुमशक्नुवाना तथा व्याजेन प्रणयप्रार्थनां कृतवतीति वा वाक्यार्थः। अत्र काटयवेमः नायकनिष्ठां नायिकाविषयकस्नेहप्रवृत्तिं प्रणयगतिपदार्थतया नयति। तत्र प्रश्नः। नायकनिष्ठां स्नेहप्रवृत्तिं दृष्ट्वा नायिका नायके प्रणयप्रार्थनां कुर्वीत चेत् शकुन्तला का नु स्नेहप्रवृत्तिं दृष्ट्वा दुष्यन्ते प्रणयप्रार्थनां कृतवती उर्वशी वा पुरूरवसि। सर्वथा नास्ति नायिकाप्रणयप्रसरस्य नायके प्रणयगतिदर्शनेन सह समनियतत्वम्। यच्चुच्यते, कामयमानापि नायिका नायकनिष्ठां स्वविषयिणीं स्वकामनामदृष्ट्वा तत्र स्वकामनायाः प्रकाशं कथं नु कर्तुमुत्सहेत कथं न सा वैषम्यमुत्प्रेक्ष्य

विचिकित्सेतेति, तर्हीदमप्युच्येत यत् नायिकाविषयको नायककामो नायिकया कुतो नु विदित इति । न कुतोऽपीति चेन् अकामत्वज्ञानाभाव सकामत्वज्ञानमिवैव प्रार्थने हेतुमूरीकुर्या । सकामत्वज्ञाने पौनः पौनरुक्त्य प्रसज्यते प्रार्थनायाम् । अकामत्वज्ञानाभावे चोपपद्यतापि कामाशया प्रार्थनाव्यापार । तदत्र प्रणयग-तिपदेन नायिकाश्रिता नायकविषयिणी प्रणयगतिरेवावसेया तात्पर्यविषयतया । सा चात्र प्रार्थनावसररूपा सभवति ।

किं च अग्निमित्राय प्रतिश्रुतभगिनीप्रदानेन भ्रात्रा माधवसेनेन सह विदिशा प्रस्थिता मालविका अविदिताग्निमित्रप्रणयवृत्तान्तैव भवेदिति को नु चिन्तयेत् । अग्निमित्रे विदर्भराजभगिनीत्वेन मालविकाया परिचयस्याभावाद धारिणी-सन्निकर्षो बाधा जनयति । सति च तत्त्वेन ज्ञाने पचमेऽङ्के स्वय धारिण्येव प्रागुक्तक्रमेण मालविकापरिग्रहाय नायकं प्रार्थयते । छलिकप्रयोगसमये च धारिणी संनिकृष्टैवासीदिति मालविकया स्वनिवेदन स्पष्टतया कर्तुं नाशक्यत, तत एव सा व्याजमाश्रितवती । व्याजोपि स वैदग्ध्यपूर्ण आसीदिति सुकुमार इत्युक्त. । इत्थमिह प्रणयगति मालविकाकर्तृकमात्मनिवेदनमेव ।

१४—विदूषक-बकुलावलिकयोरुपायरचनया समुद्रगृहके प्राप्तसमागमो नायको मालविका साध्वस-सकुचिता वीक्ष्य कथयति—

"विसृज सुन्दरि ! सगमसाध्वसं मयि चिरात् प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारता त्वमतिमुक्तलताचरित मयि ।।४।१३।।

अत्र चिरात् प्रभृति प्रणयोन्मुखत्वं किमिति प्रश्नः । तत्र सस्कृतकोषकार आप्टेमहोदयः प्रणय विवाहरूप मनुते । वयं तु प्रार्थनारूपमेव तन्मन्तु विवशाः । प्रार्थनाया एव प्रसगसमर्थितत्वात् । अस्ति हि नायकनिष्ठा नायिकाविषयिणी प्रार्थना कविनैव अस्मिन्नेव प्रकरण उपनिबद्धा । नायिकामनुनयता तेनोच्यते—

"अनुगृह्यतां चिरानुरक्तोयं जन(४।१५) इति ।

१५—अस्मिन्नेवाक इरावती सम दोलाधिरोहणाय नायकमामन्त्रयति । सेयमामन्त्रणा प्रार्थनापदेनैव कविना व्याहृतेति स्पष्टमेव प्रागुक्तादुद्धरणात् । दोलागृहं प्रयान्ती सा दासी निपुणिकां पृच्छति "कुत इदानीमवगन्तव्यं दोलागृहं गतो भर्ता न वेति" "(३।१३) इति । तत्र निपुणिकयोच्यते-भट्टिन्या अखण्डितात् प्रणयात्-इति । अत्र प्रणयशब्द प्रसंगानुसार प्रार्थनार्थक एव । भर्त्रा भट्टिन्या अस्या काचनापि प्रार्थना कदापि न खण्डिता, ततो दोलाधिरोहण-प्रार्थनामप्यसौ न ह्येव खण्डयेदिति प्रत्ययेन निपुणिकायास्तथाविधमुत्तरम् ।

१६—अग्निमित्रेण च उचितः प्रणयो वरं विहन्तुमिति पूर्वविचारित-

जायत एवेरावत्या दोलारोहणप्रणयखण्डिन यदा चेयं समुद्रगृहके मालविकासंगतम् अग्निमित्र पश्यति तदा बकुलावलिका मालविका च सोपालम्भं वक्ति–

बकुलावलिके । त्वया साधूपक्रान्तम्

मालविके । त्व तावत् सफलाभ्यर्थनं कुरु आर्यपुत्रम् । इति ।

अत्र मालविका बकुलावलिका चेति द्वे अपि कथयत —

"प्रसीदतु भटिट्नी के आवा भर्तु प्रणयपरिग्रहस्ये" ति ।

अत्र प्रणयपरिग्रहपदे काटयवेमभूपो सोनी टानी च 'अफेक्शन' इति भावबन्धपरत्वप्रत्यायकः । सीतारामचतुर्वेदाश्च भावमात्रानुवादिन प्रणयपदार्थं न स्पृशन्ति वयं तु प्रसगानुसारं प्रार्थनापरमेव प्रणयपदं प्रतिपद्यामहे । मालविका-बकुलावलिकाभ्यामत्रेत्थमिव वक्तुमिष्यते यद् भटिट्न्या प्रतीपमुच्यते भतु अग्निमित्रस्यास्मासु दासजनेऽभ्यर्थनेति, दासा एव हि भर्तृषु प्रार्थनारूपं प्रणयं कर्तुमुचिताः न तु दासेषु भर्तार इति । अत एवानौचित्यभिया ते ततो झटित्यपसृते ।

अयं हि प्रणय प्रार्थनारूप । अस्य भग: प्रियजनेषु महानपराधः । पुरूरवास्ततो विमुखोऽस्ति । गन्धमादने सहसा प्रणष्टां प्रियामुद्दिश्य स कथयति—

१७—"त्वयि निबद्धरते प्रियवादिन प्रणयभगपराङ्मुखचेतस ।

कमपराधलवं मम पश्यसि त्यजसि मानिनि ! दासजन यत. ॥४।५५॥

अत्र "उर्वशीप्सित मया कदापि नाखण्डि, त्यजति च सा माम्" विभावनाविधया नायकेन स्थितिवैषम्यमुन्मील्यते । अत्र प्रार्थनाया कश्चन प्रस्तावो नास्तीति प्रणय शब्दादभिलाषोपि प्रतिपाद्यतया ग्रहीतु शक्यते, तथापि प्रार्थनार्थोऽत्र न खण्ड्यते । प्रकटितो ह्यभिलाष पूर्तिमर्हति नाप्रकटितः । प्रकटिताच तस्मात् प्रार्थनैव याचनारूपा पर्यायोक्तभंग्या न स प्रतिफलति । कुट्टनीमतेऽपि समीपमुपेत सुन्दरसेनं स्पृहयन्त्यपि हारलता स्वाभिप्रायं कण्ठपथं न निनीषति । तत्र प्रणयभगभीतिरेव तन्त्रम् । तथा चोच्यते—

पार्श्वगतेऽपि प्रेयसि कामशरासारताड्यमानापि ।

न शशाक साभिधातु चित्तगतं प्रणयभंगतो भीता ॥ (२७४–आर्या)

तत्र हि प्रणयभंगो नियमत प्रार्थनाभग एव । इयं हि शिष्टानां प्रकृतिरेव । कालिदासस्य हिमाचलोऽपि अयाचितारं भगवन्तं सुतां न ग्राहयति । तत्र हेतुः अयमेवैकः प्रार्थनाभंगः । यथोच्यते–

"अयाचितार नहि देवदेवमद्रिः सुतां ग्राहयितु शशाक ।

अभ्यर्थनाभगभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥[१।५२-कुमार०]

इति श्रीहर्षेणाप्ययमर्थो नितान्तं रूक्षतया नैषधीयचरिते एवमिव प्रस्तूयते—

"स्मरोपतप्तोऽपि भृश न स प्रभुर्विदर्भराज तनयामयाचत ।
त्यजन्त्यसून् शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम् ॥[१।६०]।

१८-कुमारसंभवे भगवान् शिवो भगवत्या पार्वत्या मेखलायां हस्तं व्यापारयति । सोऽयं हस्त. कविना प्रणयलोल इत्युच्यते—

सस्वजे स्तनमुरोनिपीडनं प्राथित मुखमनेन नाहरत् ।
मेखलाप्रणयलोलता गत हस्तमस्य शिथिल रुरोध सा ॥ ]८।१४]

—अत्र मल्लिनाथ· प्रणयपद परिचयार्थकं मनुते, एतल्लेखारम्भोद्धृतेन च यादवप्रकाशवचनेनासावर्थममु प्रमाणयत्यपि । सीतारामकविश्चात्र पदस्यास्य स्नेहपरत्व मनुते । वय तु याचनारूपप्रार्थनार्थकत्वमेवास्य पदस्य प्रतीमः । शिवो हि मेखलादित्सया हस्त प्रवर्त्तयति । स च मेखलामुपसर्पति । सोऽयमस्य लोलीभावः । एतेनात्र मेखलादानेच्छया प्रवृत्तिः, तादृशेच्छैव वात्र प्रणयपदार्थ. । स च स्पष्टमेव याचनारूपः प्रार्थनारूपो वा । पूर्वार्धे चुम्बनप्रार्थनायाः प्रार्थनापदेनैव "प्रार्थितम्" इति प्रतिपादितत्वात् कथितपदत्वपरिहारायोत्तरार्धे कविः प्रार्थनार्थकमेव पदान्तर प्रणयरूपं प्रयुक्ते । परिचये स्नेहे वा लोलता वा समुचिता । अस्ति चात्र परिचय· पौनरुक्त्यावह· । तस्य

ज्ञातमन्मथरसा शनैः शनैः सा मुमोच रतिदु खशीलताम्—

"इत्येवम् अव्यवहितपूर्वेणैव पद्येन प्रतिपादितत्वात् । नास्ति चात्रास्य भूयोऽपि प्रतिपादने कश्चनार्थ किं च वस्त्रापहारः, नीवीस्रंसनम्, मेखलाविमोटन चेति सर्वमेव सुरतप्रयोगस्य पूर्वरंगः । सुरतार्थी च मेखलायाः परिचयमात्रमाकांक्षति प्रार्थना वा काचिदभ्यन्तरीकृत्य तथाविधव्यतिकरे व्यापिपर्त्तीति सुमानुषै स्वयमुन्नेतु शक्यते । न च "हस्तस्य मेखलाया प्रणयः प्रार्थनारूपोऽपि प्रीतिप्रकरणे विचार्यः, हस्तमेखलयोरचेतनतया वस्तुरूपत्वात् तन्निष्ठस्य प्रेम्ण प्रीत्यैकरूपत्वात् । तत् कथमत्ररते. प्रकरणे तद्विचार' इति चेत्, सत्यम्, हस्तमेखलयो. स्त्रीपुलिंगितया समासोक्तिविधया नायकत्वप्रतीते हस्तस्यावयवत्वात् तदवयविना शिवेन सह तस्य शास्त्रसिद्धादभेदाद् वा रतित्वापत्तेरेतादृशप्रणयस्यात्रापि विचारे नास्ति क्षतिः ।

१९–रघुवंशे मृगयाविहारिणो दशरथस्य संमुखे मृगयूथमाविर्भवति । कविस्तदेवं वर्णयति—

"तस्य स्तनप्रणयिभिर्मुहुरेणशावैर्व्याहन्यमानहरिणीगमनं पुरस्तात् ।
आविर्बभूव कुशगर्भमुखं मृगाणां यूथं तदग्रसरगर्वितकृष्णशारम् ॥९।५५॥

अत्र मृगयूथस्य सर्वथा स्थिरत्वाभाव आविर्भावक्रियापदार्थेनागूर्यते । तेनात्र शावानां स्तनप्रणयित्व स्तनार्थित्वाभिन्नमेव तिष्ठति । किंचिच्चलन्तीना मृगीणा स्तनेषु शावमुखव्यापृतिरेवात्र प्रणयपदाद् गम्यते ।

२०—रघोः कुले प्राणानपि प्रार्थिनामर्थिना न व्याहन्यते यथोच्यते—

अप्यसुप्रणयिना रघोः कुले न व्यहन्यत कदाचिदर्थिता । [११।२]

अत्र 'अर्थिता न व्यहन्यते'–इति वचनात् प्रणयित्वं याचकत्वमेव । अस्ति चात्र कौशिको मुनिवृषा रामार्थ दशरथ प्रति याचिता । यदुक्तम्–

'कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचितस्तेजसा हि न वय समीक्ष्यते ।। ][११।१]

२१—सर्वदमने स्वपुत्रत्वमविद्वान् दुष्यन्त पुत्रिणा धन्यतामेवमुदीरयति–

'अङ्काश्रय–प्रणयिनस्तनयान् वहन्तो
धन्यास्तदंगरजसा मलिनीभवन्ति ।।' [शाकु० ७।१७

अत्र प्रायेण सर्वेपि पुत्रिणो बालानामकाश्रयार्थितामनुभवन्तीति लोकप्रमाण-सिद्धमेवात्र प्रणयिपदस्यार्थिपरत्व याचनारूपप्रार्थनापरत्वं च तद्विशेषणस्य प्रणय-पदार्थस्य ।

२२—मालविकाग्निमित्रे नायक प्रतिनायिकाभूतामिरावतीं 'प्रसीदतु भवती'–त्येवमर्थयते । सा चाकृत्वैव प्रसादं परावर्त्तते । तत्र नायकेनोच्यते—

'सुन्दरि ! न शोभते प्रणयिजने निरपेक्षता'– [३।२०] इति ।

अत्र प्रार्थनार्थस्य प्रसंगसिद्धत्वात् प्रणयस्य तत्परत्वमेव प्रतिपद्यामहे ।

२३ - विक्रमोर्वशीये पुरूरवा हंस प्रति कथयति—

पश्चात् सरः प्रतिगमिष्यसि मानसं त्व
पाथेयमुत्सृज बिसं ग्रहणाय भूयः ।
मा तावदुद्धर शुचो दयितप्रवृत्त्या
स्वार्थात् सतां गुरुतरा प्रणयिक्रियैव ।। [४।३१]

अत्र प्रार्थनार्थस्य पूर्ववर्तिनि चरणत्रये उपनिबद्धत्वात् प्रणयिपद प्रार्थितात्पर्यकमेव मन्तुमुचितम् ।

२४—पुरूरवा लताया 'परिष्वंगप्रणयी' [४।६७] त्युच्यते । अत्रालिंगनस्य प्रार्थनैवालिंगनस्य प्रणयः । आलिंगन-प्रसंगेषु सर्वत्रैव कालिदाससाहित्ये प्रार्थनाया एवालिंगनविषयिण्याः प्रतिपादितत्वात् ।

२५—कुमारसंभवे पार्वती भगवते शंकराय पुष्करबीजमालामुपच्छन्दयति । शिवस्तां प्रतिग्रहीतुमुपक्रमते । तदेव द्वारीकृत्य कुसुमायुध शर सधत्ते । यदुच्यते–

प्रतिग्रहीतु प्रणयिप्रियत्वात् त्रिलोचनस्तामुपचक्रमे च ।

समोहन नाम च पुष्पधन्वा धनुष्यमोघ समधत्त बाणम् ।। [३।६६] ।

अत्र प्रणयिप्रियत्व प्रार्थिप्रियत्वमेव । तस्यैव हि पुष्करबीजमालाप्रतिग्रहप्रार्थनोपस्थापकादानुपदिकात्–

अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।

विशोषिता भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ।। [३।६५] ।

–इत्यस्मात् पद्यात् समर्थितत्वात् । न चात्रोपायनमात्र कृतपदम्, न त्वर्थित्वम्, उपायनस्य समर्पणरूपत्वात् इति वाच्यम्, सम्प्रदानकारक-पदार्थभूतेन जनेन ग्रहीतुमस्वीकारे क्रियमाणे सम्प्रदातुरुपायनस्यार्थिताया लोकप्रमाणसिद्धत्वात् । अस्ति चात्र पार्वती शिवार्थिनी । ततोस्या उपचारस्यापि तदन्त.-पातित्वमेव परम्परया सिद्धयति, न ताटस्थ्यम् । मल्लिनाथोपि प्रणयिप्रिय–पदम् अर्थिपरमेव प्रतिपादयति ।

२६–कुमारस्यैवाष्टमे सर्गे पार्वती-वदन-रस-लम्पट. शिवो दर्शनार्थिनामदृश्यता व्रजति—

स प्रियामुखरसं दिवानिश हर्षवृद्धिजननं सिषेविषुः ।

दर्शन-प्रणयिनामदृश्यतामाजगाम विजयानिवेदनात् ।। [८।६०] ।

–अत्र सीतारामकवि प्रणयस्याभिलाषरूपत्वं मनुते, मल्लिनाथस्तु पर्यायं न ददाति । तत्र विजयानिवेदनपदार्थेन दर्शनार्थिनां शिवसमीपगमनस्य सिद्धेः प्रार्थनार्थं परित्यक्तुं न शक्यते । दर्शनार्थी हि पार्श्वमुपैति न केवलं दर्शनाभिलाषी । अर्थिता ह्यभिलाषपूर्विकेत्यन्यदेतत् ।

२७–विक्रमोर्वशीये पुरूरवस प्रधानमहिष्योच्यते—

एषाहं देवतामिथुन रोहिणीमृगलाछनं साक्षीकृत्य आर्यपुत्रम्

अनुप्रसादयामि अद्यप्रभृति या स्त्रियमार्यपुत्र प्रार्थयते, या

चार्यपुत्रस्य समागमप्रणयिनी, तया मया प्रीतिबन्धेन वर्त्तितव्यम् इति ।"

[३।१५]

–अत्र प्रार्थना-प्रणयशब्दाभ्यामेक एव प्रार्थनारूपोऽर्थ प्रतिपिपादयिषितः । अभिलाषमात्रवतीभि सह देवीकलहस्यायोगात् कलहनिवारणार्थमेवोक्तस्यास्य शपथवाक्यार्थस्य प्रणयिनि-पदार्थे समागमयाचनार्थत्व विनानुपपत्ते. ।

२८–आषाढस्य मेघं प्रथमदिवसे सानुपरिरंभसरम्भिणं वीक्ष्य प्रियाविप्रयुक्तो यक्ष आहितौत्सुक्यकौतुको जायते । तत्र हेतूपन्यासं रचयता सुकविनोच्यते—

मेघालोके भवति सुखिनोप्यन्यथावृत्ति चेत.
कण्ठाश्लेषप्रणयिनि जने कि पुनर्दूरसंस्थे ॥ [१।३ मेघ०]

–अत्र मल्लिनाथ. प्रणयिपदार्थं प्रार्थिरूपमेव मनुते। सर्वदा प्रिया कण्ठाश्लेषं प्रार्थयमानस्यैव हि विरहकालिकेन मेघालोकाद्युद्दीपनव्यूहेनोन्मत्ततायाः संभवाद्, यक्षस्य चोन्मत्ततायाः प्रसगोपात्तत्वाद् युक्त च तत् ।

२६–मेघदूत एव वक्तव्यमुपसंहरन् यक्षो ब्रवीति—

कच्चित् सौम्य व्यवसितमिद बन्धुकृत्य त्वया मे
प्रत्यादेशान्न खलु भवतो धीरता कल्पयामि ।
निश्शब्दोपि प्रदिशसि जल याचितश्चातकेभ्यः
प्रत्युक्त हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥

–अत्रार्थान्तिरन्यास-वाक्ये प्रणयिपदं प्रार्थनावदर्थकमेव, पूर्वचरणत्रये प्रार्थनाया एव स्पष्टमुपनिबद्धत्वात् । बन्धुकृत्यं हि प्रियान्तिके संदेशहरणमेव । तद्व्यवसायश्च तद्विषयकप्रार्थनास्वीकार । जलप्रदानेन चातक-याचना-पूरणस्य च तृतीयचरणात् स्फुट एवावगम । इत्थ याचनायाः प्रास्ताविकत्वेन प्रणयित्वं प्रीतिपूर्णप्रार्थनाकृत्त्वमेवावसीयेत । अस्ति च यक्षो याचक, "गुह्यकस्तं ययाचे, याच्ञा मोघा" इत्यादिभिर्वचनै काव्यारम्भ एव तादृशार्थस्योपनिबद्धत्वात् ।

त इमे प्रणयशब्दस्य कालिदाससाहित्ये लब्धाः प्रार्थनारूपयाचनार्थकाः प्रयोगाः । एकोनत्रिंशता एते संकलनेन पूर्ववर्त्तिनः सप्तविंशतिर्भेदाः षट्पंचाशद भवन्ति ।

## ४–परिचयार्थकः प्रयोगः

निम्नोद्धृते पद्ये प्रणयशब्दस्य परिचयार्थकत्वमपि दृश्यते—

वक्र. पन्था यदपि भवत प्रस्थितस्योत्तराशा
सौधोत्सग-प्रणय-विमुखो मास्म भूरुज्जयिन्याः ॥ [१।२७-मेघदूते।] ।

–अत्र मल्लिनाथ. प्रणयशब्दस्य परिचयपरत्वमेव मन्यते। यादवप्रकाशस्य च पूर्वोद्धृतं वचनमत्र प्रमाणत्वेनोद्धरति। भरतमल्लिको यद्यप्यनुरागार्थकत्वमस्य प्रतिपद्यते तथापि पथो वक्रत्वप्रतिपादनेन,

"विद्युद्दामस्फुरितचकितैस्तत्र पौरांगनाना
लोलापांगैर्यदि न रमसे लोचनैर्वञ्चितोसि-"इत्येवमुत्तरार्धवाक्यार्थेन च वञ्चनारूप-लाभाभावस्य मेघे प्रत्यायनात् मेघस्य तत्पूर्वगमनकत्वं, तेन चापरिचितत्व, ततश्च पूर्वाननुरागत्वमुज्जयिन्या व्यज्यते । अपरिचितस्य च परिचयलाभो विधातुमुचितो, न त्वनुरागलाभः । अतोत्र प्रणयशब्दस्य परिचयमेव

प्रतिपिपादयिषित मन्यामहे । सोय सप्तपंचाश प्रणयपदप्रयोग. । इमे हि सर्वेऽपि प्रयोगा. कालिदाससाहित्ये मूलगतत्वेन लभ्यन्ते तेषु तेषु प्रचलितेषु, अस्माभिश्च "कालिदासशब्दानुक्रम"–कोषे मूलत्वेनाश्रितेषु सस्करणेषु ।

साम्प्रत पाठान्तरगतेभ्योपि प्रणयशब्देभ्यो यस्य प्रयोगो महत्त्वपूर्णस्त-मप्येकं शब्दमिह सक्षिप्य मीमांसामहे । तथा हि–

धूमज्योतिःसलिलमरुता सन्निपात· क्व मेघः
सदेशार्थाः क्व पटुकरणै प्राणिभि· प्रापणीया. ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्त ययाचे
कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ [१।५-मेघ]।-

–अस्मिन् मेघदूतस्य प्रसिद्धतमे पद्ये 'प्रकृति-कृपण-"शब्दस्य स्थाने "प्रणय-कृपण-"शब्द. पाठान्तरतया लभ्यते । यथा चैतत् तत् साहित्याकादमीतः डा० सुशीलकुमारडेमहोदयै समीक्ष्य सपाद्य प्रकाशिते मेघदूतसस्करणे प्रदर्शितै-रुपर्युद्धृतपद्यपाठान्तरै स्पष्टम् । वय तु प्रणयशब्दस्योद्धृतपूर्वेषु २६–स्थलेषु याचनार्थकत्वमनुभूय ' प्रणय-"शब्दस्यैवात्र मूलत्व प्रतिपद्यामहे । "धूमज्योति"-रित्यादिना चरणत्रयेण, "जातं वशे"-इत्यादिन समनन्तरस्य पद्यस्य––

"तेनार्थित्व त्वयि विधिवशाद् दूरबन्धुर्गतोह
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा-

इत्यनेनापरार्धेन, एतत्समनन्तरस्य च-

"संतप्ताना त्वमसि शरण तत् पयोद प्रियायाः
सदेशं मे हर धनपतिक्रोधविश्लेषितस्य ॥

इत्यस्य पद्यस्य पूर्वार्द्धेन याचनार्थस्यैव कवेः केन्द्रभूतभावत्वमनुशील्य को नु सहृदयः प्रणयकृपणत्व विहाय सदर्भसंवादिनः "प्रकृतिकृपणत्वस्य" मूलत्वमभिमन्येत । अर्थान्तरयोजनापि पक्षमिम सबलयति । अर्थान्तरन्यासे हि पूर्ववाक्यार्थं उत्तर-वाक्यार्थेन समर्थ्यते । क्रियते च तत्र सामान्यविशेषात्मना समर्थ्यसमर्थकयोरुपनि-बन्धः । अस्ति चायमभियुक्तसंमतः पन्था यदत्र समर्थ्यत्वं प्रधानस्यैव रोच-तेतरा, नाप्रधानस्य । भवति च प्रधानत्वं "धूमे-"तिपद्यार्थे "ययाच-"इति क्रियापदप्रतिपादितस्यैवार्थस्य । ततश्चतुर्थचरणगतेन अर्थान्तरेण याचनार्थसमर्थ-नानुरूपपदार्थयोजना·केनैव नियमेन भवितव्यम् । भवति च तत् "प्रणय-"घटि-तत्वे सर्वतोभावेन तथाविधम् ।

ननु प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधवादिनां मते तृतीयचरणगत-गुह्यक-पदवाच्यस्य यक्षस्य वात्र प्रधानत्वम् , तत्रापि च विशेषणीभूतस्य "इति-"शब्देन

व्यवच्छिन्न पूर्वार्द्धप्रतिपादितमर्थं विपयीकृत्योपनिबध्यमानस्य परिगणनाभावस्य "अपरिगणयन्-,"इत्यनेन पदेन प्रतिपादितचरस्य। तादृश परिगणनाभावश्च कामार्तस्य "प्रकृति-"मेवाश्रयति, न "प्रणय-"रूप याचनम्। तत "प्रणय-"पाठपक्ष एव सदोष: "इति चेत्, मैवम्, कामार्तप्रकृते कृतेऽर्थान्तरन्यासप्रयासस्यानावश्यकत्वात्। कथमिति चेत् 'औत्सुक्य'—पदार्थद्वारैव तस्या समर्थितत्वात्। न हि समर्थितपूर्वमपि पदार्थजात भूयोप्यर्थान्तरन्यासद्वारा युगयुगायमानक्षणलेशो यक्ष समर्थयितु क्रमेत, क्रमेत च त तथाप्रवृत्तमनुमोदितु कालिदासदृशो वश्यवाक् सुकविः।

ननु चेतनाचेतनप्रकृतिरत्र प्रकृतिपदेनाभिप्रेयते, न यक्षप्रकृतिः, 'चेतनाचेतनेषु प्रकृतिकृपणा' इत्येवमुक्तौ सप्तम्यन्तपदार्थस्यासगत्यापत्ते। सा चेयं प्रकृतिरचेतनेषु यादृशी, सा अचेतनया प्रकृते पेघे 'धूम-ज्योति सलिलमरुता सन्निपात' इत्येव प्रतिपादिता, चेतनेषु च यादृशी, सा चेतनतया प्रकृते सदेशहारके जने 'पटुकरणप्राणित्वेन'। तदयमर्थोत्र कवेरभिप्रेतो यत् कामार्तो जन. चेतनस्य प्रकृतिं न वेत्ति. नापि चाचेतनस्येति। नास्ति चेयं वस्तुप्रकृतिरौत्सुक्यार्थस्य समर्थनीयेति नास्ति दोष इति चेत्, साधो! अथापि नास्ति दोषमोक्ष। कथमिति चेत् 'प्रकृति'-पदार्थस्य वैयर्थ्यापत्ते 'कामार्ता हि चेतनाचेतनेषु कृपणा' इत्यस्मादेव वाक्यार्थाद् विवक्षितार्थलाभात्। किं च इत्यौत्सुक्यान्न परिगणयामास यक्षो वराकः।

कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु। —इत्येवविधयापि पद्ययोजनया भवदभिमतसमर्थ्यसमर्थकभावलाभादापतित एव 'याचनार्थस्य' अजागलस्तनत्वप्रसंगः। 'प्रणयकृपण'-शब्दस्य मूलत्वे तु नास्ति नामैष उपप्लवप्रसंग। अस्ति चायमेव पाठः प्राचीनाना मूलत्वेनाभिमत। तथाहि वल्लभदेव, स्थिरदेवः, दक्षिणावर्तनाथः, पूर्णसरस्वती, परमेश्वरश्चेति पंच टीकाकारा 'प्रणय'-पदमेव मूलमभिमन्यन्ते। मेघदूतस्य सिंहलद्वीपीये आग्लै पैराफ्जनाम्ना व्यपदिश्यमाने पदकृत्येऽपि प्रणयपदमेव मूलत्वेनाभिमत लभ्यते। तदित्थं वल्लभदेवस्य कश्मीरतो दक्षिणावर्तनाथस्य दक्षिणां यावत्, ततोपि च पर सुदूरा दक्षिणोदधिपारस्थिता श्रीलङ्कां यावत् प्रसिद्धं, प्रणयपदघटितस्यैव पाठस्य मूलत्वं तर्कशुद्धिं भजते। प्रकृतिपदस्योपयोगे तु कारणं 'जातं वशे भुवनविदिते'-इत्यस्मिन् समनन्तरीये पद्ये सविचार्थकस्य प्रकृतिपदस्य प्रयोगः स्यात्। लिपिकेन तत्संस्कारादेव अस्मिन्नपि पद्ये प्रणयस्थाने प्रकृतिपदं लिखितं स्यात्। अन्यच्च कारणं प्रणयपदार्थस्य ज्ञानाभावः संभाव्यते। कविना हि कथितपदत्वदोषव्यावृत्तये तृतीयचरणसमागतस्य याचनापदार्थस्यैव चतुर्थचरणे पदभेदेनोपनिबन्ध चिकीर्षता प्रणय-

शब्दः प्रायोजि । अथ चात्र कवेरभिप्रायो यत् यो हि कामार्त्तो भवति स चेतनमिवाचेतनमपि याचितुं यतते । भाव एष मेघदूत इव विक्रमोर्वशीयेऽपि प्रपंचितो दृश्यते । विक्रमोर्वशीयस्य समग्र एव चतुर्थोऽङ्को भावस्यास्य चित्रणाय फलकभूत इव । तत्र पुरूरवा भ्रमर, हस, कोकिला, नदी चेति सर्वानपि चेतनाचेतनान् भावान् प्रियाप्रवृत्तिं याचते । यथा चैतत् तत् पूर्वमुपस्थापितेन सदर्भेण न न स्पष्टम् । यथा च पुरूरवा लताया परिष्वगप्रणयी जायते, तथैव रघुवंशे भगवान् रामोऽपि तटाशोकलतां प्रियाबुद्धया परिरिप्सति—

इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तबकाभिनम्राम् ।
त्वत्प्राप्तिबुद्धया परिरब्धुकाम. सौमित्रिणा साश्रुरह निषिद्ध.।। [१३।३२ रघु]

तदत्र याचनार्थक प्रणयशब्द एव प्रकृतिशब्दस्य स्थाने मूलत्वेनाभिषेच्यः सिद्धयति ।

भवभूते. "प्रेमार्द्रा प्रणयस्पृश" [मालतीमाधवे–५।७] इत्यत्र पद्ये प्रेमप्रणययोर्भेदविवक्षा त्रिपुरारिरेवं विश्लेषयति —

"परस्पराश्रयधनं निरूढ भावबन्धनम् ।
यदेकायत्ततोपाधि तत् प्रेमेति निगद्यते ।।
उपचारैर्मिथो यूनोर्यद् बाह्याभ्यन्तराभिधै. ।
प्रेम नीतं प्रकर्षं चेत् स एष प्रणय स्मृत ।।

कालिदासप्रयोगाणामनुशीलनेन वयमेतदनुभवामो यत् प्रणयपदेन कालिदासोऽपि प्रकर्षमधिरूढं प्रेमैव प्रायेणाभिप्रैति । सोयऽमर्थः "देव्या दत्तो महाराज", अतोऽस्य प्रणयवती शरीरं संगतास्मी—"ति विक्रमोर्वशीयस्य विचारितपूर्वेण संदर्भेणाधिकं स्पष्टतामचति । प्रकर्षाधिरूढौ च रत्यादिभि. सह संचारिणां चित्तासगादिषु कामदशास्वागमापायिनां संयोगोऽपि परामर्शनीय । तत् सर्वमपि स्वातन्त्र्येणैवानुसन्धातु शक्यते ।

सर्वथा कालिदास प्रणयपदं प्रीतिरतियाचनापरिचयान्यतमार्थकत्वेन प्रयुंक्ते । तत्र प्रेमतत्त्वमेवास्य मुख्यो विषयः ।[1]

---

1 निबन्धोऽयमुज्जयिन्यां कालिदास जयन्ती–विद्वद्गोष्ठ्यां (१६६६) पठितः ।

# यायावरविप्रो राजशेखरः

भास्कराचार्यत्रिपाठी

कविराजोऽयं काव्यमीमांसाया चतुस्त्रिंशद्वारं अन्यत्र च रूपकेष्वात्मानं यायावरं यायावरीयं वा समाम्नाति । पश्चाद्वर्त्तिनि साहित्येऽपि अमुनैव उपाधिनाऽयं भूयसा सम्बोधित[1] । प्राचीनस्मृत्यनुसारत शालीनयायावरौ गृहस्थविप्राणा द्वौ भेदौ स्त ।[2] आप्टेमहोदयेन एतदपि सुष्ठु निध्यातं यद्राजशेखरो महेन्द्रपालराजस्य गुरुरुपाध्यायश्च तसिता तस्यैव राज्ञो मन्त्री च बभूवतुः । प्राचीनकाले ह्यमूनि ब्राह्मणास्पदानि पदान्यासन् । सार्धमेव—

बभूव वल्मीकभव. पुरा कविस्तत प्रपेदे भुवि भर्तृमेण्ठताम्
स्थितः पुनर्यो भवभूतिरेखया स वर्त्तते सम्प्रति राजशेखरः ॥
(बालरामायणम् १।१६; बालभारतम् १।१३)

इत्यनुसारतो भवभूतिप्रभृतिविप्राणामवतारभूतो राजशेखरोऽपि विप्र एव स्यात् । कर्पूरमञ्जर्यामवन्तिसुन्दरीनाम्नी कवेः पत्नी 'चाहुआणकुलमौलिमालिआ' कथिता । चौहानवंशश्च प्रख्यातराजपूतक्षत्रियाणाम् आसीत् । अथात्र आप्टेस्टेनकोनोमहोदयाभ्यां राजशेखरस्य कृतिष्वारम्भिकशिवपरकपद्यैः तस्य शैवत्वमनुमित[3] कथितञ्च 'यच्छैवो जातिच्युतिं विनापि राजन्यकुमारी परिणयेत् ।[4]

डा० हुल्त्ज. अवन्तिसुन्दर्या जात्यनुरोधतः क्षत्रियमेन मनुते—

'महेन्द्रपालस्य सकलकलानिलयविशेषणेन स्पष्ट भवति यद्राजशेखरस्तस्य नाध्यात्मिकगुरुः अपितु काव्यनाट्यप्रभृतिलोककलाध्यापकोऽभूत्, एतच्च क्षेत्र क्षत्रिया-

---

1 धनपालकृता तिलकमञ्जरी । ३३, इत्यादि ।

2 History of Dharma śastra, Vol. II, P. 641–42 and footnotes etc. द्रष्टव्या - विद्धशालभञ्जिका पृ० ७ । भास्कर - रामचन्द्र • आप्टे द्वारा सम्पादित–पूना १८८६

3 कर्पूरमञ्जरी–स्टेनकोनो, पृ० १८०

4 कर्पूरमञ्जरी–डा० मनोमोहनघोषः । [प्रस्तावना पृ० ६४]

णामपि न निषिद्धमस्ति। महेन्द्रपालो राजशेखरकविं पश्चात्किञ्चनयोग्यताप्त्यै उपाध्यायं व्यधात्पीत्। कर्पूरमञ्जर्यां नवमपद्यत प्रमाण्यते यदय बालकविकविराजोपाध्यायपदेषु क्रमश नियुक्तोऽभूत्। क्रमश्चायम् उपाध्यायशब्दं आध्यात्मिकगुरुतार्थतो दूरीकरोति।'[1]

क्षत्रियस्य गुरुत्वमन्त्रित्वे धर्मसूत्राविरुद्ध इति डा० मनोमोहनघोषः कवेः क्षत्रियत्वमाशङ्कते। एष हि कोनोमतं निकृन्तन कथितवान्—'यदि राजशेखरो ब्राह्मणोऽभूत्, तदापि विवाहोऽसौ न शैवरीत्या अपि तु तान्त्रिकविधिना अनुलोमविधिना वा निष्पन्न स्यात्।[2] कीथप्रभृतयोऽनेक इतिहासकृतः पर्याप्तविवेकं विनैव क्षत्रियमेनमाचक्षते।

पी० वी० काणे, मीराशी, केदारनाथशर्मासारस्वतप्रष्ठा विद्वांसो राजशेखरं ब्राह्मणममन्यन्त। काणेमहोदयानुसार 'क्षत्रियाणां यायावरकुल न क्वचनालोक्यते। अध्यापकत्वस्य सम्यगनिषेधेऽपि नोचितं प्रतिभाति यन्नवमदशमशताब्द्यो. भूपद्वयेन क्षत्रिय उपाध्याय व्रियेत। आधुनिकलेखकानां तत्पत्नीकुलविषयिणी केवला शङ्काप्यपार्था यत. प्राचीनमध्यकालीनभारते विहितोऽभूदनुलोमविवाह।'[3] सारस्वतानुसारत 'अद्यापि महाराष्ट्रेषु सहरिकीर्त्तनमटन्तो धेनुभिरनेकजनैश्चानुगम्यमाना सन्तो दरीदृश्यन्ते। ईदृशस्यैव कस्यचन यायावरमहात्मनो वंशे जातत्वाद् राजशेखर स्ववंशं यायावरीयशब्देनालङ्कृतवान्।[4]

अथ मत्समीक्षाया समस्येय क्षण जटिलतरा जायते। राजशेखरः स्वाभिमानमिव प्रदर्शयन् पत्न्या. कुलमुल्लिलेख। अनुलोमविवाहसङ्कोचस्य स्वाभिमानस्य च न सामञ्जस्यं भवति। पुन. 'ब्रह्मभ्यः शिवमस्तु' (बालरामायणम् १।१०, बालभारतम १।५) इति सादरं विप्रान् स्मृत्वा, रामं 'निजवंशमौक्तिकमणि'[5] कथितवान्। भूयोऽपि बालरामायणस्य नवमाङ्के विजिगीषू रामो रावण प्रति साटोपमाचष्टे—'अयमसौ क्षत्रियो रामः, स

---

1 Indian Antiquary, Vol. 34, P. 178–179 (1905 A. D.

2 कर्पूरमञ्जरी–घोषः [प्रस्तावना पृ० ६४]

3 History of Sanskrit Poetics, P. 215 (1961 A. D.)

4 काव्यमीमांसा, बिहार राष्ट्रभाषा परिषद् पटना, १९५४, 'कविराज राजशेखर' पृ० ४

5 बालरामायणम् १।१५

भवानक्षत्रियो रावणस्तदत्र दृश्यतां कतरो विनेय. कतरो विनेतेति ।' उक्तिरियं रामस्यैव चरित्रं कलङ्कयति, यतो हि लोका न ब्राह्मणविमर्दकमपि तु राक्षसविमर्दकममु सम्मानयन्ति । स्यादत्र 'नायकमुखेन कविरेव मन्त्रयत' इति बलीयानस्तु न्यायः । अन्यत्रापि विप्रानुद्दिश्य सन्ति कतिचन जुगुप्सावाक्यानि, यथा—'अच्चहमो कविञ्जलो बम्हणोत्ति ।'[1] आपाततः तथ्यान्येतानि क्षत्रिय-पक्ष पुष्णन्ति ।

अधुना दृढतरो ब्राह्मणपक्षः पुरस्तरति । यायावरनाम्नी क्षत्रियजातिः न क्वापि चक्षुश्रवणयोर्गोचरा भवति बभूव वा । ब्राह्मणजातिश्च वैदिक-कालतः चतुर्दशख्रिस्तशताब्दी यावत् शुद्धतया यायावरनामत, पश्चादद्यावधि अपभ्रष्टसदृशनामत. प्रसृताऽऽस्ते । यजुर्वेदस्य तैत्तिरीय-(५।२।१।७) काठक-(१६।१२) संहितयो आपस्तम्बश्रौतसूत्रे (३।१।१,३), देवलस्मृतौ, (१।१२८) याज्ञवल्क्यस्मृतौ(१।१२८)[2] वैखानसगृह्यसूत्रे च यायावरब्राह्मणा वर्णिता । प्रायः सर्वत्र यायावराणा वर्यकोटिका सञ्चरणभिक्षार्जनवृत्तिरितः प्रपञ्चिता ।[3]

महाभारते जरत्कारुरास्तीकश्च यायावरविप्रौ वर्णितौ । अत्र सञ्चरणभि-क्षार्जनाभ्या सममेव कवित्ववैशिष्ट्यमपि यायावराणा प्रदर्शितम् ।[4] एकादश-ख्रिस्तशताब्दीसमुत्पन्नो याज्ञवल्क्यस्मृतिभाष्यकारो विज्ञानेश्वरः सयमिनां ब्राह्म-णाना शिलोञ्छवृत्तिं यायावराणामेव वृत्तिमाह ।[5] प्रायः द्वादशशताब्द्यामाप्त-जनिः श्रीमद्भागवतटीकाकृत् श्रीधरस्वामी 'यायावर प्रत्यहं धान्ययाच्ञा'

---

1 कर्पूरमञ्जरी पृ० १६ (कोनोपसंस्करणम्)

2 अत्रैव मिताक्षराभाष्ये उद्धृतो देवलव्याहारः ।

3 विस्तरेण 'बालरामायण का मूल्याङ्कन' नामधेयो मदीयशोधग्रन्थो द्रष्टव्यः । प्रयागविश्वविद्यालयः

4 यायावरकुले धीमान् भविष्यति महानृपि. ।
जरत्कारुरिति ख्यातस्तपस्वी नियतेन्द्रिय । महाभारतम् १।३८।१२
आस्तीकस्य पुराणर्षेर्ब्राह्मणस्य यशस्विनः ।१।१३।६; द्विजवरोत्तम १।५६।२६
आस्तीकस्य कवेः साधो. ।१।१६।१; १।५८।३१
राजशेखरस्य काव्यमीमांसायामपि आस्तीकमुनि प्रशंसित एकत्र—
'आस्तीकोऽस्ति मुनिः स्म विस्मयकृतः ..यस्याद्यापि सविभ्रमं फणिवधूवृन्दै-र्यशो गीयते ।' पृ० ४४

5 याज्ञवल्क्यस्मृतौ (१।१२८) मिताक्षराभास्यम् ।

(श्रीमर्दभागवतम् ७।११।१६) इति वक्ति। चतुर्दश (१३१०-१३६०) शताब्दीजो गृहस्थरत्नाकररचयिता चण्डेश्वरोऽपि यायावरविषये सदृशमेव हारीतमतमुद्धरति।[1] तर्हि कथ न राजशेखरो दशमशताब्द्या यथोक्तगुणविशिष्टो विप्र. स्यात् ?

महाभारतोल्लिखित यायावराणा भिक्षुकत्व कवित्वञ्च राजशेखरोक्तयायावरपूर्वजानां नामस्वपि ध्वनित भवति। तरल. कविराजश्च (बालरामायणम् १।१३) कवे. पूर्वजावास्ताम्। कविराज इति उपनाम भिक्षुककवीनामिव प्रतिभाति यतः कस्यापि नाम कविराज इति प्रायो न भवति, महाकवित्वञ्च तस्य प्रसिद्धयभावे असम्भवमेव। तरलनाम स्यात्कवे प्रतिद्वार सत्वरतामुपलक्षयति वस्तुत समयपरिवृत्त्या यथा यथा भिक्षाऽवरवृत्तिर्बभूव, तथा तथैव भिक्षुविप्राणामपि सामाजिकस्थितिरवरा सञ्जाता। उत्तरभारते कविभिक्षवो 'ब्रह्मभट्टा'[2] निम्नकोटिविप्रा मन्यन्ते। तदपि भट्टचारणाभ्या वरीयासस्ते। महाराष्ट्रादागता राजशेखरपूर्वजा ईदृक्षा एव विप्रा आसन्निति दिशानया निश्चप्रचम्। महाराष्ट्रियब्राह्मणेषु यायावराणामद्यत्वे का स्थितिरिति वक्तुं दुःशकम्। कतिपयकाश्यपगोत्रीयविप्राणाम् 'आवारे' इत्युपनाम तत्र प्रचलितमस्ति।[3] कदाचिदेत एव यायावरवंशजाः स्यु, यतोहि 'यायावरीयशब्दस्य 'आवारे' इति अपभ्रष्टरूप भवेत्। पारस्यगिरः 'आवारा' शब्दस्यार्थ. मराठीगिर. 'अनाड' शब्देनाभिधीयते,[4] अतो न तस्यच्छाया ब्राह्मणानामस्मिन् उपनाम्नि सम्पतिता स्यात्।

महेन्द्रपालस्य गुरुरुपाध्यायश्च ब्राह्मण एव भवेदित्यन्तरङ्गैः प्रमाणैः स्पष्टीक्रियते। अस्यैव रघुवंशिनो राज्ञ राजसभायामभिनीयमाने बालरामायणनाटके (४।६४) रामः परशुरामं प्रत्याह—'रघूणा ब्राह्मणः किमपि यदमी गोत्रगुरवः।' इति। राजशेखरः कस्याश्चिद्राजसञ्चालितपाठशालायामुपाध्याय आसीत्, यतः काव्यमीमासायामसकृत् कृताऽऽस्ते शिष्यचर्चा।[5] अथैतदर्थे हुलत्जघोषादयो

---

[1] गृहस्थरत्नाकरः पृ० ४१५-४२१।

[2] √भट् भाषणे-भटतीति-बाहुलकात् तन्।

[3] हिन्दीमराठीशब्दकोष - महाराष्ट्र राष्ट्रभाषा सभा, पूना (१९५६)।

[4] जातिभास्कर पृ० ८९ एवं ब्राह्मणोत्पत्तिमार्त्तण्ड पृ० १४३

[5] सैष शिष्यहिताय नः। काव्यमीमासा पृ० २ (दलालसंस्करणम्)
शिष्याणां दर्शितस्त्रिविधो विधिः। पृ० २१

मनीषिण· कथितवन्त यत्क्षत्रियोऽपि कथञ्चिदध्यापको भवितुमर्हतिस्म, किन्तु भूयोऽप्यधोनिर्दिष्टे प्रमाणान्तरे मनीषिणोऽमी कि वक्ष्यन्ति ? विवाहादिपौरोहित्य-कृत्यकारयिता अपि तदानीमुपाध्यायशब्दवाच्यो बभूव–यत –कर्पूरमंजर्यामे कस्मिन् स्थले विवाहप्रसङ्गत. उपाध्याय आकार्यते ।[1] एतादृशः कुलगुरु· पुरोहितो वा उपाध्यायो ब्राह्मण एव भवितु शक्नोतीति न कश्चन सन्दिहीत ।

क्षत्रियकुमारीमवन्तिसुन्दरी कवि आप्टेसम्मतशैवमतेन काणेसम्मतानुलोम-प्रथया वा कथ परिणिनायेति कल्पनाया एव विषयः । शैवमतापेक्षया तु राजशेखरादृतस्य जैनधर्मस्य[2] कौलतन्त्रस्यैव[3] वा स्वतन्त्रता पर्याप्ततरा, यदयं क्षत्रियललनामङ्गीकरोतु । एतावत् स्पष्टत. कथ्येत यत्तदात्वे ब्राह्मणाः स्वैर राजन्यकन्याः परिणिन्यु । स्मृतिकारा प्राय. सदैवानुलोमविवाह प्रशंसन्तः प्रतिलोमं जगर्हु:, अथ वस्तुस्थितिः समानेहसा प्रत्यक्षदर्शिनाम् आरब्य-(अरबी)–यात्रिकाणा वर्णनै. ज्ञायेततमाम् । द्वादशशताब्द्या नुभ्रतुल - मुश्तकनामाऽऽरब्ययात्रिकः यत्र लिखति—'क्षत्रियया ब्राह्मणो विवाह् कर्त्तुमीष्टे, किन्तु ब्राह्मणकन्यां न क्षत्रियः स्वपत्नी विदध्यात् ।'[4] तत्रैव दशमशताब्द्या· पूर्वार्द्धस्य राजशेखरसम-सामयिकः इब्न खुर्दबाऽऽख्यः आरब्ययात्रिको लिखति—'ब्राह्मणवर्गस्य कन्या विवाहे क्षत्रियपुत्रेभ्यो न दीयन्ते, किन्तु ब्राह्मणा· तेषा कन्याः स्वीकुर्वन्ति ।'[5] राजशेखरो जातिग्रहिलो नासीदिति शार्ङ्गधरपद्धतिमध्ये समुद्धृताभ्यां तत्पद्याभ्यामाभाति–

सरस्वतीपवित्राणा जातिस्तत्र न कारणम् ।
व्यासस्पर्धी कुलालोऽभूद् यद् द्रोणो भारते कवि ॥ १८६।१८
अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः ।
श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः ॥१९०।१९

---

1 उवज्झाओ हक्कारीअदु । कर्पूरमजरी पृ० ११२

2 यशस्तिलकचम्पू, तृतीयाश्वासत ।
A second report of operations in search of Sans, mss., Journal of the Bombay-Branch of the Royal Asiatic Society No. XLiv, P. 45. (1884)

3 कर्पूरमंजरी १।२३-२४ ।

4 History of India—By-Elliot & Dowson, P. 76 (London 1867)

5 Do—P. 16 [अन्यदपि द्रष्टव्यम्–History of Dharmaśāstra, 2nd volume. P. 50–58, 448-450]

अतः कविराजो निस्सङ्कोचमनुलोमप्रथया विदुषीमवन्तिसुन्दरीमुरीकृतवान् इति प्रतीयते । कर्पूरमञ्जर्यां चौहानकुलोल्लेख. सम्भवतो भार्यानुरोधेन कृतो भवेत् ।

ब्रह्मभ्य. शिवमस्तु वस्तु विततं किञ्चिद् वय ब्रूमहे ।
हे सन्तः ! शृणुतावधत्त विधृतो युष्मासु सेवाञ्जलिः ॥
(बालरामायणम् १।१०)

उक्तावस्यां 'ब्रह्मभ्यः शिवमस्तु' इति पदं न प्रणामसूचकमपि तु शुभाशंसासूचकमस्ति । 'वस्तुविततं......सेवाञ्जलिः' इति वाक्य स्पष्टत· सकलसहृदयंदर्शकान् प्रति कथितम् । यदि ब्राह्मणपरकमेतन्मन्येत कवेर्बद्धाञ्जलित्व च प्रतीयते तदपि न काचन हानि. । समयपरिवर्त्तेन यायावराणामवरा विप्रकोटिरासीदिति कथितमेव प्राक् । ब्राह्मणसमाजे क्षत्रिय-कन्योपयन्ता राजशेखरो हेय. स्यादेव, यतो स्वनाटकप्रस्तावनायां तेन समादृता ब्राह्मणम्मन्यदर्शकाः । सामान्यतयाऽथ प्रबन्धारम्भे ब्राह्मणकवयोऽपि देवद्विजनृपादीनभिष्टुवन्ति, तथा हि तुलसीदासः—'बन्दौ प्रथम महीसुरचरना' इति रामचरितमानसारम्भे ।

स्तुत्येऽस्मिन्निजवशमौक्तिकमणौ रामे विरामे द्विषाम् ।
कुण्ठा मे प्रतिभैव दैवतवशाद्वाचा प्रवृत्तिर्यदि ॥
(बालरामायणम् १।१५)

अत्र कवी राम निजवशमौक्तिकमणिमाह । अवधेय यत्कतिपयपाण्डुलिपिषु 'मनुवंशमौक्तिकमणौ' इति पाठान्तरे सति[1] न पदमिद निर्विवादम् । 'निजवशमौक्तिकमणौ' इति पाठेऽपि कवेरित्थ स्पष्टतात्पर्य यत्—'महेन्द्रपालराजकवेः मम प्रतिभा (महेन्द्रपालवशस्य) रघुवशस्य वर्णने तु प्रखरास्ति किन्तु रघुवंशिनो रामस्य वर्णने कुण्ठितास्ति, यतो ह्यसौ निजवंशस्य मणिभूतः (न मम) ।'

रामस्य 'अयमसौ क्षत्रियो राम. ..... इत्यादिक्षत्रियपक्षीयगर्वोक्तेः प्राग् रावणोऽपि 'अयमसावक्षत्रियो रावण, स भवान् क्षत्रियो राम·, तद् दृश्यता कतरो विधेय· कतरो विनेतेति' इत्थं विकत्थनाप्रवणो भवत्यतो नात्र कवेः क्वापि पक्षपात. सूच्यते । वस्तुतो बालरामायणे मध्येरामरावणयुद्ध क्षत्रियब्राह्मण-

1 A Descriptive Catalogue of the Sans. mss. Govt. Oriental Manuscripts Library, Madras, Vol. XXI (1918 A. D.), S. Luppūswāmī Sāśtrī.

# कालिदासस्य भौगोलिकं विज्ञानम्

**श्रीरामचंद्र डु,**

स जयति कविकुलतिलक. रघु-दिग्विजयच्छलेन योऽघोषीन् ।
आसेतु रजत - भूधरमेकत्व भारतावन्या ॥

महाकविः कालिदाम न केवलमधरीकृतसुधामाधुर्यां कवितायामेव, अपितु सकलासु कलासु, सर्वेषु दर्शनेषु, ऐहिकेपु च विज्ञानेष्वनुपमप्रज्ञ इत्यपरोक्षमेवेदं तत्काव्य - नाटकाद्यधीनिनाम् । अयञ्च विशेष. कालिदासस्य यदयं महाकवि न कमपि विषयं वक्तव्यमित्येव वदति, अपितु रुचिर कञ्चित्प्रसङ्ग-विशेषं निर्माय, औचिती च रक्षन् केवलं सम्भाषण - वशेनैवैताहशान्विषया-नुपनिबध्नाति । देवकृत - ब्रह्मविष्ण्वादि - स्तोत्र - मुखेनाऽत्मविषयकं सिद्धान्तं प्रतिपादयति । रघूणा त्रिविधिहुताग्नित्वादिक - वर्णनेन कण्वादि - सम्भाषण -मुखेन च भारतीयाना जीवितं परमावश्यकं चतुर्वर्ग-पालन प्रकटयति । मालविकाग्निमित्रे नाटचाचार्यः कलहप्रसङ्गेनात्मनो नाटचकला - वैदग्ध्य "छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम्" इत्यादिना नित्यजीवितोपयुक्तासु प्रथमचिकित्सादिषु च प्रावीण्यं प्रदर्शयति, एवं तत्र तत्र रघुदिग्विजयादिष्वनेन प्रदर्शितं भौगोलिकं विज्ञान न केवलं सुपरिनिष्ठितमेव, अपितु प्राचीनभारतदेशीय तत्तत्प्रान्त-सीमान्त-निर्धारणप्रवृत्तानामाधुनिकाना महदुपकरोतीत्यङ्गीक्रियते सर्वैः पण्डितैः ।

प्रायः सर्वेऽपि प्राचीनाः कवय. गतानुगतिक - न्यायेन कतिपयदेशानां नामानि "अङ्ग – वङ्ग – कलिङ्ग" इत्यादिमानुप्रासैर्दीर्घसमासैः संगृह्णन्त-स्तावदात्मान कृतार्थ मन्यन्ने । परन्तु कालिदास अधुनातन - भूगोलशास्त्रज्ञवत् यथास्थिति यथाक्रममेव च सर्वान्देशान्निर्दिशन् तत्तद्देशीयानाचारान् वेष-भाषादींश्च सम्यक् विविनक्तीति महदिदमाश्चर्यम् ।

दिग्विजयार्थमुत्तर - कोसल - राजधान्या अयोध्याया. किल प्रस्थितो रघुः पौरस्त्यान् जनपदानाक्रामन् क्रमेण तालीवन श्याम महोदधेरुपकण्ठमासाद्य सुह्मानात्मसादकरोत् । अयं सुह्मदेशः वङ्गदेशातपश्चिमः; गङ्गायाः पश्चिमे तीरे तामलुक - मिदनापुर हुग्ली – बर्दवान् – मण्डलानां सुह्म इति नामासीत् ।

ततो रघुः बगाल इति प्रसिद्धान् वङ्गानुदखनत् । गङ्गा - ब्रह्मपुत्रादि - नद्योः मध्यभागस्य बङ्गा इत्यभिधासीत् । समुद्रतीरे नदीद्वयमध्यस्थाना वङ्गाना नाविक - बलाधीशत्व स्वाभाविकमेव । आधुनिकाना नदिया-यशोहरा - राजशाही-पबना - फरीदपुर - मण्डलानामेव बङ्गा इति निर्देशः । ततो रघु कपिशां तीर्त्वा दक्षिणाभिमुखः प्रथमं उत्कल देशम्, तत कलिगांश्च प्राप्य महेन्द्रनगरस्य मूर्धन्यात्मन. प्रताप प्रासारयत् । बगालदेशे मेदिनी पुरीप्रान्ते प्रवहन्ती कोर्या नद्येव कपिला नदी । "कलिङ्गाना उत्तरभागः" इत्यर्थकस्य 'उत्कलिगा.' इति पदस्यैव अपभ्रशरूप 'उत्कल' इति । एवञ्च उत्तरे कोर्या नदीमारभ्य दक्षिणे गोलियानदीपर्यन्त उत्कलदेश । ततश्च गोदावरीनदीपर्यन्तं कलिगदेशः । कालिदास· कलिङ्गाधिपतिं "महेन्द्रनाथ" इत्यवर्णयत् । उत्तरे गजाम - मण्डलादारभ्य दक्षिणस्या दिशि मधुरा - पर्यन्त प्रसृतायाः Eastern Gh·ts इति प्रसिद्धाया· पर्वत - पङ्क्तेः महेन्द्रपर्वत इति नामेति केचित् । परन्तु कालिदासानुसारं तदनुयायिभौगोलिकानुसारेण च गङ्गासागरसङ्गम-सप्तगोदावरयोर्मध्ये स्थितस्यैव भूधरस्य महेन्द्रगिरिरिति नाम । पार्जिटर् - महाशयोपि महानदी-गोदावरी-वेणुगंगाना मध्ये स्थितो महेन्द्रगिरिरित्यभिप्रैति । प्रान्तेस्मिन् नारिकेलवनाना ताम्बूलीवनाना चाद्येव पुरापि बाहुल्य सूचयति कालिदासः

"ताम्बूलीना वनैस्तत्र रचितापानभूमय ।
नारिकेलासवं योधा शात्रवञ्च पपुर्यशः ।" इति ।

उत्कल - कलिग - जयानन्तरं फल - भरित - पूग - वनालंकृतेन समुद्रतीर-मार्गेणैव दक्षिणा दिश प्रस्थाय, रघु. कावेरीमतिक्रम्य मरीचवनी संकुलाः मलयाद्रेरुपत्यका अध्यास्य ततः पाण्ड्यानजयत् । चोल - देशादुत्तर-पश्चिमस्यां दिशि पाण्ड्यदेशोऽय कावेरी - भारत - महासागरयोर्मध्ये आसीत् । मधुरा-तिरुनल्वेली - रामनाथपुर - मण्डलानामेव "पाण्ड्य" - संज्ञा । पाण्डय - देशीये तिरुनल्वेली - मण्डले प्रवहन्त्यां ताम्रपर्ण्या भारत महासागरे च मुक्ताः प्रभूततरमुपलभ्यन्तेस्मेति प्लीनी-टोलिमी-प्रभृतयो निरचिन्वन् । अत एव च कालिदासः

"ताम्रपर्णी - समेतस्य मुक्तासारं महोदधेः ।
ते निपत्य ददुस्तस्मै यश स्वमिव सञ्चितम्"।।

इति वर्णयति । अस्य च दक्षिणप्रान्तस्य एलालवंगचन्दनादि - विषये महती प्रसिद्धिरद्यापि सुनिशितपरिशीलना शीलः कालिदासः कथं वा वर्णयति-

"ताम्बूल - वल्ली - परिणद्ध - पूगास्वेलाललालिंगित - चन्दनासु ।
तमाल - पत्रास्तरणासु रन्तु प्रसीद शश्वन्मलय - स्थलीषु"।।

अनामलय. एलामलयश्चेति द्वयोः पर्वतयोरेकं नाम मलय इति। अनामलयः पालघाट प्रान्तस्य पश्चाद्वर्तते । तस्यैव दक्षिणे भागे कन्याकुमारी-पर्यन्तं व्याप्त-पर्वतभागस्य एलामलय इति नाम । जितपाण्ड्यो रघुः मलयदर्दुरयोर्मध्यात् पालघाट - मार्गेण निर्गत्य सह्याद्रिमतिचक्राम पश्चिमतीरे विजयाय । अधुनातनो नीलगिरिरेव दर्दुरः । Western Ghats इति प्रसिद्धा पर्वतपङ्क्तिरेव पुरा सह्याद्रिः । तीर्णसह्याद्री रघु अपरान्ते पश्चिमतीरे प्रथमतो दक्षिणभागावस्थितान् केरलान्नाममात्रश्रवणेनैव भीतान् कृत्वा अन्येभ्योपि कोंकणादिप्रान्तीयेभ्यो राजभ्य करानगृह्णात् ।

सह्यपर्वतस्यैव कश्चिद्भागः 'त्रिकूट' इति विश्रुत । स च नासिकाक्षेत्रात्पश्चिम. कोऽपि पर्वत. स्यात्; यत. नासिकप्रान्ते किल लब्धाया प्रस्तर-लेखाया प्राच्या 'त्रिकूट'—नाम्न· पर्वतस्य निर्देश उपलभ्यते। रघु त्रिकूट-नगमेवात्मनो जयस्तम्भ विधाय 'पारसीकांस्ततो जेतु प्रतस्थे स्थल - वर्त्मना ।' अत्र कालिदासः 'प्रतस्थे स्थल - वर्त्मना' इति वदन् त्रिकूटप्रान्तात्पारसीकदेश गन्तुं स्थल-जलमार्गावुभावप्यास्तामिति विशदीकरोति। पश्चिमे तीरे आधु-निकेभ्य. कल्याणी - सोपारा - भडौच - नौकाश्रयेभ्य. भारत-पारसीकयोर्मध्ये गमनागमनादिकं प्रावर्तत पुरेति वदन्ति पुराविदः । अतः कालिदासेन सूचितो जलमार्गः कल्याणी - नौकाश्रयप्रान्तादिति गम्यते। जलमार्ग परिहृत्य रघो. स्थलमार्गानुसरणं मल्लिनाथोक्तरीत्या नैव समुद्रयान-परिहारार्थम् , अपितु अतिदुर्गं थारप्रदेशादिकमपि विजित्य पारसीकाना दक्षिणपूर्वभागस्या-क्रमणार्थमेव; येन तत उत्तर-भागस्थान् हूणान् विनायासेन प्राप्तु शक्येत । यदि रघु· जलमार्गमवालम्बिष्यत तदा पारसीक-देशस्य मध्ये 'मकरान' प्रान्ते वा 'पारस्' प्रान्ते वा समुद्रतीरे अवातरिष्यत्; येन पारसीकदेशस्य मध्ये अवतीर्य तान् जेतु किञ्चित् अधिक· श्रम अभविष्यत् । अत्र कालिदासेन वर्णितं पारसीकानामश्वसैन्याधिक्यं, मुण्डित - शिरस्कानां तेषा श्मश्रुलमुखत्वं च अद्यापि प्रसिद्धमेव । ते च शिरस्त्राणान्यपनीय शरणागति सूचयन्तीति तेषामाचारः । शृंगमयानि मुखवाद्यानि पूरयन्ति स्म ते समरे । अद्येव तदापि तस्मिन् देशे प्रभूता. द्राक्षा आसन् । पेरिप्लसादयो विमर्शका· चर्मव्यवसाय-स्यात्राधिक्य निरूपयन्ति । एवञ्च 'आस्तीर्णाजिनरतासु द्राक्षावलय भूमिषु' इत्यादि वर्णयन् कालिदासः तत्तद्देशीयाचार—वेष-वस्त्रादीन् कथ वा परिशी-लयति सूक्ष्मेक्षिकयेति विदाकुर्वन्तु सहृदयाः ।

ततो रघुः हिन्दूकुश-पूर्वत-प्रान्तीयेन मार्गेण उत्तरा दिश प्रस्थाय

'पामीर' प्रान्ते अद्यत्वे 'आक्सस्' नदीति प्रसिद्धाया वक्षु-नद्याः तीरमासाद्य तत्रत्यान् हूणान् परास्तानकरोत् ।

'विनीताध्वश्रमास्तस्य वक्षु-तीर-विचेष्टनैः ।
दुधुवुर्वाजिनः स्कन्धान् लग्नकुंकुमकेसरान्' ।।

इति वर्णयति कविः । मल्लिनाथ: 'वक्षु-तीर' इति बहुषु लिखित-पुस्तकेषूपलभ्यमानं पाठमनादृत्य 'सिन्धु - तीर' इति पाठमङ्गीकृत्य, सिन्धुनदी-तीरे-च कुंकुम - केसराणामसम्भवात् 'सिन्धुर्नाम काश्मीरेषु कश्चिन्नदविशेषः' इति व्याचख्यौ । परन्तु काश्मीर-देशीयो वल्लभ-देव. अमर-व्याख्याता क्षीरस्वामी च 'वंक्षुतीर' इत्येव पाठमंगीकृत्य तत्र च कुंकुमोत्पत्ति, अत एव च तस्य 'बाह्लीक' मिति च नाम समर्थयामासतु । अस्यैव श्लोकस्य साहाय्येन भारत-देशस्य प्राचीनः पश्चिमोत्तरसीमान्त. इय आक्सस् नद्येवेति भौगोलिका. वदन्ति ।

ततो रघु काम्भोजान् जिगाय । काश्मीरेभ्यः उत्तर-पूर्वस्यां दिशि 'धाल्चा' भाषा-भाषिणा प्रान्त एव काभोजा, यतः कालिदासेन तत्र वर्णिताः अक्षोरवृक्षा., अश्व-श्रेष्ठाः, मरकत-वैदूर्य-खनयश्च तत्राद्याप्युपलक्ष्यन्ते । ततः पूर्वाभिमुखो रघु हिमवत्प्रान्ते पर्वतीयान् किरातान्, किन्नरान्, उत्सव-संकेताभिधाश्च काश्चिद् गणानजयत् । लद्दक्-प्रान्तीया गिरिजना एव अत्र किरात इति निर्दिष्टा, सतलज्-नद्या उपरितीरे कनौर्प्रान्तीयाः किन्नरा. । ये वा वैवाहिकी रीतिमनादृत्य यथेच्छ प्रणयव्यवहारेषु प्रवर्तन्ते, तेषामेवात्र निर्देश आटविकानां 'उत्सवसंकेता' इति इत्यभिप्रैति पार्जिटर् महाशयः, कनौर-प्रान्तसमीपे 'मनचती - लहुची - बुनन्' इत्याद्यल्पभाषाभाषिण एते उत्सवसंकेताः । ततो रघुः कैलास-प्रान्तेन निर्गत्य पूर्वाभिमुखो गत्वा ब्रह्मपुत्रापरनाम्नी लौहित्य-नदी तीर्त्वा कामरूपदेशे प्राग्ज्योतिषेश्वरमजयत् । कैलासोऽय गङ्गोत्र्या अग्रे मानस-सरोवरात् द्वादशक्रोशदूरे वर्तते । अयमेव शाकुन्तले वर्णितो हेमकूटः । अस्य देशस्य कामरूपमिति, गौहतीनगरस्य च प्राग्ज्योतिषपुरमिति प्राचीने नामनी । एवं रघुदिग्विजयवर्णनद्वारा कालिदासः आसेतु कैलासं आपारसीक-कामरूपञ्च भारतदेशस्याखण्डता तत्तदवान्तरविभागवर्णनापुरस्सर प्रतिपादयति ।

महाकविरयं रामगिरेर्मेघस्यालकामार्गम, लंकात् रामस्य प्रत्यागमनम्, स्वर्गा-द्दुष्यन्तस्य अवरोहणञ्च वर्णयन् आकाशाद्दृष्टस्य भारतदेशस्य कमनीयं चित्रं चालयति पुरतः सहृदयानाम् । मेघसन्देशे वर्णितस्य रामगिरेर्विषये विप्रतिपद्यन्ते विमर्शका. । मध्यप्रदेशे स्थितः "रामगढ्" पर्वत एव रामगिरिः न तु रामटेक् पर्वतः इति नूतनतमं मतम् । रामगिर्यलकापुर्योर्मध्ये

स्थितान् सर्वान् जनपदान् सर्वा नदी. पर्वताश्च कालिदासः यथातथ वर्णयति, येन कविना स्वय दृष्टपूर्वा एते प्रदेशा इति मतिर्जायते आधुनिकानामपि पठितृणाम् । विरसा भूगोलशास्त्रादि-विषया अपि प्रतिभावतो महाकवे. कवितामन्त्रोदकेन सिक्ता कथ वा रमनिष्यन्दिनो भवन्तीति दर्शयत्यय . महाकविरस्मिन् मेघमार्ग-वर्णनावसरे । अधुनातन अमरकटक एव आम्रकूटपर्वत. । अस्मादाम्रकूटनगाद् रेवानदी विन्ध्यपादे विशीर्णा भवति । अस्य विन्ध्यपादस्याद्य सतपूडा इति नाम । तत मालव-देशस्य पूर्वभाग दशार्णदेश वेत्रवतीपरिगताञ्च विदिशा वर्णयति कवि. । वेत्रवत्या आधुनिकनाम 'बेतवा' इति । भिलसा तु ग्वालियर-प्रान्तीया । इय विदिशा भूपाल-पत्तनात् त्रयोदशक्रोशदूरे वर्तते । अनन्तर वर्णितो नीचगिरि आधुनिकः उदयगिरिरेवेति तज्ज्ञाः । पश्चिम-मालवदेशस्य अवन्ती इति नाम । तेषाञ्च सिप्रानदीपरिगता उज्जयिनी राजधान्यासीत् । अतएव च प्राचीमार्गेण प्रस्थितस्य मेघस्य पुन प्रतीचीस्था उज्जयिनी प्रति गमन नाम वक्रगमनमेवस्यादितिधिया "वक्र पन्था यदपि भवत· प्रस्थितस्योत्तराशाम्" इत्यादि कथयति यक्षः । नीचगिर्युज्जयिन्योर्मध्ये वर्णिता निर्विन्ध्या कालीसिन्धुरिति प्रख्याता । अनन्तर स्कन्दनिलयत्वेन वर्णितो देवगिरि· 'सुरभितनयालम्भनजा नदी' इति वर्णितायाः चम्बलनद्या दक्षिणे देवगढपर्वत एवेति विलसन्-पण्डितो मन्यते । ततो निर्दिष्टं दशपुरं उज्जयिन्या नातिदूरे पश्चिममालवाप्रान्तीय मण्डसोर-नगरमेव । तत. सरस्वती-दृषद्वती - मध्यस्थ ब्रह्मावर्त, सरस्वती-नदीं, हरिद्वारप्रान्तस्य कनखलक्षेत्र हिमगिरिञ्च वर्णयन् परशुरामेण निर्मितं क्रौञ्चरन्ध्र प्रविश्य कैलाससमीपस्थमलकापत्तन प्रति गन्तव्यमिति प्रदर्शयति कवि. । अद्यत्वे तिब्बत - भारतदेशयोर्मध्ये गमनागमनोपयुक्तस्य कुमायू-मण्डले वर्तमानस्य दर्शयति हिमवन्मध्यप्रदेशस्यैव क्रौञ्चरन्ध्र इति नामासीत् । अन्यत्रापि इन्दुमती-स्वयवर-वर्णनाद्यवसरे अनेकान् देशान् तत्रत्यविशेषाश्च वर्णयन्नय कविकुल-तिलक. आधुनिकभूगोलज्ञस्येव निर्दिष्ट निश्चितञ्च ज्ञानं दर्शयति । एवञ्च स्व-सामयिक लौकिकविज्ञान प्रतिपदमाविष्कुर्वन्नयं महाकविः स्वाभाविकी प्रतिभा, शास्त्रीय-पाण्डित्य, लौकिकञ्चाकुण्ठित विज्ञानमित्येत् त्रयमेव महाकविता - साम्राज्यपदवीमध्यारोपयितु शक्नोतीति सूचयन् स्वयमेवात्रोदाहरणता प्रतिपद्यते ।[1]

---

आल-इण्डिया-रेडियोतः प्रसारितोऽयं लेखः ।

# भारत–जनकम्

## मनोरमा सक्सेना

डा० यतीन्द्रविमलचतुर्धुरीणेन विरचित 'भारत जनकम्' राष्ट्रपितु· गान्धिनोऽध्यवसायेषु आधारित नाटकमस्ति । नाटकमिद नान्दीपाठेन प्रारभते । नान्द्यां महात्मनः गान्धिन· स्तुतिः कृता । यथा

नमामो भारत–स्वातन्त्र्य–जनक धर्म–राजनीति–मिश्रितजीवितम् ।
प्रसाद–नेहरू–पाटेल–चालकं धर्मनिर्विशेष–मेलनसाधकम् ।। १ ।।

### कथावस्तु

'भारत-जनक' मिति नाटकस्य कथावस्तु षोडशाङ्केषु विभक्तमस्ति । प्रथमाङ्के प्रस्तावनायां नटीसूत्रधारयोर्वार्तालापेन भारतमहिमा वर्णितः । भारतवर्षमादिकालादेव विभिन्नसंस्कृतीनां मेलनक्षेत्रमस्ति । भारतवर्षे समये समये अनेकः महापुरुषाः प्रादूर्भूता ये भारतीयमेलनकार्यार्थं प्रयत्नशीला आसन् । गान्धिना सर्वेषां भारतीयमेलनप्रयत्नानां शिखरो दर्शित· । द्वितीयाङ्के अफ्रीकादेशे गान्धिकृतानां कार्याणां वर्णनमस्ति । गान्धिन. कार्यकलापं दृष्ट्वा नेटालदेशस्य कतिपयश्वेताङ्गा युवका· तम् इष्टकडिम्बादिभि. पादाघातैश्च जर्जरितं कुर्वन्ति । तस्मिन्नेव समये पुलिससुपरिण्टेण्डेण्टपत्नी श्रीमती अलेकजान्दार तं रक्षति । तृतीयाङ्के नेटालदेशे 'जुलु' निवासिनः प्रति कृतानत्याचारानालोक्य गान्धी नितरां दूयते, तेषां कष्टनिवारणाय प्रतिश्रृणोति च । चतुर्थाङ्के गान्धिसहधर्मिणी कस्तूरबा रोगपीडिता दृश्यते । चिकित्सकानां भृशमनुरोधैरपि सा गोमांस गृहीतु नोद्यता । पचमाङ्के गान्धी स्वदेशवासिभ्यः हितकरकार्यकरणापराधेन कारागार गच्छति । कारागाराद् बहिरागत गान्धिन भारतीयमहम्मदीयपाठान-मीरआलमो हन्तुमुद्यतते । ईश्वरकृपया गान्धिनः प्राणा· रक्ष्यन्ते । षष्ठाङ्के जोहान्सवर्गस्थ–महम्मदीयोपासनामन्दिरस्य प्राङ्गणे भारतीयाः समवेताः । गान्धी तान् सर्वानुपदिश्य श्वेतवर्णानामाग्लशासकानामत्याचारान्

वर्णयति । सप्तमाङ्के गान्धिन उपदेशेन प्रभावितौ सन्तौ द्वौ युवकौ मातृभूमेः रक्षार्थं प्रयतमानौ आंग्लशासकैः कारारुद्धौ भूत्वा प्राणदण्डमाप्नुत । अष्टमाङ्के श्री ओयेष्टः श्रीकालेनवाक् च आंग्लशासकाना नीतिं निन्दन्तौ भारतीयानां स्वातन्त्र्यविषये विचारविमर्श कुरुत. । गान्धिन सत्याहिंसयोर्धर्म स्वीकुरुतः । नवमाङ्के कस्तूरबामुख्याना नारीणां समुदायः धर्मपालन कुर्वन् कारागारे प्रक्षिप्तो दृश्यते । दशमाङ्के मद्रासनगरे सर्वे राज्याधिकारिण भारतवर्षस्य वायसरायस्य लार्डहार्डिजस्याभिनन्दनं कुर्वन्ति । वायसराय अफ्रीकादेशे गान्धिकृतानि कार्याणि बहुशः प्रशसति । एकादशाङ्के गान्धी हिन्दुमुस्लिमैक्यप्रतिपादनार्थं प्रयत्न कुर्वन् एकविंशतिदिवसपर्यन्तमुपवसति । द्वादशाङ्के गान्धिना शासकानां लवणविधिरति-क्रम्यते । त्रयोदशाङ्के गान्धी त्रिवेन्द्रनगरे अस्पृश्यतानिवारणायोपदिशति । चतुर्दशाङ्के माता कस्तूरबा दिवंगत महादेव स्मृत्वा शोकविह्वला जायते । पञ्चदशाङ्के कलिकातानगर्या महात्मा गान्धी उपस्थित. । कालः १९४७ वर्षस्य अगस्तमासस्य पञ्चदशतिथि वर्तते । सर्वे हर्षमग्ना भूत्वा स्वाधीनतासमारोहोत्सवं सम्पादयन्ति । षोडशाङ्के गान्धिमहोदय. केनापि महम्मदीयसाधुना सह वार्ता करोति । हिन्दुमहम्मदीया. पारस्परिक विद्वेष विहाय 'वार्षिकोर्' नामकोत्सवे सम्मिलिता भवन्ति । साम्प्रदायिकविवादा निर्मूलिताः सन्ति । महात्मगान्धिना सह हिन्दुकन्याः कोराणीयप्रार्थना कुर्वन्ति । भरतवाक्येन नाटकमिद समाप्यते ।

## चरित्र-चित्रणम्

### महात्मा गान्धी

महात्मा गान्धी भारतजनकनाटकस्य नायकोऽस्ति । तस्य चरित्रं तु महामहिमव्यञ्जकम् । गान्धी हिन्दुमुस्लिममैत्रीं विश्वमैत्रीं च संवर्धयितुं प्रयत्नशीलः । तद्यथा सूत्रधारस्य कथनम्—

यत्र यत्र भारतवर्षस्य वैशिष्ट्य तत्र तत्र भारतमातुः श्रेष्ठपुत्रस्य जातेर्जनकस्य गान्धिवर्यस्यापि । सा तु महामेलनव्यग्रता, सर्वेभ्यो मैत्रीभावना, सर्वेषामक्षयकल्याण - साधनव्रतोद्यापनेन हृदयबन्धनदृढीकरणम् ।[1]

---

[1] भारत-जनकम् – प्रथमाङ्क पृ० ३

अफीकादेशे गान्धीः भारतान् प्रति आंग्लशासकानां दुर्व्यवहारान् दृष्ट्वा भृशमुद्विग्नो जायते, तेषां दुःखाना निवारणाय सततं प्रयतते च। अनेन कार्येण क्रुद्धा नेटालवासिनो गान्धिनः उपरि इष्टकडिम्बादिप्रक्षेपेण पादाघातैश्च तमाहत कुर्वन्ति। तेषामत्याचारान् सोढ्वाऽपि स न किञ्चिन्मात्रमपि विचलितो भवति, कथयति च —

भगवन्! तव कृपया सर्वमेतन्मङ्गलं संघटते। मम दरिद्रदेशवासिनां भवत्वक्षय्यं मङ्गलं तथा नेटालवासिना मम घातकानां तथा च निखिलविश्वस्य।[1]

इत्थं स हानि कुर्वता जनानामपि कल्याण वाञ्छति। गान्धिनं दृष्ट्वा पुलिससुपरिण्टेण्डेण्टस्य पत्नी श्रीमती अलाकजान्दार स्वमनसि कथयति—

जनो न साधारण एव नूनं भवेत् पुनः सयमवान् विवेकी।
न चेत् कथं हिंसित एवमेभिरहिमकस्तिष्ठति निर्विकारम् ॥११॥[2]

महात्मा गान्धी. सर्वान् प्राणिन. समानदृष्ट्या पश्यति। तस्य दृष्टौ सम्पूर्ण-जगतो मानवाः समाना एव। 'वसुधैव कुटुम्बकम्' इति सिद्धान्तं स जीवन-पर्यन्तं पालयति। स कथयति—

को भेदो मानवानामिह च निवसतां भारते च स्थितानां।
सन्ताना सर्वे एते यदिह भगवतः सर्वभूतस्थितस्य ॥

अस्पृश्यतानिवारणाय स जनानुपदिशति निरन्तरं प्रयतते च। अस्पृश्य-जनानां सम्बन्धे तस्य विचारः प्रबोधपूर्ण.। तथा हि—

मेदोमज्जास्थिरक्तं प्रवहति सदृशं सर्वकायेष्वजस्रम् ॥[4]

प्राणिनां हिंसा दृष्ट्वा तस्य चेतो भृशं दूयते। स मानवानां हिंसा-वृत्तेः निराकरणाय ईशं प्रार्थयते, कथयति च—

कदा त्वया देव निराकरिष्यते दुरन्तहिंसा हृदयाच्छरीरिणाम्।
जगत् त्वया यद् रचित सुखात्मकं यया तदेतत् क्रियते मलीमसम् ॥[5]

---

1 भारत-जनकम् द्वितीयाङ्के पृ० ६
2 ,, ,, २-११
3 ,, ,, ३.१२
4 ,, ,, ३.१३
5 ,, ,, ३ १८

गान्धी 'आग्लशासकानां वेत्राघातैः जर्जरितानां जुलुजनानामार्तनादं श्रुत्वा स्वस्कन्धोपरि पगुवाहिनी शिविका विन्यस्य तान् दूरं नयति । स तान् हन्तुमुद्यतमपराधिनमपि क्षमते । भारतीयाना दु खनिवारणाय स बहुशः कारागारमुपवसति । कारागारेऽनेकयातनाश्च सहते । हिन्दूमुस्लिममैत्रीसम्पादनाय स तानुपदिशति, एकविशतिदिवसपर्यन्तमुपवसति च । गान्धी स्वप्रयत्नानां प्रभावेण साम्प्रदायिकी द्वेषभावना दूरीकरोति ।

## कस्तूरबा

महात्मगान्धिनः सहधर्मिणी कस्तूरबा धर्मपरायणादर्शपतिव्रता नारी अस्ति। सा स्वपतेः देशसेवासम्बन्धिषु सर्वेषु कार्येषु सहयोग ददाति । देशसेवाकार्यरता सा स्वयमपि कारागारं गच्छति । कारागारे निवसन्ती सा विविधा यातनाः सहते । कस्तूरबा भारतवासिना विश्ववासिनां च कल्याणाय निरन्तरमीशं प्रार्थयते । नेटालदेशे सा रुग्णा भवति । चिकित्सकाना निरन्तरानुरोधैरपि सा गोमासं ग्रहीतु कदापि उद्यता न भवति । गान्धी तस्या विषये कथयति—

"यथा मम माता पितामही च, तथेयं सर्वपातिव्रत्यालङ्करणविभूषणा जगतोऽन्यत् सर्व विभूषण मलिनीकरोति ।[2]

## नारी-चित्रणम्

नाटकेऽस्मिन् स्थाने स्थाने नारीमहिमा प्रतिपादितः । पोलकमहोदयः कथयति—

भारतवर्ष सर्वथा मातृमुखि राष्ट्रम् । मातॄणां सम्माननमेव भारतीयाना जीवनव्रतम् । पथि वने मरुभूमावुद्याने सर्वत्रैव दर्शनमात्रमेव भारतीयजनो नारीजनं मातृसम्बोधनेनाराधयति, मातृजनोऽपि पुरुषमात्रे सन्तानवत् स्निह्यति, संतानस्नेहेन प्रत्येकं लालयति पालयति च । तस्य देशस्य नारीजनः कारावासादिक्लेशेन चक्षुर्जलं मुञ्चति चेत्तज्जलमग्निर्भूत्वा सर्वमेवाफ्रिकादेशं धक्ष्यति—का कथा ट्रान्सवालस्य नेटालस्य वा ।[3]

---

2 भारत–जनकम् चतुर्थाङ्के पृ० १८

3 ,, ,, अष्टमाङ्के पृ० ३३

गान्धिनो मतमिदम्—

"बहोः कालान्ममाय दृढो विश्वासो जातो यत् पुरुषादपि नारी स्वाधीनताहरणविषये समधिकप्रशसार्हेति । अहिंसा-कर्मविधौ च तासां सहयोगिता समधिकतरं फलं प्रसूते । आत्मसमर्पणविषये यथासमय यथायथकर्मकरणे च नारी निश्चितमेव प्रशस्यतरा ।"[1]

## रस-सम्पत्तिः

'भारत-जनकम्' देशभक्तिनिर्भरं नाटकमस्ति । अस्य नाटकस्य मुख्यभावो देशभक्तिरेव । तथापि क्वचिद् क्वचिद् शान्त-करुणरसयो. निष्पत्तिः दृश्यते । यथाहि

धराश्मशानपाल ! दुरन्तः कलिकालो
लुप्तो मम कृष्णशशी ध्वान्तास्तरणे ।
अनलो विश्वनाशी दुष्टकुलग्रासी
लक् लक् शिखोल्लासी भीमप्रभञ्जने ॥
दर्शयति हि जगज्जने लुप्त-यदुपतिं
नेष्यति यो लोप विश्वदुःखततिम् ॥[2]

महादेवस्य निधनावसरे कस्तूरबायाः विलापे करुणरसस्याभिव्यक्तिर्भवति । कस्तूरबा विलपति—

"नाहं पारयामि पुत्रं मम महादेव विस्मर्तुम् । यथास्मिन् कारागारे पुत्रो मे स्वसाधनोचितधाम गतस्तथा ममापि गमनसमय आगत इति सर्वैर्ज्ञातव्यम् ।......यस्मिन् देशे मम पुत्रो महादेव एकाकी परिभ्रमति, तस्मिन् धाम्नि गन्तुमिच्छामि ।"[3]

देशप्रेमच्छटा तु सर्वत्र एव नाटके विद्यते । तथापि कतिपयानि उद्धरणानि द्रष्टव्यानि । यथा भारतवासिना देशप्रेमभक्तिभावना प्रशंसन् नागप्पानः कथयति—

प्रतिदिनमिह मृत्योर्द्वारमायान्ति ये ये
विदधति गणना के मानवानामगीषाम् ।

---

1 भारत-जनकम् द्वादशाङ्के पृ० ४५

2 भारतजनकम् ७-४३

3 भारतजनकम् पृ० ५०, ५२, ५३

परमिह परसेवा देशसेवाञ्च कर्तु
गणयति न निजासून् ये जनास्ते तु धन्याः ।।[1]

नारायणस्वामी कथयति—

दूरे सुदूरे भारतजनन्यस्माकं चिरप्रफुल्लवदन मलिनीकृत्य विश्वगृहस्यै-कस्मिन् कोणे भिक्षुकीव छिन्नवसना दीना हीना च वर्तते। किन्तु सम्राज्ञी सा कथं तथा तिष्ठतु।[2]

## भाषा-शैली

भारतजनकनाटकस्य भाषा परिमार्जिता, सरला, प्रसादगुणयुक्ता चास्ति। भाषायाः दुरूहता नास्त्येव। लघुवाक्यविन्यासस्य सौन्दर्य सर्वत्र राजते।

नाटके स्वाभाविकरीत्या समागतानामुपमानुप्रासरूपकालंकाराणा समायोजनं प्रभावशालि वर्तते। यथा रूपकालङ्कार

सत्य हि नित्य ज्वलनस्वभावम्
असत्यधूमेन वृत कथञ्चित् ।
चिर न तिष्ठत्यलुप्तदीप्ति
प्राप्तेऽवकाशे लभते स्वरूपम् ।।[3]

उपमा-रूपके

पश्यैकतोऽध्यात्मसुखैकनिघ्न गान्धी गभीराम्बुधिवद् विशुद्धम् ।
अथान्यतो जागत-सौख्यसारान् श्वेताङ्गधूर्तापसदांश्च पश्य ।।

अनुप्रासालङ्कारः

संसारकारागारे भ्रमन् रे द्वारे द्वारेऽनुसदधामि प्राणपतिम् ।
कृष्णतमालवरं वर्णधनशिखिवर गिरि गोवर्धनम् ।
पश्यामि कथं नाद्य नील – विश्वपतिम् ।।[5]
राधिकाराधनानन्द यशोदाप्राणमुन्दरम् ।
क्रीडालोलं विघूर्णन्त बालकृष्ण नमाम्यहम् ।।[6]

---

1 भारत जनकम् ७.४०
2 ,, ,, सप्तमाङ्के पृ० २६
3 ,, ,, ३.१७
4 ,, ,, ३.१५
5 भारत-जनकम् ७.४२
6 ,, ,, ७.५०

# अश्रु-विसर्जनम्

याद्वेश्वर-तर्करत्नः

'अश्रु-विसर्जनम्' इति काव्ये विषयान्तरेषु ऊनविंश-शताब्दस्य काशीनगर्याः सांस्कृतिकप्रगमनस्य गोचरीकृतं वर्णनं विद्यते । अनुसन्धित्सूनां कृतेऽस्य काव्यस्य महतीमुपयोगितामाकलय्य दुर्लभतां च समीक्ष्य सागरिकायां प्रकाशनं समारब्धमस्माभिः । पुस्तकमिदं प्रथमवारं रङ्गपुर-नगर-निवासिन्याः श्रीमत्या महाराज्ञ्याः शरत्सुन्दरी-देव्या महोदयायाः साहाय्येन श्रीमता वृन्दावन-भट्टाचार्येण १६५७ संवत्सरे कलिकाता-राजधान्यां प्रकाशितम् ।

—सम्पादकः

# अश्रु-विसर्जनम्

एषा धन्या धरणि–युवतेः केशसीमन्तसीम्नः
स्निग्धज्योतिर्जयति नितरां रम्यसिन्दूरबिन्दुः ।
काशी यत्र त्रिपुरजयिनो हैमवत्या विलास–
श्चन्द्रार्धार्धाकृति–सुरधुनी यत्पुरस्ताच्चकास्ति ॥ १

अङ्के येयं विलसति भुवः कन्यकाकम्रमूर्ति-
र्गङ्गाकाञ्चीक्वणनमधुरा धूलिका-धूसराङ्गी ।
हिल्लोलेनाम्बुभवमरुतः स्वाङ्गमान्दोलयन्ती-
वोद्यानानां स्फुटसुमनसां सस्मितोष्ठाधरेव ॥ २

द्वाभ्यां दोर्भ्यां सदसिवरणाभ्यां भवानीव भर्त्तु-
र्या भूमूर्त्योरसि सुरसरिच्चन्द्रचूडोपगूढा ।
गाढं बद्धा दृढमपि सदाश्लिष्यपुष्पप्रहासा
गङ्गाम्बूनां प्रचलपृषतैः स्वेदसिक्तेव गौरी ॥ ३

गङ्गोत्तुङ्गै - र्भुजग-रुचिभिर्भङ्गिमद्भिस्तरङ्गै-
रुन्मत्तेव द्रुततरगतिः प्रस्थिताऽपि स्मरन्ती ।
उल्लङ्घ्याद्रीन् दयितजलधिं फेनिलोद्दिश्य सद्यः
प्रत्यावृत्योत्तरवरमुखी यां चिरं चुम्बतीव ॥ ४

येयं विश्वेश्वरविरचिता नन्दनेनापि वन्द्या
नन्दोद्यानं भुवि विजयते रक्षितं भैरवेण ।
यस्मिन् नार्य्यो विकसित-लसदवक्त्रनेत्रप्रसूना
वल्ल्यो विद्याकुसुमतरवः पुरुषाश्च स्फुरन्ति ॥ ५

यस्योद्यानस्य च खलु पुरो जाह्नवीयं प्रणाली
यस्या मीना रजतरुचयो निर्भया सञ्चरन्ति ।
गोधूमेनोज्जनितवटिका दाक्षिणात्यैर्विसृष्टा
दाक्षिण्यैस्तेऽपि च जलझषा. सादरं भक्षयन्ति ।। ६

या धौताभिर्धवलसुधया शुभ्रसौधावलीभि·
पुञ्जीभूता इव विलसिता गाढभूता. हिमान्य: ।
दीर्घा वक्राकृतय इव या लक्षणीया· पुरस्तात्·
तासा कैश्चिद् विगलितहिमैर्जायते जाह्नवीव ।। ७

उड्डीनोर्ध्वे वियति धवला श्रेणिबद्धा बलाका
निम्ने गङ्गा मुरहरपदागुष्ठतो नि सरन्ती ।
श्यामे भूमेरुरसि धवला भारताख्या दधत्या
यस्या· पुण्याश्चलति जलधौ वेष्टयित्वार्धभागम् ।। ८

अग्रे रौप्योज्ज्वलजलवहा जाह्नवी वारिपूतै:
स्पृष्टाँल्लोकान् क्षरितदुरितान् मारुतै: संविधाय ।
उद्वाह्यैवोरसि च नरकाद् घोरससारनाम्न·
सोपानाना विपुलघटया यत्र सम्प्रेरयन्ती ।। ९

चन्द्राकाराममरसरितं गाङ्गगर्भोर्ध्वदेशे
विन्दु व्यासेश्वरमपि शिव व्यासकाश्या वसन्तम् ।
या बिभ्राणा स्वशिरसि किलौङ्कारवर्णस्वरूपा
या भूपाद्या मनुजनिवहा मृत्युभीता भजन्ते ।। १०

ऊर्ध्वान्मूर्ध्न: क्रममधिगतं सर्वत· सर्वथोच्चै-
र्दूराल्लक्ष्यामवनतनभो यां भुवं चुम्बतीव ।
सौधा: स्वोपर्युपरिविलसच्छ्रेणिबद्धा: सुनद्धा
दृश्यन्तेऽभ्रा इव भवभुवा व्योम सीव्यन्त एव ।। ११

मेघोन्मुक्ते विलसति नभोमण्डलप्रान्तदेशे
दिष्ट्योदीच्यामिव हिमगिरे श्रेणय श्रृंगकाणाम्।
शुभ्रा विभ्राजितनवसुधा धौतनां सौधधारा
बिभ्राणास्तास्त्रिपुरजयिनो यत्र भूमौ विभान्ति ।। १२

संशोभन्ते शिवमठघटा-शीर्षनद्धाः पताका.
पट्पञ्चत्रिद्वितलनिलयानन्तरा चान्तरा च ।
वह्निज्वाला कनकघटिता शातकुम्भा इव कुम्भा
शुभ्रानभ्रानिव रविकरा बिभ्रतश्चूर्णरागम् ।। १३

कायान् स्वच्छैः स्फटिकसदृशैरुत्तरङ्गैः स्फुटद्भि-
र्गङ्गा भङ्ग्योत्तरमुखतया प्राणिनां संस्थितानाम् ।
यत्रोदीच्या दिशि शशिनिभा भासमानान् वहन्ती
स्मेरास्या किं कथयति यम नापि चैते विशस्ते ।। १४

दातु काश्या प्रपतितवतः कर्णमूले मुमूर्षो-
र्मन्त्रं तारं ह्यवनतमुखस्यैव मूर्ध्न. पपात ।
गौरीभर्त्तुः किल शशिकलोद्धर्तुकामस्य यस्यां
गङ्गाभग्या विलसति पुर. सा चिरं चन्द्ररेखा ।। १५

उन्मज्ज्यैव त्रिदशसरितस्तोयराशेः पठन्त-
स्तस्याः स्तोत्रं ह्यरुणितदिशं वासवस्यावलोक्य ।
दृष्ट्वा गंगा स्फटिकधवलामुत्तरङ्गैर्भुजङ्गैः
स्तुल्यैर्भक्त्या सजलनयना यत्र ते पुण्यवन्तः ।। १६

यस्या गंगाम्ब्ववतरणिकामूलनद्धेषु दीर्घे-
ष्वम्भोलग्नेषु तरुफलकेष्वासनेषूपविष्टाः
भक्त्या विप्रा विधृततिलकाः प्रारभन्ते तु यावत
सूर्यायार्घाञ्जलिजलमुपादाय दातु विलोक्य ।। १७

तावद्देवो रविरुदयते शक्यते तद् ग्रहीतुं
रागारक्तस्त्रिदशतटिनी - पारतीरावनिस्थः ।
अर्घ्याधारान् स्पृशति च मुहुस्तैः सहस्रैः कराणा-
मुन्मुक्ताना किल सुरधुनीवक्षसा चालितानाम् ॥ १८

यस्या गाङ्गादुपरि सलिलाद् भ्राजते चण्डभानुः
स्वर्णस्थालीमुषसि सरितोऽर्णोऽन्तरा मज्जयित्वा ।
प्रक्ष्याल्येव प्रकृति-युवतिर्विश्वनाथस्य चेटी
तस्मादुत्तोलयति चतुरा प्रत्यहं दृश्यतेऽत्र ॥ १९

गगास्पृष्टे लसति वियतः प्रान्तदेशे दिनेशः
शंके लग्नं चिरविरचिते चेन्द्रनीलेन कुड्ये ।
शुभ्रास्थानास्तरणवसनेनान्विते हेमसृष्टं
विम्बाकार पशुपतिघटीयन्त्रमेतच्चकास्ति ॥ २०

व्योमव्याजान्मधुरिपुरय दक्षिणस्यां शिरः स्वं
कृत्वा शेते भुजगशयनो वामपार्श्वेन सिन्धौ ।
क्षीरोदाब्धेर्हरिपरिवृतस्यायमशः पुरस्तात्
नो गगा नो रविरपि गलाल्लम्बितः कौस्तुभोऽयम् ॥ २१

किं पूर्वा दिक् किल दिनकरव्याजतः स्वर्णमुद्रां
रुद्रस्याङ्घ्रौ विकिरति तथा व्योममूर्त्तेः प्रणम्य ।
नित्यं प्रात सुरपतिदिशो व्यापृतिं तां विलोक्य
स्मेरास्येय स्फुरति परितः काशिका जाह्नवीव ॥ २२

प्रातर्गङ्गाम्भसि युवतयस्तीरसोपानलग्ने
मग्नाः कण्ठावधि सुनयनाः सूर्यमालोकयन्ति ।
तासां स्मेराननरचनया लोचनाना प्रपातैः
सूरं दृष्ट्वा सरसिजवनान्यत्र शङ्के स्फुटन्ति ॥ २३

आमज्ज्यैवाम्भसि युवतयस्तप्तहेमावदाता
आवक्षस्ता रजतधवलोद्भासिवीचिप्रवाहैः ।
स्पृष्टा नद्याश्छुरितचपलैर्यत्र सूरप्रभाभि-
र्भासो रौप्यैरिव कवलिता भान्ति जाम्बूनदानाम् ॥ २४

सायं प्रत्यूषसि च परितः प्रत्यहं काशिकायां
घण्टाकांस्यध्वनिभिरसकृत् झङ्कृतैर्झर्झराणाम् ।
देवागारेष्वथ खलु घटा यत्र निर्मञ्छनाना
धूपैर्दीपैर्धवलविलसच्चामरान्दोलनेन ॥ २५

यस्यां नित्योत्सवरचनया लोकनेत्रोत्सवानां
संवर्धन्ते पथि पथि चिरं हेतवः पण्यमालाः ।
वालालीनां सनयनमनोहारिपञ्चालिकाना
यत्र श्रेण्यः प्रकृतफलवन्मृण्मयानां फलानाम् ॥ २६

दीर्घागारेषु बहुषु सतां काकिनाराजमुख्य-
क्ष्माधीशानां धवलयशसामन्नसत्राणि यत्र ।
येषु प्रायो दशमघटिकाभ्यन्तरे लोकयात्रा
संश्रूयन्ते वचननिवहा दीयतां भुज्यताञ्च ॥ २७

एको विद्यालय इह महान् संस्कृतव्याहृतानां
सम्राज्ञ्याङ्गरवनिगुरुभिर्यत्र नित्य चकास्ति ।
विद्यागारे किल विलसतो द्वे च गीर्वाणवाण्याः
कश्मीराणामपि नरपतेद्वारवङ्गाधिपस्य ॥ २८

घण्टामार्गे नवघनघटाध्वानमुत्पाद्य तीव्रै-
रश्वैः शश्वद्गुरुगजनिभैर्योजितस्यन्दनानि ।
धावन्त्युच्चैः पथिकनिवहान् यत्र कुर्वन्ति भीतान्
येष्वारूढा भ्रमणचतुरा गण्यमान्या व्रजन्ति ॥ २९

सेयं काशी भवजलनिधेर्योजिकेव प्रणाली
गन्तव्योऽन्यो भवजलनिधिर्निस्तरङ्गोऽनयैव ।
यस्मिन् गौरी किल शशिकला वाडवो नेत्रवह्नि-
र्दग्धः कामः समजनि यतो यत्र गङ्गाप्रपातः ॥ ३०

दुर्गादोर्भिर्भुजगपतयोऽलङ्कृता रत्नजातैः
क्रीडन्तीव द्युमणिसदृशैर्भूषणैर्भूषितैश्च ।
योऽयं साक्षादमृतपयसा राशिरेको महीयान्
यस्यार्धेऽद्धा हरिरपि भजन् योगनिद्रा शयान ॥ ३१

सीमन्तिन्यो हरिणनयनाः शातकुम्भोज्ज्वलाङ्ग्यः
स्नाता गङ्गाम्भसि च चपला बालिका वा जरत्यः ।
बाला वृद्धा पथि पथि चिरं यान्ति तस्या युवान
कृत्वा पाणौ सुरगणमठान् गर्गरी - पञ्चपात्रे ॥ ३२

गङ्गावक्षस्यपि तरिघटा भासमाना व्रजन्ति
स्तोकं तस्या द्रुतमपि जरन्मङ्गलाख्योत्सवेषु ।
तासां वक्षस्यपि सुवदनाश्चारुकण्ठ्यो युवत्यो
नृत्यत्यासामपि सुनयनैर्भ्रूलतापाणिपादम् ॥ ३३

किन्नर्यः सुस्वरघटनया कोकिलाश्च प्रसिद्धा
नासां रूपं त्वपि च मधुरैः सुस्वराणां प्रवाहैः ।
गायन्त्युच्चैः सुरसरिदुरोनौषु सद्गायिकाना
श्रेण्यो धन्या. सुललितपदं रूपलावण्यवत्यः ॥ ३४

उत्तिष्ठन्त्य. स्वरसुललिता गीतयो वीचयस्ता
गङ्गाभङ्गा इव विधुमुखाद्भासयन्तो मनांसि ।
यूनां तादृक् चपलनयनैर्गायिकाना सुनेत्रैः-
क्रीडन्त्यासा सुनववयसामङ्गलावण्यभङ्गाः ॥ ३५

तासां तादृक् स्वरसुललितैरुच्चगीतिप्रवाहै-
र्नृत्यन्तीनां विगलदमृतैर्मूर्च्छनामूर्च्छितैश्च ।
मन्ये विष्णोर्द्रवमयतनोर्जाह्नवीमूर्तिकाया
नाद्याप्यस्या भवति च पुनर्गाढतोज्जृम्भितायाः ॥ ३६

आयाता येऽखिलजनपदाद् ये च काश्यां वसन्त-
स्ते ते धौता इव हरपुरश्चन्द्रसूर्योपरागे ।
गङ्गागर्भे द्रुतमवतरन्त्येव वारिप्रवाहा
वर्षा जाता इव किल भुवोमण्डलात् खातमध्ये ॥ ३७

आगङ्गाम्भोऽम्ब्वतरणिकाश्रेणिषु श्रेणिबद्धाः
प्रासादानां जलधरघटाचूम्बिचूडान्तमेषाम् ।
प्रोद्यद्दीपावलय इह तास्तत्र दीपान्वितायां
भ्राजन्तेऽस्या सरिति च तथोद्दीप्तकाशी सृजन्त्यः ॥ ३८

ताभिर्दीपावलिभिरिव सा काशिकेयं तदानी-
मापादाग्रं विलसदुरसि स्मेरवक्त्रा बिभर्त्ति ।
कण्ठाद्विद्युद्द्युतिमणिमयीः श्रेणिका मालिकानां
गङ्गावक्षस्यपि सुमुकुरे स्व पुनः पश्यतीव ॥ ३९

तस्यामस्या क्वचन निपुणास्तन्तुवायाः स्वकाय-
श्रान्त्या सूक्ष्मैश्छुरितघटितैर्हाटकैः शाटिकास्ताः ।
कुर्वन्त्यन्यत्र च न सुलभास्तन्तुभिः कोशजातै-
र्विद्युद्द्योतैरिव विजडिता श्यामला मेघमालाः ॥ ४०

ब्रह्म ब्रह्मव्रतवदनतः शिक्ष्यते गीयमानं
कैश्चिद् विद्यार्थिभिरतितरां क्वापि वा तत् सुताभ्याम् ।
अभ्यस्यन्ते पटु बटुगणैरङ्गजातानि सम्यक्
तैस्तैस्तस्य स्मृतिधृतियुतैर्ब्रह्मचर्यं व्रजद्भिः ॥ ४१

गीयन्ते वा क्वचन बटुभिर्नाम सामान्यमुष्या-
मुच्चार्यन्ते सघनजटया कुत्रचिद् वा यजूषि ।
सम्पठ्यन्ते क्वचन च ऋचस्तादृशैः सुस्वरैर्वा
शिक्ष्यन्ते वा गुरुवदनतोऽप्यर्थजातानि तासाम् ।। ४२

सम्पठ्यन्ते क्वचन च पुराणानि मेधाविभिर्वा
व्याख्यायन्ते क्वचन च मधुस्राविमिष्टस्वरेण ।
संश्रूयन्ते विषयकुशलैः प्रस्थितैः ससृतिभ्यो
भक्त्युद्रिक्तैः क्वचन मधुरं स्तूयते चन्द्रचूडः ।। ४३

कुत्राऽप्यत्र त्रिनयनवधूस्निग्धमूर्त्या सकाशे
सङ्गीयन्ते विधुवदनया सुस्वरैस्तत्पदानि ।
भैरव्या वा सुललिततया रक्तवस्त्रं दधत्या
देवी देवीमिव विलसति श्रावयन्ती स्वगीती ।। ४४

भक्त्युन्मादैः पथि पथि महानन्दितैर्दत्ततालैः
सङ्कीर्त्यन्ते हरिगुणकथा ऊर्ध्वदोर्भिर्व्रजद्भिः ।
वाद्यैर्वंशीनिनदसहितैर्झर्झरीणा मृदङ्ग-
ध्वानैरद्धाध्वनि च पतितैर्नृत्यवद्भिर्लुठद्भिः ।। ४५

स्निग्धच्छात्रैर्गुरुनिवसतौ कुत्रचित् पाणिनीय
तद्भाष्य वा विमलमतिभिः पठ्यते सानुरागम् ।
वङ्गीयैर्वा क्वचन हरनाथादिविद्वत्सकाशात्
नव्य वा व्याकरणमभितो गृह्यते मुग्धबोधम् ।। ४६

भारत्या वा कविजननुतिप्रह्वयाभ्यर्चितायाः
श्रूयन्तेऽस्यां क्वचन समन कर्णपीयूषधाराः ।
पादन्यासात् सुललितपदादुत्थितानां मनोज्ञा-
लकाराणां ध्वनय इह यैर्नीयते स्वर्नृलोकः ।। ४७

क्वापि न्यायोत्तरलजलधेरुत्थितैरुत्तरङ्गै-
रावर्त्यन्ते परिणतधियोऽन्यत्र जातश्रमा ये ।
ध्यानेनाद्धा परमपुरुषो लभ्यते यादृशेन
न्यायाभावेऽपि स न सुलभस्तादृशेन श्रमेण ।। ४८

अत्रैवाऽस्ति प्रणिहितधिया वीक्ष्यतेऽत्रैव नास्त्य-
त्यन्ताभावोऽप्यज इव जनिध्वसशून्यो विभाति ।
तत् प्रत्यक्ष भवति कुरुते भाववन् सोऽपि कार्य
धन्या दृष्टिर्भुवि विजयते नव्यनैयायिकानाम् ।। ४६

वेदान्ताना क्वचन पठनं स्वामिनां सन्मठेषु
ज्ञेया भ्रान्तिर्भवति हि यया दृश्यते विश्वमेतत् ।
भ्रान्त्या सर्वं विलसति जगत् त्वञ्च नाहञ्च नास्मि
भ्रान्तिर्नास्मिन् मम निगदिते केवल श्रूयते यत् ।। ५०

सांख्यानां वा क्वचन पठन क्वापि पातञ्जलानां
मीमासा वा क्वचन निपुणैः पठ्यते जैमिनीया ।
क्वापि ज्योतिर्घटितमपरैः शिक्ष्यते शास्त्रजातं
कैश्चिज्ज्योतिः सुभगनयनैर्दृश्यते मानगेहे ।। ५१

योगिन्योऽन्याः क्वचन निपुणा लोचने भ्रूलतान्तः
पश्यन्त्येवाऽनिशमनिमिषे चन्द्रचूड निवेश्य ।
भ्रूक्षेपेणोत्कलितमञ्जल केनचिद् येन यासां
तासां दृग्भ्यामपि स भगवान् बध्यते भ्रूलताभ्याम् ।। ५२

यासामाज्ञावह इव मरुत् सुस्थिरः स्वैरभावं
स्वं चापल्यं किल परिहरन् वर्तते शीलयुक्तः ।
भज्यन्ते ते गुरुविटपिन. सौधजालानि येन
प्रोत्क्षिप्यन्ते सकलसरिता मालया सिन्धवोऽपि ।। ५३

क्वापि श्यामाचरणशरण: कोऽपि योगी विकोपी
भ्रूचापान्त. शरमिव चिरं योजयन्नेकदृष्टिम् ।
गाण्डीवीव द्रुपदतनयां चेतना लब्धुकामो
लक्ष्य भेत्तुं रहसि यतते निश्चलो निस्तरङ्ग. ।। ५४

विद्युन्माला जलधितनया वायवोऽपि प्रमत्ता.
प्रोत्सृज्य स्वामपि चपलतामत्र कुत्राऽपि भान्ति ।
आद्यास्त्वन्त: पुरमधिगता योगिना ते कनिष्ठा
काश्यामस्यामपि धनवता मध्यमा मन्दिरान्त. ।। ५५

क्वापि श्यामो नवजलधरो राधयालिङ्गिताङ्ग.
क्वापि श्यामा शवनिभशिवोर.स्थले भ्राजमाना ।
चाप विभ्रज्जनकतनयावल्लभ· क्वापि रामो
दुर्गा क्वापि त्रिनयनमनोहारिणी सङ्कटापि ।। ५६

लक्ष्मी: क्वापि स्फुटशतदलस्मेरवक्त्रा सुनेत्रा
क्वापि ब्राह्मी सितसरसिजप्रेक्षणीया विभाति ।
वाण्या लक्ष्म्या विलसति पुनर्माधव: केशवोऽपि
क्वापि श्रीमाञ्जयति नितरां भैरव: कालनामा ।। ५७

हेरम्बोऽपि क्वचन बहुधा ढुण्डिराजादिमूर्त्या
नानास्थाने विलसति पुनर्लिङ्गरूपी महेशः ।
देवोऽगस्त्येश्वर इह पुरो भाति केदारनाथो
वीरेशादि ज्वर-हर-हरः पुष्पदन्तेश्वरोऽपि ।। ५८

क्वाप्युद्दीप्ता विलसति चिरं नायिका योगिनीनां
गङ्गारोधोधवलभवनाभ्यन्तरे शीतलापि ।
एकं सिन्धुह्रदनदनदीनामभिः स्थानभेदात्
तैस्तैः शब्दैर्जलमिव शिवब्रह्म सम्भिद्यतेऽत्र ।। ५९

नाना वस्तूनि च बहुफलान्याददाना· सुगन्धैः
पूर्णं पात्रं बृहदपि पुनर्निर्गता नाटकुद्याः ।
शम्भो शम्भो शिव शिव वच सुस्वरं व्याहरन्तः
सन्तः शान्ता कति कति पय पूर्णकुम्भान् वहन्त. ।। ६०

रात्रेरेकप्रहरसमये धूलिपादा विशुद्धा
विश्वेशस्य प्रतिनिशममी यान्ति निर्मञ्छनाय ।
भक्ता भक्तिप्रणतिकुशला कण्ठलग्नोत्तरीया-
स्तस्यामस्या किल बहुजना भस्मभिर्भूषिताङ्गाः ।। ६१

काश्या विश्वेश्वर-पुरहरो भाति नित्यं त्रिनेत्रो
देवो यस्योपरि सुरगणैं स्तूयमानस्य शम्भोः ।
हेम्नो दाम्ना मठघटनया मूर्तकीर्तिप्रचारो
जज्ञे राज्ञो भुवि रणजितः सिंहविक्रान्तशक्तेः ।। ६२

दध्नाज्येनापि च सुपयसा धारया स्नापयित्वा
लिङ्गं गाङ्गैर्धवलसलिलैर्यत्र विश्वेश्वरस्य ।
धन्याः स्तोत्रं सुललितपदं सुस्वरं भक्तिमन्तो
गायन्त्युच्चैर्हरहरहर व्याहरन्तो रजन्याम् ।। ६३

दग्भ्यि. सर्वाभ्य इव युगपत्तावदैन्द्रीमुखीभ्यः
प्रागत्याग्रे शिव शिव वचो व्याहरन्त. समन्तात् ।
ते ते धन्या गलदविरल-प्रेमनेत्राम्बुधारा-
स्त विश्वेश कुसुममुकुटं यत्र नीराजयन्ति ।। ६४

कर्पूरैरुच्छलितहविषा ज्वालिता दीपमाला-
श्छन्दोबन्धैरिव बहुविधैर्घूर्णयन्तोऽपि धूपान् ।
इन्द्राद्यैः किं दिगधिपतिभिः प्रेषितास्ते पुरोधो-
व्राता विश्वेश्वरमभिमुखं तैर्हि नीराजयन्ति ।। ६५

गायन्त्यन्ये डमरुनिनदैर्डिण्डिमैर्गण्डवाद्यै-
र्नृत्यन्त्यन्ये प्रशिथिलपदैर्हस्ततालं ददाना. ।
येषां भावोच्छलितमनसां व्यापृतिं तां विलोक्य
ग्राव्णां धारा गलति च मुहु. किं पुन प्राणवन्त. ।। ६६

भक्त्युद्रिक्ता कनककिरणाः भावसंसिक्तचित्ता
नार्यो हेमाभरणविभूतैर्हीरकैर्द्योतमाना. ।
कुर्वन्त्यग्र्या गिरिशशिरसि स्मेरवक्त्रारविन्दा
देव्य. स्वर्गादिव भुवि गता. पुष्पवृष्टिं समन्तात् ।। ६७

नार्यो गौर्या प्रतिभुव इव भ्रुलतानां विलासै.
सज्जीकृत्येव च सुनयना कार्मुकाणां सहस्रम्
दृष्टिव्याजात् कुसुमविशिखान् कामसेनाः समन्ताद्
वर्षन्तीव स्मरहरशिरस्तत्र कृत्वा शरव्यम् ।। ६८

वृन्दाराण्या' स्मितसुमनसामञ्जलीनां सहस्रै-
रक्ष्णोर्भङ्गोत्पलकुलघटामालयाभ्यर्चितस्य ।
प्रासादोऽय स्फुरति डिमिलेशस्य राज्ञ. पुरस्ता-
द्दीर्घोऽप्युच्चैरिह किल महान् जानकीवल्लभस्य ।। ६९

वंशीनादः सुरवसतिषु ह्यन्नसत्रेषु तादृग्
यामे यामे भवति मृदुलो यामिनीवासरेषु ।
ध्वानैः सार्द्धं मुदिरमधुरैर्मेदुरैर्दुन्दुभीनां
यस्मिन् लभ्या भ्रमरयुवतेर्झङ्कृतिः कोकिलाभिः ।। ७०

भूमिस्वामी भुवनवलये योऽन्नदादिप्रसादे-
त्याख्यां धत्ते पुरहरघनश्यामरामैकभक्तः ।
हर्म्यं धर्म्यं खलु विजयते यत्र घर्मांशुबिम्बं
युक्तं तेजो विकिरति चिरं तत्र तद्दृश्यते न ।। ७१

प्रासादेऽस्मिन्ननुदिनमियं ज्येष्ठतातस्य पत्नी
लक्ष्मी. साक्षादिव विजयते तस्य नारायणस्य ।
मूर्त्ति. प्रोद्यत्कनककिरणा किन्नु नारायणीयं
संस्मृत्यास्या स्पृशति चरणौ जाह्नवी विष्णुपादौ ।। ७२

कालीमूर्ति परिहृतवती श्रीप्रसन्नादिमय्या-
ख्या या गौरी तनुमिह यदा बिभ्रती स्वीकरोति ।
सकुच्याङ्गं रहसि म तदा वामबाहो कफोणौ
तस्या मातुर्निवसति चिर कालिमा कालिकायाः ।। ७३

अस्यां काश्यां भवजलनिधेस्तीरभूमौ प्रपन्ना–
नुद्धर्तु किं यमभयजडान् मोहिनी तां सुमूर्तिम् ।
स्वां स्वीकुर्वन्नमृतमधुनाप्यन्नदानच्छलेन
व्याजेनास्या विकिरति हरिर्मानवेभ्योऽपि तेभ्यः ।। ७४

सौन्दर्य वा निखिलजगतो हीरकाणां द्युति वा
लावण्यं वाऽप्यमृतलहरी चद्रिका वा तथेन्दो· ।
आनन्द वा सकलविषयं कल्पना वा कवित्वं
सौगन्ध्यं वा कुसुमनिवहस्यापि सगृह्य यस्याः ।। ७५

नो जानीमः कथमपि तथा गाढतायां निवेश्योत्-
कीर्ण यस्या वपुरिव बपु सज्जितं विश्वधात्रा ।
नेत्रै पद्माञ्जलिभिरसकृन् पूज्यते यत् समन्तात्
सर्वैर्देवै सुरयुवतिभिर्मानवीमानवैश्च ।। ७६

या रुद्राण्या ह्यसितवपुषश्चित्रमस्या न भिन्ना
माताऽस्माक स्मितयुतमुखी दीप्यते चारुनेत्रा ।
अन्तःकृष्णा सदयहृदया गौरमूर्ति दधाना
पाणी पादौ शतदलनिभौ विद्यमानौ च यस्याः ।। ७७

यां भूमूर्त्योरसि स रसिकश्चन्द्रचूडो दधान.
श्यामास्पर्शाननुभवति कि विस्मितः सस्मित. सन् ।
स्पृष्ट्वा देवो रविजलमरुद्व्योमसोमादिमूर्त्या
या ता दुर्गा स्मरति भगवान् पञ्चवक्त्रः कृतार्थ. ।। ७८

रामोरस्कामुरसि दधती काशिका कृष्णकण्ठी
ता कि मूर्त्ति किल पशुपतेर्मन्यमानाऽद्य हृष्टा ।
दग्ध्वा काम भुवि विजयते चारुचन्द्रार्धभाला
ज्योत्स्नागौरी सुभुजभुजगा या वृषाधिष्ठितास्ति ।। ७९

लेभे योमाचरणजनि शं हारि सिद्धेश्वरी यद्
वक्त्रं नेत्र मदनदहन चारु यस्या विलोक्य ।
स्मेरास्याऽभूच्चरणकमल शूलचिह्नञ्च पाणि
यस्या. श्यामा स्पृशति हृदय चेष्टितैस्तैरुदारैः ।। ८०

येयं गङ्गा दुरितहरणादन्नपूर्णान्नदाना-
ल्लक्ष्मी साक्षाद् वसुवितरणात् कीर्त्यते सर्वलोकैः ।
विश्वेषा नः सदयहृदया मातृता विभ्रती या
गर्भोद्भूतं जगति सुषुवे नैव गौरीव सूनुम् ।। ८१

या राधावल्लभधृतपदामित्रकन्या तटिन्या
गङ्गाया वा निवसति तटे सर्वकर्त्र्यन्नपूर्णा ।
येयं नारायणकृतनतिस्तप्तहेमावदाता
दातारोऽपि प्रणति-कुशला भिक्षवो यत्पदाब्जम् ।।८२

लक्ष्मीर्यस्याश्चरणकमलस्याग्रतो भाति नित्य
सौदामिन्यां स्फुरणमपि यत् यन्महिम्ना चकास्ति ।
योगेशो या हृतधृतमरुद् ध्यायति ध्येयमूर्त्ति
यस्याः पादौ प्रणमति चिरं जानकीवल्लभोऽपि ।। ८३

यस्याः स्नेहो निपतति सुतप्रख्यरामप्रसादे
सेने नित्य वसति वसतौ सत्यपि स्वानुरक्ते ।
अग्नेरग्रे विलुठति सुरेन्द्रेण पञ्चाननोऽस्या
यत् कारुण्यं पुलिनविपिने पादपद्मार्पणेन ।। ८४

येयं गौरी शशधरमुखी क्वापि कालीप्रसाद-
स्मेरास्या भात्यभयवरदोन्मुक्तकेशी सुवेशा ।
छेत्तु पापासुरकुलशिर. खड्गहस्तोग्रमूर्त्ति
बिभ्रत्योष्ठाधरपुटमिय पाटल या बिभर्ति ।। ८५

यद्वामाङ्घ्रेरुपरि च तिला भान्ति रक्ता ललाटे
शुभ्रांश्चर्धे विलसति तिलो भ्रूयुगाधस्तथान्यः ।
तादृङ् मातु. स्फुरति चिबुके तैर्दनोर्नन्दनानां
भक्तानां सा वपुषि दधती शक्यते रक्तविन्दून् ।। ८६

लोपामुद्रा पतिमनुययौ सा किमु स्वर्गभूमेः
काशीलोभादिहमुनिवधूर्भूय एवावतीर्य ।
कायव्यूहानिव विदधती भर्तृकर्मप्रसक्ता
यन्माहात्म्यादिह न पतय स्वार्थकृच्छ्र लभन्ते ।।

अद्याभ्यर्चा भवति महती ढुण्ढिराजस्य तस्य
श्वो वा लक्ष्म्या. सवितुरपि वा भैरवस्यापि देव्या.।
इत्थ नित्य भवति जलधावुत्सवो वारिराशिः
स्फीतस्तस्मिन्निव जनतया वर्धते गाह्यमानः ।। ८८

प्रासादोऽय विलसति पुरो दृश्यतामन्नदाया
यो जायायाः स्मरविजयिनः शैलजाया जयायाः ।
यस्य द्वारावधि मृगदृशां सुन्दरीणां सहस्र—
व्याजेनान्नं विकिरति चिरं भिक्षुकेभ्योऽन्नपूर्णा ।। ८६

अग्रे ग्रन्थि निविडजलदप्रेक्षणीयं वहन्तं
स्नाता गङ्गाम्भसि युवतयः पृष्ठदेशे लुठन्तम् ।
नार्यो गौर्यो भववधु भव व्याहृति व्याहरन्त्यो
यस्मिन् यान्ति ध्वनितवलयाः केशभारं वहन्त्यः ।। ६०

य प्रासाद ह्युडुपतिरुच सम्यगावृत्य वृत्त्या
सघूर्णन्ते हरिणनयना. स्मेरचन्द्राननास्ताः ।
सोऽय साक्षाद् भुव इव महारत्नभूताभिराभि—
स्ताभिर्हार विरचितमिव द्योतमान दधाति ।। ६१

तस्मिन् सौधे विहसितमुखी पायसै पूर्णपात्र
वामे पाणौ गिरिशगृहिणी दक्षिणे दर्विकाञ्च ।
बिभ्राणेयं विलसति जडा यत्प्रसादादभुक्तः
खञ्जोऽप्यन्धो न खलु भवति क्वापि काश्या कदापि ।। ६२

दृष्ट्वा विष्णोरमृतकलसं बिभ्रती मूर्त्तिमग्रे
भ्रान्त कान्त स्मरहरमिवालोक्य ता मोहिनी या ।
स्वीकुर्वाणा सुरुचिरतनु तामपेक्ष्य स्मितेन
श्रीकण्ठायार्पयति सुसुधां पायसान्नच्छलेन ।। ६३

यस्या देव्या विलसदुपलैः प्राङ्गणे श्वेतकृष्णैः
प्रासादस्य ग्रथितघटिते प्रह्वया भूनताङ्गै. ।
केचिद् भक्त्याष्टभिरभिमता मातर नंनमन्ति
प्रीतिश्रद्धासहितमभितो वाग्जडा भाग्यवन्तः ।। ६४

भक्त्युद्रेकैर्गलदविरलप्रेमनेत्राम्बुधाराः
केचिद् बद्धाञ्जलिरचनया तत्र दण्डायमानाः ।
या पश्यन्तो ह्यनिमिषदृशो रोमहर्षं दधानाः
स्तोत्रेणोच्चैरवनतशिर.कन्धराः संस्तुवन्ति ।। ६५

केचित् पुष्पाञ्जलिमलिकुलैराकुलं गन्धवन्तं
सन्तः कालागुरुरमयुतं नद्धमालूरपत्रम् ।
घृष्टं स्पृष्टं सुसुरभिरसं रञ्जनं सवहन्तं
यस्या देव्याश्चरणकमले सादरं निक्षिपन्ति ।। ६६

काश्चिन्नार्योऽञ्जलिपुटधृतैः पुष्पभारैरुदारैः
सिन्दूरेणानतपृथुदृशः स्यन्दमानेन गन्धैः ।
दीपैर्धूपैः सुरभिभिरभिप्रेक्षणीयैर्दुकूलैः-
रक्तालक्तैर्विमलमुकुरैर्यामिमामर्चयन्ति ।। ६७

सर्वादृष्टप्रबलमरुतोत्पादितोद्यत्तरङ्गे
बह्वचो गौर्या इव भवजले बिम्बिनास्ता विभान्ति ।
पादौ पाणी किल भुजलते भ्रूलते लोचनाभ्यां
वक्त्रं हास्यं तदिव सकलं त्वन्यथासा कथन्नु ।। ६८

यन्निर्माल्यं मलयजरसैः सिक्तमालोलमीष-
न्माल्यं पुष्पैर्ग्रथितमुरसा तैर्धृतं प्रोद्धृतं यत् ।
कुण्डाभोध्न्यो दधति च नवा धेनवः मञ्चरन्त्य-
श्चञ्चद्दन्तैरपि रसनया वक्रया सग्रसन्ति ।। ६६

नार्यो नार्यः क्षुभितहृदयाः पुष्पदामाहरन्ति
स्तोत्रं तस्याः सुकृत-रहितास्त्वद्य ते नोच्चरन्ति ।
हा किं जातं शिव शिव वचो भग्न-कण्ठा गदन्ति
श्वासोच्छ्वासं मलिनवदना दीर्घमुष्णं त्यजन्तः ।। १००

तास्तास्तावत् स्तिमिततनवो धेनवो नो चरन्ति
स्रग्भ्यस्तासां विलसति पुनर्न प्रयासोऽद्य कस्मात् ।
चक्षुर्भ्यः किं गलति सलिलं तादृशीनां जडानां
वत्सास्तासां कथमपि पयो नो पिबन्ति स्तनेभ्यः ।। १०१

शङ्के सेयं हिमगिरिसुतामूर्तिरद्य प्रभाता-
न्नो प्रोद्भाति स्थगितकरुणा स्वप्रभाभिः प्रभावैः ।
म्लानास्येन्दु कथमपि करे दर्विकामाददाना-
म्यर्चाऽस्याः किं न भवति पुरः पुष्पकं नेक्ष्यते यत् ॥ १०२

ज्योतिः पुञ्जोज्ज्वलजलधरश्याममूर्त्तिर्भवान्या
यास्ते गङ्गाह्यमखलसत्तीर्थपुण्यैकदेशे ।
सेयं काली सजलनयना लक्ष्यते रोदितीव
भ्रान्तिः किन्न स्मितमपि मुखे नाद्य देव्या विभाति ॥ १०३

काश्यां पश्यामरकुलगुरोरङ्गिरोनन्दनस्य
स्निग्धज्योतिर्जडितमपरं सौम्यमूर्त्यावितारम् ।
सोऽय कस्माच्छिव शिवकुमारोऽद्य रोरुद्यमानो
वक्तुं नार्हत्यपि न किमपि व्याकुलो वाष्पभारैः ॥ १०४

सुब्रह्मण्यो व्रतमिह वहन् याज्ञिको याज्ञवल्क्य-
प्रख्यः साक्षाज्जयति जगति ब्रह्मनिष्ठाप्रतिष्ठः ।
ते मीमांसे चिरमनुगते यस्य पूर्वोत्तरे द्वे
सोऽप्यश्रूणा पटलविकले लोचने नाद्य मार्ष्टि ॥ १०५

योऽयं साक्षादृषिकुलगुरोर्गोतमस्यावतार-
स्तर्कस्याब्धेः किल निरवधेर्भ्राजते कर्णधारः ।
य सेवन्ते नरपतिशिरोहीरकोद्भूतभासः
सूक्ष्मे तत्त्वे विलसति मतिर्यस्य नित्यं बुधस्य ॥ १०६

ये ये वङ्गप्रमुखवसुधाखण्डतोऽध्येतुकामा
वाराणस्यां विमलमतयो यान्ति विद्यार्थिनोऽस्याम् ।
अंघ्रेर्यस्य स्पृशति न रजस्तेषु कोऽप्यस्ति किन्नु
प्रोद्यद्विद्यैः प्रणतिरचितैरर्हणैरर्चितस्य ॥ १०७

नो विच्छेदो भवति दिवसे पाठनानां कदापि
प्रायो यस्य ह्यधिगतमतेर्न्यायवैशेषिकाणां ।
मीमांसानां श्रुतिशतविरोधस्य पूर्वोत्तराणाम्
स्मार्त्तैर्ग्रन्थैरपि विलमता साख्यपातञ्जलानाम् ।। १०८

यस्यैवाङ्गादिव निरगमत् सुन्दरश्रीर्मुकुन्दो
नित्यानन्दो यमिह भजते यत् सदानन्दलाभः ।
वेद्यो वेदान्तिभिरपि तथा य पुनस्तर्कगम्यो
गङ्गेशोऽय यमिति समिति· पण्डितानां ब्रवीति ।। १०९

देव सोम स्वशिरसि सदा य सुमूर्त्तिर्बिभर्त्ति
श्रीर्यत्कण्ठे विलसति महादेवसेव्यो य एव ।
अंघ्रि यस्य प्रमथसहितो वन्दतेऽसौ सुरेन्द्रो
य राजेन्द्र. प्रणमति लसज्जानकीनाथरामः ।। ११०

यस्याङ्घ्रि श्रीकरपरिचितं पूर्णचन्द्रो दधार
श्रूयन्तेऽस्यां सहरिहरनाथादिशब्दा यतोऽद्य ।
काश्यां देव. किल परिवृतो भोगिभिर्योगिभिर्य.
साक्षाद् भक्त्या गुरुचरणतो लक्ष्यते यो जनेन ।। १११

पत्नी गौर्यर्चति च यमिम कुन्तलभ्रष्टपुष्पैः
सर्व तन्त्रं निगदितुमिव द्योतते पञ्च-वक्त्रः ।
तत्त्वं द्रष्टु सकलमिव यो जायतेऽपि त्रिनेत्रः
साक्षाद्देवः पशुपतिरिव भ्राजते योऽद्वितीयः ।। ११२

यो नो धत्ते गुरुरिव बुधोऽध्यापनायां कदापि
ग्रन्थं कश्चिन्न च नयनयोस्तत्र पातं करोति ।
कस्मान्मौनं पठनमुखरं तद्गृहं सेवतेऽद्य
स्तब्धीभूतो व्रजति च शुचं सोऽपि कैलासचन्द्रः ।। ११३

व्रात्यानां यो ह्युपनय-विधिं दर्शयन् नॄन् सहर्ष.[1]
शक्त्युत्कर्षादरचयदपि प्रेमपूर्त्ति सुमूर्त्तिः ।
टीका बह्वीर्भणितिचतुरः प्राणयत् प्रार्थ्यमानो
योऽस्य लोकांस्तरल-नयनान् प्रीणयन् विस्मितांश्च ॥ ११४

यत्सम्मानो नरपतिशिरोहीरकैरर्च्यमानो
वङ्गेष्वेतेष्वपि विलसितो वर्धते वर्धमाने ।
यो लेखन्या विजयमभजत सर्वत सर्वदिग्भ्य:
सोऽश्रूण्यस्मिन् विसृजति कथ कृच्छ्रतो रामनिश्र. ॥ ११५

योऽस्य धन्यो धनिषु विनयाभिज्ञता तामभीरु-[2]
र्नो जानाति प्रसरतितरा यस्य नित्यं कवित्वम् ।
पाषाणे वाप्ययसि पयसीवानघा यस्य बुद्धि.
सूक्ष्मप्रेक्षा प्रविशति दृढा सर्वशास्त्र-प्रतिष्ठा ॥ ११६

सामञ्जस्यं सकल-विदुषामग्रतो दर्शनानां
कर्त्तुं योऽस्य लिखति रुचिर सत्यसन्धो निबन्धम् ।
न्याय-ग्रन्थो भ्रमति भुवने वङ्गभाषासु यस्य
श्रीराजेन्द्रो विलपति कथं शास्त्ररत्नः पुरस्तात् ॥ ११७

विद्वान् धीमान् प्रमथपदभाङ् नाथ-नाम्ना प्रसिद्ध-[3]
स्तर्काद्याख्यां विलसति युवा भूषणान्ता दधान. ।
शौर्यैर्धैर्यैरुरसि कलिकाता–नगर्य्याश्चकास्ति
यः स्मार्त्ताध्यापकपदगतो राजविद्यालयेऽद्य ॥ ११८

---

1 महामहोपाध्यायस्य श्रीमतो राममिश्रशास्त्रिणो वर्णनमिदम् ।

2 श्रीमतो राजेन्द्रनारायण - शास्त्ररत्नस्य

3 श्रीमतः प्रमथनाथतर्कभूषणस्य

सूक्ष्मा बुद्धिर्विलसति सतो यस्य नित्यं समन्ता-
न्नानाशास्त्रेष्वपि गुणवतो बिभ्रतः स्निग्धमूर्त्तिम् ।
सोऽय ताराचरणतनयो हा गुरो त्व कुतोऽमी-
त्याद्यैर्वाष्पैर्विलपति कथ मिश्रितैस्तैर्वचोभि ।। ११९

छित्त्वा तर्कोपरि परिषदा धीमतामग्रभूमौ[1]
यो जीवाना प्रथित-विभुतां ग्रन्थमेक लिलेख ।
वेदान्ताना मतमपि तथोच्छिद्य विद्योतते य.
सोऽयं कस्माद् विलपतितरा हन्त राखालदास ।। १२०

ऊर्ध्वे तिष्ठन्निव हलधरो व्यापृति यस्य दृष्ट्वा
प्रीत्युत्फुल्ले नयन-कमले निश्चले द्वे दधार ।
यो विख्यातो जगति जगदीशस्य तस्यावतारो
लोके लोकैर्महति मथुरानाथ एषोऽप्यगायि ।। १२१

विद्यागारं विलसति महत् सस्कृतव्याहृताना[2]
यत् सम्राज्ञया विपुलकलिकातानगर्यान्तु गौर्या. ।
योऽध्यक्षत्वं निजभुजबलैः प्राप विप्रापकर्ष
हर्षोत्कर्षैरवनितिलको विप्रकुर्वन् हितस्य ।। १२२

आनीय स्वेऽभिमत - विषये बुद्धियुक्तिप्रभावै-
र्यः सम्राज्ञ्याः प्रतिनिधितम प्राग्वङ्गाधिप प्राक् ।
विद्योत्माहो जगदुपकृति साधयामास सम्यक्
स्थैर्य धैर्य सुदृढमनसो यस्य नित्य चकास्ति ।। १२३

---

1 म० म० श्रीमतो राखालदास - न्यायरत्नस्य
2 म० म० श्रीमतो महेशचन्द्र - न्यायरत्नस्य

सम्राजो द्वि. पठितमहता शब्दकेनादिमेनो-
पाध्यायाख्या जगति खलु यः पण्डितार्थं ससर्ज ।
तेभ्यो दत्त्वा स्वयमपि तथा तेन सम्भूषितोऽभूत्
सिन्धो रत्न [1]हरिरिव सुरेभ्योऽर्पयन् कौस्तुभेन ॥ १२४

स्मार्तैर्वैयाकरण-कृतिभिस्तार्किकैः काव्यविद्भि-
र्मीमांसाज्ञैः सदसि सतत विज्ञ-वेदान्तिकैश्च ।
सांख्याचार्यै. स स इव महाविस्मितैर्वीक्ष्यते यः
कंसागारे हरिरिव जनै रङ्ग-भूमि-प्रतिष्ठ· ॥ १२५

अभ्युत्थान यदिह भजते सस्कृताना सुशिक्षा
पूर्वारम्भस्य तु फलमिद तद्धि यस्योद्यमस्य ।
हेमन्तेऽभ्युन्नतिमतितरा शालयो यल्लभन्ते
प्रावृट्-चेष्टाफलमिदमिति ज्ञायते केन वा नो ॥ १२६

योऽयं धन्यो धरणितिलको धारया चेष्टितानां
ध्वस्तप्रायां किल दिविषदा जीवयामास भाषा ।
नैदाघेषु प्रपतितवती ताप-जातेषु तप्तां
स्निग्धां वल्लीमिव नवघनो वारि-वृष्ट्यैव दिष्टया ॥ १२७

तेषूत्तीर्णेषु च विकिरतिच्छात्रसङ्घेषु तेषां
सम्राड् येन प्रणुदित इतोऽध्यापकाना गणेषु ।
नित्य भूरि-द्रविण-निवहान् क्षेत्र-जातेषु सम्यग्
वारांधाराघन इव चिरं चालितो मारुतेन ॥ १२८

आद्या मध्यामपि दिविषदा गीर्षु विद्यार्थिनां यः
शेषोपाधेर्वितरण-विधौ तादृगन्यां परीक्षाम् ।
लेभे कीर्तिं जगति जनयन् न्यायरत्नो महेशः
सोऽयं श्रीमान् विसृजति कथ चक्षुषोऽजस्रमस्रम् ॥ १२९

---

[1] म० म० श्रीमतो गङ्गाधरशास्त्रिणः ।

सौरे राधे श्रुतिभुजमिते वासरे सूरसूनो
षण्मारास्त्रग्रहविधुमिते विक्रमादित्यवर्षे ।
किन्नो जातं हरि हरि हरि श्रूयते किं समन्तात्
हाहाकारो भुवि निवसतामुच्चशब्दो महीयान् ॥ १३५

तारः कोलाहल इह महान् श्रूयतेऽद्य प्रभाता-
दुड्डीनानां वियति विटपे तिष्ठता पक्षिणा किम् ।
पत्रात् पत्रे प्रबलमरुता चालितानां तरूणा-
माघातोत्थोऽपि च बृहदयं हन्त हा हेति रावः ॥ १३६

किं निर्घातोत्थित इव महानद्य हाहेति शब्दोऽ-
कस्मात् कस्माच्छ्रवण-विवरं हन्त नः संप्रविष्टः ।
तीरं स्पृष्ट्वा किमु सुरधुनी-नीर - वीचि-प्रवाहो
हा हा शब्दं जनयति मठात् किं हठाच्छ्रूयते सः ॥ १३७

किं दृश्यन्ते दश-हय-मखे गाङ्गतीर्थे जनानां
सर्वा श्रेण्योऽश्रुमलिनदृशो व्याकुला वेशशून्याः ।
द्रष्टुं धावन्ति च किमिव किं बालवृद्धैर्युवानो
नार्यो धैर्यच्युतिमपि परामाददाना व्रजन्ति ॥ १३८

गङ्गातोये सुवहुतरयः किं स्थिराः सन्ति तासा–
मेकस्यां किं विलसति दया-सागरोऽस्यां गुरुर्नः ।
आपादाग्रं सुरभि-कुसुमैरर्चितोऽयं विशुद्धा-
नन्दः स्वामी स्मित-युत-मुखो राजयोगासनस्थः ॥ १३९

योगारूढो निवसति तरौ श्रीगुरुः किं समाधौ
जातः किं स्वित् किल भगवतश्चेतसो वृत्तिरोधः ।
वायोर्वेगैरिव विरहितो निस्तरङ्गस्तडागो
देवो रुद्धेन्द्रियचय-रयो निश्चलस्तेन भाति ॥ १४०

तन्नो तन्नो जनपरिषदामग्रतो हट्ट-घट्टे
योगाचार्यो नट इव जनान् दर्शयत्येव योगान् ।
ह्यो घोरायां निशि निजवपुर्भौतिक हा विशुद्धा–
नन्दो हित्वा खलु भुवि ययौ श्रूयते निर्वृति सः ॥ १४१

हा हा स्वामिन् चरणकमले कि कृत तेऽपराद्धं
यस्मादस्मानिह परिहरन् भूतले प्रस्थितोऽभूः ।
विद्यार्थी ते प्रिय इति जनै कथ्यतेऽध्येतुकामा
विद्यन्तेऽमी वद वद गुरो पाठयस्यद्य किन्न ॥ १४२

नीलाद्रीणामुपरि जलदोद्भिन्न-शृङ्गे भवान्या
स्तुङ्गे कीर्तिविलसति सतो मन्दिरे यस्य राज्ञः ।
दुर्भिक्षार्त्ता नयनसलिल मार्जयन्त करौ द्वा-
वुत्तोल्योर्ध्वे किल भगवत. स्वस्ति यस्यार्थयन्ते ॥ १४३

सम्यो भूत्वा ब्रिटिश-नृपतेर्भारतानां सभाया
राज्ञ्या पुंसामपि च युगपद् यः प्रजाना मुखेभ्यः ।
नित्यं लब्ध्वा भुवि विजयते धन्यवादं पुनर्यः
स्थातु नेच्छु क्षणमपि बुधान् धीसहायो विहाय ॥* १४४

भारं यस्मै धरणिपतये भारताधीश्वरी प्राक्
प्रायच्छद् यो निगड-यमितस्तत्परीक्षोन्नतेषु ।
कश्चित्कालं यशसि जलधौ मज्जयित्वा तुषार-
द्योतान् पुंसोऽपिच निजकृतिं दर्शयन् सजहौ य. ॥ १४५

---

* वर्तमान-महाराजस्य द्वारवङ्गाधिपस्यैतानि ।

ो राजर्षिर्जनक इव सत्पण्डितानां सहस्रै-
र्ब्रह्मर्षीणामिव विलसितो मण्डितायां सभायाम् ।
श्रीरामेश्वरनरपतिर्द्वारवङ्गाधिपोऽयं
स्वामिंस्तैस्तैर्नयनसलिलैरार्द्रवक्षा दुनोति ॥ १४६

काशीकान्तः कथमपि तरौ चित्रकारेण सार्धं[1]
राज्ञः काश्या. प्रतिनिधिरसौ जानकीवल्लभस्य ।
छायालभ्यामुपविशति किं तादृशीन्ते ग्रहीतुं
हाहा स्वामिन् प्रतिकृतिमिमामास्थितां तद्दशायाम् ॥ १४७

हा हा स्वामिन् मलिनवदन. सोमनाथोऽयमस्मिन्[2]
योऽयं काश्या॰ प्रतिनिधितमो द्वारवङ्गाधिपस्य ।
हा किं देवप्रतिमप्रतिमा गाङ्गगर्भे तवास्मिन्
तां विस्रष्टुं तटमुपगतः सा क्रिया द्रक्ष्यतेऽद्य ॥ १४८

यास्यस्यस्मादवनि - वलयान्नाक-लोकं विचिन्त्य
प्राक् किं लक्ष्मीश्वरनरपतिर्द्वारवङ्गावनीश. ।
दीपालोकैः किसलयमयैस्तोरणानां सहस्रै.
सज्जीकर्तुं सुर-पुर-भुवं पुष्पभारैरगच्छन् ॥ १४९

भृङ्गाराणां नरपति-वरो भृङ्गवद् यो विलीनः[4]
शम्भोरम्भोरुहनिभपदे राजकार्यं विसृज्य ।
सोऽयं काश्यां तव विरहजं दुःखभारं न सोढुं
शक्नोत्यार्यार्यमणि चलिते पद्मवत् पश्चिमाशाम् ॥ १५०

---

1 रङ्गपुर-डिमिलाराजस्य श्रीमतो जानकीवल्लभसेनस्य काशीस्थ-वृन्दावल्लभ-काननस्य राजप्रासादस्याध्यक्ष॰ ।

2 द्वारवङ्गाधिपतेर्महाराजस्य काशीस्थ - प्रासाद - विद्यालयादेरध्यक्षः ।

3 भूतपूर्वद्वारवङ्गाधिपतिः ।

4 भृङ्गार-प्रदेशस्य राजा ।

कश्मीराणां नरपतिवर. श्रीप्रतापादिसिंहे-[1]
त्याख्यां बिभ्रद् ब्रिटिशनृपतेर्यो जयस्तम्भरूपः ।
दृष्ट्वा दूराद् यमिह हि दृढ भूप्रतिष्ठं गरिष्ठं
लोभाकृष्टोऽपि च भयमृषीकेश[2] र्प प्रयाति ॥ १५१

राज्ञो यस्याधिकृतविषया कुङ्कुमानाममंख्यैः
क्षेत्रैर्वर्षन्त्यपि बहिरिमे स्वर्णवर्णानजस्रम् ।
स्त्रीणामन्तःपुरभुवि धरा-हेम-हार-प्रभाणां
तासामङ्गद्युतिभिरनिश सुन्दरीणाञ्च तादृक् ॥ १५२

सोऽयं सूर्यान्वयभवनृपो गौरव भारतानां
धैर्यं किंचिन् कथमपि तथा नाद्य शक्नोति धातुम् ।
तं भूपालं प्रणतमथ ते पादयोर्भूकिरीट
किन्वाश्वस्त भुवि सुरगुरो सद्गिरा नो करोषि ॥ १५३

इन्द्रोरेन्द्रो विलपति शिवाजीस्तथा मिन्धियेशो
गोयालीयावनिपतिरमौ दृश्यतां सास्रनेत्रः ।
हातूयाख्यावनिपतिवधूरद्य रोदित्यजस्रं
नेत्रद्वन्द्वाद् विगलितजल धीरबन्धो सृजन्ती ॥ १५४

हित्वा वङ्गानपि स तरुण पाद-मूलं तवैव
प्राप्तो भक्तो गुरुषु गिरिजानाथ एप प्रपन्नः ।
भूकम्पेन व्यथित-हृदयो वर्त्तते काशिकायां
राजानं तं ह्युपदिशसि नो देव दीनाजपुर्याः ॥ १५५[3]

---

1 काश्मीराधिपतिमहाराजः श्रीमान् प्रतापसिंहः ।
2 राशांयाधिपतिः ।
3 दीनाजपुराणां महाराजः श्रीमान् गिरिजानाथः ।

काशीराजः प्रभुपदमुखी यो हि नारायणाख्या[1]
सिंहोपाधिर्नरपतिरयं साधु धत्ते धरित्र्याम् ।
एकं लब्ध्वा श्रुत-जल-निधिं त्वां स रत्नं महार्घ्यं
रत्न-श्रेणी-दृषदि वसद् - विक्रमार्कं जिगाय ।। १५६

तस्योपास्यः स जगति महाकालनाम्ना प्रसिद्धः
किं क्रुद्धः सस्त्रिभुवन-गुरुस्त्वां जहारोज्जहार ।
हा हा काशीनृपतिरनुसन्धानमन्ता समन्तात्
त्वां न प्राप्य श्वसिति विषमं निर्म्मणिः किं फणीव ।। १५७

साक्षाद्देवो हरभुवि भवान् नित्यमेवापराह्णे
छात्रैरन्यैरपि किल कथाव्याजतो व्याजहार ।
यां या वाचं श्रुत-विषयकस्तत्र तत्रोपदेशो
लब्धोऽस्माभिः सततमहह स्मर्यते वर्य ते सः ।। १५८

तेजःपुञ्जो वपुरतितरां तेजसा द्योतमानं
नेत्र-द्वन्द्वं वदनमपि ते भास्वरं तेजसैव ।
वाचस्तेजांसि च सुषुविरे श्रौतगीर्भिः सुनद्धाः
कस्मिन्नद्धा व्रजति विलयं सर्वमेतत्तवाद्य ।। १५९

षण्णामापद्भवति वसतेरेकराशौ ग्रहाणां[2]
सर्वं पूर्वं फलमतितरां लब्धमस्माभिरस्याः ।
इन्द्रस्त्वादृग् विलयमगमच्छ्रेष्ठ-रत्नं महार्घ्यं
स्वामिंस्त्वादृग् हृतमिति वयं स्मो दरिद्रा वराकाः ।। १६०

---

1 काशीनरेशः श्रीमान् महाराजः प्रभुनारायणसिंहः ।

2 ग्रहाणामेकस्मिन् यदि भवति षण्णां निवसति–
स्तदा गोलो योगः प्रलयपदमिन्द्रोऽपि लभते ।
नृपाणां नाशः स्याज्ज्वलति वसुधा शुष्यति नदी
भवेल्लोको रङ्कः परिहरति पुत्रञ्च जननी ।।

कि मूढानां जनपदभुवा निर्धनानां जनाना
तृष्णाशान्त्यै विमल-सलिला क्वापि वापीं चकर्थ ।
ज्ञानाम्बूना बुध-जन-गणाना तु देव ह्रदोऽभू.
स त्वं शुष्को ग्रह-गण-समावेशत. शङ्कयतेऽद्य ॥ १६१

त्वच्छोकाग्नि-ज्वलित-हृदया कातरा मातरः स्वान्
पुत्रान् कन्या अपि किसलय-प्रेक्षणीयास्त्यजन्ति ।
किं नो जान शिव शिव गुरो दृश्यतां भारतानां
पूर्वं भूत फलमहह न. कारणात् कर्मदोषात् ॥ १६२

आश्रित्य त्वन्मठमटनकं भिक्षया चक्रुरस्यां
लब्ध्वा ज्ञप्ति कति च दिवसान् पादमूलात्तवैव ।
नग्ना मग्ना यशसि जलधौ केऽपि पूजा लभन्ते
त्वन्निर्वाणावधि तु भजसे वाससो नो विसर्गम् ॥ १६३

तुल्यं वासो वपुरपि वचः सारथेः श्वेतवाह-
स्याकर्ण्येवेह हि न जहिथ प्राक् प्रपूतान्तरीयम् ।
सत्यीकर्त्तुं हरि-मुखकथामद्य कायेन तेन
त्यक्तश्चेलश्चपलमभितः किन्त्वया चञ्चलेन ॥ १६४

स्वामिन्नस्मास्तमसि च भवान् मज्जयित्वाम्बुराशौ
नो दत्त्वास्मिन्निजभुजमिव प्रावलम्ब प्रतस्थे ।
विद्याद्योद्युतिरपि ययावस्तमेकेन साकं
सूरेणेव स्तुत-कथ-दिवा भास्वता भोस्त्वयैव ॥ १६५

सर्वैर्देवैः सुरपतिमुखैः प्रार्थित. प्राग्दधीचि-
र्हित्वा देह मदुपकृतये वज्रमस्मिन् ससर्ज ।
कस्मै वज्रं जगति जनयन् केन वाभ्यर्थित सं-
स्त्यक्त्वा कायं व्रजसि भगवन् क्षिप्यतेऽस्मासु योऽसौ ॥ १६६

यामी मैत्रावरुणिरगमत्तां दिशं विन्ध्यगर्व
खर्वीकर्त्तुं विपुल-वपुषा प्रार्थितो लेखजातैः ।
प्रत्यावृत्तिर्न भवति यतस्तामुदीचीमगच्छः
कस्य ध्वस्तस्त्रिभुवनगुरो तेन घोराभिमानः ॥ १६७

आसीद्गर्वो भरतनृपतेर्भूमिखण्डस्य चण्ड-
स्त्वामासाद्य त्रुटित-सुकृतस्याऽद्य किं प्रस्थितः सन् ।
स्वामिंस्तस्य स्थगयसि सतस्त तथोच्चाऽभिमानं
न स्वातन्त्र्यं न च खलु बलं नापि बुद्धिश्च यस्य ॥ १६८

पत्नी गौरी सुहृदपि हरिर्मृत्युभीताविव द्वौ
ज्योतिर्जालैर्विजडित-वपुर्यस्य मृत्युञ्जयस्य ।
वामार्धेनाऽपि च विविशतुर्दक्षिणार्धेन तस्य
त्रस्तो मृत्योस्त्वमपि च तनूमन्तराऽद्य प्रविष्टः ॥ १६९

त्वां निष्ठ्यूतं जलधि-तनया-वल्लभोरःस्थ-हारा-
देकं रत्नं भरतनृपतेर्भाविनी भूरवाप्य ।
पस्पर्धे किं मणि-गण-शिरोरत्न-हीरद धत्या
सम्राज्ञ्याऽपि स्तुतगुणतया हारितं हा तदद्य ॥ १७०

काले घोरे वयमिह कलेर्मानवा दानवाः स्मोऽ-
स्माकं तेषां गुरुरिति भवास्त्वा कविं किं विविच्य ।
जग्रासोग्रः स गरल-गलो धूर्जटिर्व्योमकेशः
शम्भोः शुक्रः किल निरगमत् त्व तु नो निर्गतोऽभूः ॥ १७१

आन्वीक्षिक्या सह कणभुजो गीर्भुजङ्गाधिपस्य
प्राचो वाचः कपिलविदुषो योगविद्याश्च बल्ल्यः ।
द्वे मीमांसे तदुपनिषदस्त्वा महावृक्षमेकं
नो लब्ध्वा तं भुवि निपतिता हन्त हा हा लुठन्ति ॥ १७२

वाराणस्या भुवि भगवतोऽप्यागतोऽस्या कदाचिद्
भिक्षु कश्चित् सुविदितदयानन्दनाम्ना प्रसिद्धः ।
नास्तिक्यं स्मोपदिशति नरान् वेद-पूजापदेशाद्
योऽय साक्षात् कपटवचनश्चारुचार्वाक-मूर्त्तिः ।। १७३

नान्या मान्या मतमिति मनो. सहितातो विभिन्ना
गण्य रामायणमपि पुराणेपु तद् भारतञ्च ।
त्रय्य पूज्याः स्वत उपनिषन्मालिकास्ता सभाष्या
अन्ये ग्रथा शठविरचिता नाद्रियन्तेऽस्मदीयैः ।। १७४

कस्माद्देवप्रतिकृतिकृतिः केन वा सर्वलोकै—
रभ्यर्च्यन्ते जगति खलु ता पापमूलानि या हि ।
नास्ति ग्रन्थेषु च स हि विधिर्नो मयोक्तेषु नो नो
तस्माद्दूरीकुरुत परितो लिङ्गमालास्तथार्चा. ।। १७५

इत्थं बाणी खलु निरगमद् गह्वरात् तस्य वक्त्रा-
दावृत्याङ्गं स्फुटतरपदा संस्कृत-प्रच्छदेन ।
देव्याः साटीः प्रपरिदधती म्लेच्छनारीव साक्षा-
दासन् भीता बुधपरिषदः कस्तदग्र जगाम ।। १७६

काशीराजेन खलु नितरामर्थितस्यार्चितस्य
स्तोत्रैस्तादृग् विजयनगराधीश्वरेणापि तेन ।
श्रुत्वा तास्ताः प्रलपनकथाः शास्त्रयुक्तिप्रयोगैः
सो ऽप्येकस्य ह्यमितमहसस्ते परास्त प्रतस्थे ।। १७७

आसीत्त्वादृग् जगति भगवन् पण्डितानां स योद्धा
तस्मादेषा पुरहरपुरी काशिका रक्षिताभूत्
न स्यात्त्वादृग् यदि पुनरहो विश्वनाथस्य लिङ्गं
को वा पश्येत् क इह पुरतो देवता वा प्रपश्येत् ।। १७८

यन्नो चक्रे स खलु भगवान् विश्रमञ्छङ्करःप्राङ्
नाना बौद्धान् बहुजनपदाञ्छास्त्रयुक्त्या निवार्य ।
एक जित्वा जगति च दयानन्दमस्मिन् हि काले
तस्मात्तस्मादपि गुरुतर कार्यजात चकर्य ॥ १७६

अद्यागच्छेद् यदि पुनरय तादृशो वा कदाचि-
न्नानाशास्त्रेष्वपि सुनिपुणो बुद्धिमान् नास्तिकोऽन्यः ।
को वा पायादहह कवलात्तस्य दैत्रीर्हि मूर्त्ती-
र्हा नः स्वामिस्त्वयि भगवति प्रस्थिते सर्वनाश ॥ १८०

मान्धाताद्वाध्वरभवफलं भोक्तुमूर्ध्वङ्गतोऽभूद्
याते ब्रह्मात्मनि परिणतिर्भीष्मदेहस्य भस्म ।
द्रोणेनास्माद्द्रुततरमथो विद्रुतं निद्रितं वा
कर्णः पूर्णार्णवतलगतः सात्यकि. सात्त्विकात्मा ॥ १८१

सेन्द्रान् देवान् जगति जयते तोषितः कृष्णवर्त्मा
यस्मै चाप रथमपि ददौ खाण्डवेनार्पितेन ।
यत्सारथ्य जलधरवपुः कृष्णचन्द्रोऽप्यकार्षीत्
पार्थोऽपार्थोऽभवदतितरा सोऽपि गाण्डीवधन्वा ॥ १८२

योद्धारस्ते भुवनजयिनो भीति - सम्पर्कशून्या
येभ्यो भीतैस्त्रिदशपदवी प्रोज्झिता दैवतैस्तैः ।
एकेनैवामितबलभृता हन्त कालेन तेनो-
द्दीप्ता दीप्रा युधि ययुरिमे तादृशी तामवस्थाम ॥ १८३

नो न क्लेशो भवति च तथा भीष्मकर्णार्जुनादी-
नद्यो द्वीक्ष्य क्षुभितमनसा ग्राव-वद्धोरसा न ।
यादृग् जातो जगति महतः शङ्कराचार्य-मुख्यान्
सूक्ष्म-प्रेक्षा किल विदधतो नाधुनालोक्य साक्षात् ॥ १८४

आद्यो विद्वान् जगति कपिल प्रादुरासीद् धरित्र्या
अस्यास्तावन्नृपति-भरताधिष्ठिताया सुपुत्र ।
न्यायाचार्योऽभवदपि सुतो गौतम. ख्यातनामा
सूनुः षड्भि कणभुगपि च प्राक्पदार्थै कृतार्थ ॥ १८५

योगाचार्यो भुवनविदितो नागराजोऽप्यनन्तो
वेदार्थानामजनि च विनिश्चायको जैमिनिर्य. ।
ब्रह्मज्ञानार्णव इह पुरा खानितो येन सोऽभूत्
कृष्णद्वैपायन इति पुनर्व्यासनाम्ना प्रसिद्ध ॥ १८६

ते ते सर्वे मुनय इह ते तत्कथास्तामिदानी
ये ये पूर्वं कतिपय-दिनेभ्योऽभवन् भो धरण्याम् ।
ते ते धन्या जगति जरती मातर ता धरित्री-
मुत्सृज्यैव प्रकृति-कृपणा शोकसिन्धौ क्व याता ॥ १८७

आचार्योऽस्यां न च विजयते शङ्करो देव-मूर्त्ति-
र्नोगङ्गेशो न स उदयनो नाद्य वाचस्पतिश्च ।
नो वा भट्टो न च अग्रुचि पाणिनिर्दुर्गसिंहो
नाद्य स्मार्तो न खलु जगदीशादिनैयायिकास्ते ॥ १८८

एकस्येयं तव मुखमभिप्रेक्ष्य भू ख्यातनाम्नो
विस्मृत्यैतं सुत-गण-शुचः सस्मिता सुस्थिताऽभूत् ।
एकं रत्नं नो गुणिनमवनेरद्य दृष्ट्वैव तेषा
शोकाम्भोधिर्भवति स महांस्तादृगुद्वेलितश्च ॥ १८९

विद्वांसो वा विदित-चरिता भूभुजो वा महिष्यो
याः स्मर्तव्याः परमुषसि वान्याश्च धन्या धरण्याम्
आसन् ये भूमुकुट-कवयो योगिनीयोगिनो वा
प्राक्ते ते ते परभवि गता. शान्तिरस्या कथ नु ॥ १९०

दिष्टया श्यामाचरणकमल काशिकायां सरस्यां
निः स्पन्द यद्विकसितमपि स्तम्भिते मारुतेऽभूत् ।
जात पञ्चाननपरिचित हन्त तदयुक्तभृङ्ग
दृग्भ्यामन्तर्हितमथ कथ प्राग्दिनेभ्यः कियद्भ्य ॥ १९१

मातेत्याख्या भुवनविदिता या दधारोज्जहारा-
पान प्राणेष्वपि च वरणा-तीर-भूमौ गुहायाम् ।
सा योगाग्नि-प्रशमित-मला हन्त मार्तण्ड-मूनो-
दष्ट्रोन्मुक्ता हरहर ! गुरो नार्यपीय न चासीत् ॥ १९२

यस्याः कीर्त्तिर्मगधवलयेऽद्यापि तस्या गयाया
लक्ष्मीभर्त्तुश्चरण-कमलाङ्कोपरि स्पष्टमुच्चैः ।
प्रासादोऽय सुदृढ-दृशदा नाट-गेहेन सार्द्धं
काश्यामस्यामपि विजयते भूरिदेयान्नसत्रम् ॥ १९३

इन्दोरेशे खलु नरपतौ स्वामिनि स्वः प्रयातेऽ-
हल्या हालाहलमिव निज राज्य-भारं विसृज्य ।
नानातीर्थेष्वपि बहुविधा इत्थमुच्चै प्रतिष्ठाः
कीर्त्ते. कृत्वा विलयमभजत् सापि नास्ति त्विदानीम् ॥ १९४

या शीर्षालङ्कृतिरिव भुव. सत्यवत्यत्युदारा[1]
राज्ञो राज्ञी दयित-रघुनाथस्य याभूद्धरित्र्याम् ।
आसीत् ख्यातं नव-विधमहो नो नवं भूतलेऽस्मिन्
यस्या राज्यं विपुलमिह बाहारबन्धादिनाम्ना ॥ १९५

यस्याः सख्यं भुवि समभवत् सत्यवाण्या भवान्या
तस्या राज्य विनिहितवती या हि काश्यामुवास ।
गर्भे चक्रे जनकतनयां भूरितीव स्मरन्ती
तां जग्रास स्मरहरपुरी काशिकापीर्ष्यया किम् ॥ १९६

---

[1] बाहारबन्धादिभूभागस्य राज्ञी सत्यवती

एतै. काशीपुर-वसतिभि· सर्वदा सर्वलोकै-'
र्यैषाद्यापि स्मृतगुणकथैर्गीयते ह्यन्नपूर्णा ।
प्रासादानां बहुवितरणैर्ब्राह्मणेभ्यो बहुभ्य-
स्तत्तद्व्याजात् कति कनि शिवसंस्थापना या चकार ॥ १९७

स्वर्गद्वारावधिमपि बृहन्मार्गमस्माच्चिकीर्षु-
र्नाभूच्छक्त· किल दशमुख सर्वलोकाधिराज· ।
पञ्चक्रोशीभ्रमण-विधये पान्थ-शालाश्च दीर्घ
या पन्थान नयति मनुजान् स्वर्हि निर्माय नित्यम् ॥ १९८

काशीखण्डोच्चरित-चरिता बिभ्रती चन्द्र-खण्डं
काश्यामद्यप्रभृति कृतिभिर्दृश्यते नो भवानी ।
किं सास्माक सुकृति-विभवैराविरास्ते भवानी
लक्ष्यीकृत्य प्रकृति-रुचिरा या कथासीज्जनानाम् ॥ १९९

सा प्राक् प्राज्ञी वलयमवने. प्राज्य-राज्यञ्च राज्ञी
प्रोत्सृज्य स्वानिव मृतगणान् नश्च याता भवानी ।
दृष्टा यूना सुर-सरिति या मज्जता स्नानकाले
कालीमूर्त्ति· प्रहरणकरा केनचित् कामुकेन ॥ २००

दीनेभ्योऽर्थानिव वितरितुञ्चाभयं श्रीनिषेव्याः
देवी साक्षादिव दशभुजा भूभुजा पूजिता या ।
योगेन्द्रस्य स्मरविजयिन कामिनी स्मेरवक्त्रा-
गच्छद् गौरी परिहृतवती सा शरत्सुन्दरी न. ॥ २०१

---

राजसाहीप्रदेशानां राज्ञी भवानी
पुठीया-प्रदेशस्य महाराज्ञी शरत्सुन्दरी ।

बुद्धि-ज्योतिर्जगति परितो यस्य चक्रे प्रभुत्व
ज्योतिश्चक्रे नभसि चलिते यो बभूवाद्वितीयः ।
यूरोपाख्य-क्षिति तलमपि प्रोद्गता यस्य कीर्तिः
पस्पर्शार्ष मतमधिगतो वापुदेव. स नाद्य[1] ।। २०२

अभ्रान्तो योऽभवदतितरा दर्शने पाणिनीये[2]
राजारामः श्रुत-मय-महाराम-विश्राम-धामा ।
आनर्चार्यं यमवनितले मोक्षमूलारभट्ट.
सोऽप्यस्या नो विलसति सतामग्रणी. काशिकायाम् ।। २०३

कन्दर्पो वा कनक-किरण. कार्तिकेयोऽथवा यः[3]
साक्षान्नारायण इव परो गौरमूर्ति दधान. ।
नानाशास्त्रेष्वपि दृढमतिर्यस्य नित्य चकासे
काश्या मूर्तो विनय इव यो बालशास्त्री न सोऽद्य ।। २०४

को वा वक्तु प्रभवति सतः कुण्ठिता कुत्र बुद्धि-
र्वाचस्पत्य जनपरिचित भाति यस्याभिधानम् ।
तारानाथस्य च सुविदुषस्तर्कवाचस्पते. प्राक्
काश्यां विश्वेश्वर-हरपुरो हन्त सोऽस्त जगाम[4] ।। २०५

योऽय न्यायादिषु कविगुरु. सूक्ष्मशास्त्रेषु तुल्य[5]
रेमे काव्येष्वपि च सुवपुस्तप्तचामीकराभः ।
योऽहङ्कारोऽजयदिह गिरा मूर्तिमानेव देव्या
काश्या ताराचरण इह नो भ्राजते सोऽद्य विद्वान ।। २०६

---

1 ज्योति.शास्त्राध्यापको महामहोपाध्यायो वापुदेवशास्त्री (काशीवासी)

2 व्याकरणशास्त्राध्यापकः राजाराम-शास्त्री (काशीवासी)

3 काशीस्थ. बालशास्त्री

4 कलिकातासंस्कृतविद्यालयाध्यापक महामहोपाध्यायस्तारानाथतर्कवाचस्पतिः

5 काशीनरेशस्य सभापण्डितस्ताराचरण-तर्करत्नः ।

य: कृष्णोऽभूत् सुकविकविता-गोपबाला-सहस्रा-
लङ्कारराणा ध्वनिभिरसकृत् पूर्ण-कर्णो ह्युदीर्णैः ।
व्याख्या-वेणु-क्वणनमपि य स्मेरवक्त्रः प्रकुर्वन
स्फीता चक्रे हृदययमुना प्रेमचन्द्र. स नास्ति[1] ।। २०७

कारुण्यैर्यो जलनिधिरभूद विद्यया सागरोऽपि
स्नेहैर्यस्मात् कति जलधरा प्रादुरासञ्जगत्याम् ।
ख्यात शब्दो भ्रमति नितरामीश्वरश्चन्द्रयुक्त.
सर्वेषां न परिचिततमो वाचकत्वेन यस्य[2] ।। २०८

शापभ्रष्टो दिव इव सुरो विच्युतः कोऽपि लोके
यो दीनानां नयनसलिलक्लिन्नवक्त्र स्म मार्ष्टि ।
राजद्वार किल निजकृते त्वर्गलाशून्यमेको
यस्तत्याज ज्वलनसदृशस्तेजसा सोऽपि नाद्य ।। २०९

उन्मथ्याब्धिं तनतनयो वङ्गनामानमेत
ताः पञ्चाशत्परिमितसमा निष्ठुर. क्रौर्यनिष्ठः ।
उद्धृत्योद्धृत्य च स हृतको ह्येकशो न्यायवेत्तॄन्
रत्नानि स्वं निलयमनयद्धन्त नाप्येकमत्र ।। २१०

तर्काचार्यो य इह जयनारायणेति प्रसिद्धः[3]
स्नेहो यस्यापतदतितरां मन्महे श्रीमहेशे ।
अध्यारूढ चरमपदवीं तर्कपञ्चाननं यं
कापि स्पर्द्धा श्रुतजलनिधेर्नाभजद् विश्रुतस्य ।। २११

---

1. कलिकातासंस्कृतविद्यालयाध्यापक· प्रेमचन्द्र-तर्कवागीशः ।
2. ईश्वरचन्द्रविद्यासागरः
3. कलिकातासंस्कृताध्यापकः जयनारायण - तर्करत्नपञ्चाननः ।

य: सन्देहानभनगनिश नव्यनैयायिकाना
जिज्ञासूना धरणिधिपणोऽगाधविद्यो दयार्द्र. ।
चामुण्डाया: शतकमतनोद् भैरवस्तोत्रमुच्चै-
स्तादृग् य: स स्मरणतरणिर्दीप्यते नाद्य काश्याम् ॥ २१२

न्यायेनोच्चै: कठिनदृशदा निर्म्ममे यो नवीनां[1]
काञ्चित् काव्योत्थितवरतनू कल्पनाया बलेन ।
शब्दो यस्य ज्वलति सतत राजपूर्व: कुमारो
नेत्रान्ते नो हरिहरि कवि: सेवते सोऽपि निद्राम् ॥ २१३

विद्यारत्नो भुवनपदभाङ्मोहनान्ताभिधान:[2]
प्राधान्यं योऽलभत लसता सर्वनैयायिकानाम् ।
जात: ख्याते भुवनविदिते ह्यन्वये ग्रन्थकर्तु-
र्यो गङ्गेशोपरि निजयशश्चन्द्रमुच्चैस्तताना ॥ २१४

विद्यारत्न: स किमु भुवने वर्त्तते नाद्य नाद्य
प्रायस्ते तेऽनवधिजलधिं ससृतिं नाम तेरु: ।
ये यज्ञाग्नि-प्रतिकृति-समास्ते त्रयो न प्रसन्ना[3]
हा हा हा रामधन[4] इह नो हन्त नो दीनबन्धु:[5] ॥ २१५

काशी लब्ध्वेव च सुरसरिन्नीर-संसिक्ततीरे[6]
न्यायाम्भोधेरवधिरहितस्यैव मांयात्रिकोऽत्र ।
बालापत्या पतिशवचितोत्थानत: सन्निवृत्तां
पत्नीं बल्लीमिव किशलय-प्रेक्षणीयं सुतश्च ॥ २१६

---

1 राजकुमार-न्यायरत्न: ।

2 नवद्वीपस्य सर्वप्रधाननैयायिको म. म. भुवनमोहनोविद्यारत्न.

3 एको विल्वपुष्करिणीवासी म. म. प्रसन्नचन्द्र. न्यायरत्न:, द्वितीयो नवद्वीपवासी प्रसन्नचन्द्र: तर्करत्न: तृतीयो विक्रमपुरवासी प्रसन्नचन्द्र: तर्करत्न: ।

4 कुड़ुक्दिग्रामनिवासी म. म. रामधन तर्क-पञ्चानन: ।

5 कोन्नगरग्रामनिवासी म. म. दीनबन्धु. न्यायरत्न ।

6 रङ्गपुरेटाकुमारीग्रामनिवासी केशवेश्वर: तर्कपञ्चानन: ।

दृष्ट्वाहूय क्षितिसुरवरः शम्भुचन्द्र नरेन्द्रं
काकीनेश कविकुलरविः केशवादीश्वराख्यः ।
आहूतोऽहं प्रमथपतिना शम्भुनाम्बुप्रभेण
प्राप्त काशी न खलु भवता शम्भुना प्राकृतेन ॥ २१७

एता कान्तां शिशुसुतमिम प्रापयाशु स्वदेश
व्याहृत्येति त्रिदशतटिनीवारिमग्नार्धकाय ।
अश्रुस्राविक्षितिपति-मुख कामिनी भूलुठन्ती-
मज्ञात्वापि स्वजनरुदितैर्बालमुच्चै रुदन्तम् ।

कुर्वन्नुर्व्यां शिशुसुतवधू शून्यबन्धु विसृज्य
स्मेरास्येन्दुः कमिव कनक-प्रेक्षया लिङ्गिताङ्गम् ।
साक्षाद्देव्या रजतधवल वीक्ष्य चन्द्रार्धचूडं
तस्यैवाङ्के विलयभजत् सोऽपि वात्स्यावतंसः ॥ २१९

यं द्वाविंशत्यहमितवयोबालमुत्सृज्य माता
मानिन्याख्या विमलिनमुखी संस्थितेन प्रियेण ।
प्रोद्दीप्तेऽम्भध्वनिभिरविशद्ध्मायमानं चिताग्नि
या कन्येन्द्रेश्वर - बुधवरस्येन्दिरेवेन्दु - मूर्त्तिः ॥ २२०

यो धत्ते स्म स्मरहरवधू-चिन्तन-स्मेरवक्त्रो
नाम श्यामो भुवनविदित मङ्गल रुद्रपूर्वम्[1] ।
तत्कालेऽपि क्वचन च बुधो न्यायशास्त्रीयबुद्ध्या
कोऽप्यासीन्नो विपुलवसुधामण्डले यस्य तुल्यः ॥ २२१

तीर्त्त्वा लोक चकितविबुध यन्महस्तन्मुहुस्त्वाद्
गोलोकञ्च स्थिरमपि दृढ स्वाभिभूतं चकार ।
न्यायालङ्कार इति जगति ख्यातनामाङ्कितो यः
सोऽयं रुद्रो भुवि न च पुनर्विद्यतेऽद्याद्वितीयः ॥ २२२

---

[1] रंगपुरेटाकुमारीग्रामनिवासी रुद्रमंगलो न्यायालंकारः ।

तारातारा इति स निगदंस्तारसारस्वरेण
प्राणान् हित्वा सुरपतिनुतं स्यन्दन प्रारुरोह ।
मेने लोको वियति चलित यत्प्रतिध्वानशब्द
श्रुत्वा स्वर्गं प्रतिगतवत. स्तम्भितस्तस्य वाचम् ॥ २२३

रामानन्द किल कुलपतिर्दुर्गसिंहावतारो[1]
स. कातन्त्रे स्मृतिषु विदितोऽध्यापक पण्डितानाम् ।
कल्याणीन्द्रेश्वरवरसुता यश्च पञ्चाननाख्य
पञ्चास्योग्र जगति सुषुवे सोऽपि नो विद्यतेऽद्य ॥ २२४

आसीद् गङ्गेश्वरबुधवरो जामदग्न्यप्रभाव-[2]
स्यासन् यस्योद्गमितमहसो भीरवो भूमिपालाः ।
योऽय साक्षाद् भुवनविदितो मूर्त्तिमद् ब्रह्मवर्चो
गङ्गागर्भे खलु निजवपु सोऽपि हन्तोत्ससर्ज ॥ २२५

कालीनाथादपि च हरिनाथात् कवीनां विधातुः
पश्चाज्जातोऽनुज इव कवि कारकः कारिकाणाम् ।
चक्रे ग्रन्थ कमपि भुवनेष्वाशुबोधं सुबोधः
सो ऽप्यास्ते नेश्वरपदमुखीं कान्तसञ्ज्ञां दधानः[3] ॥ २२६

यं भर्त्तार हर इति मतिर्ब्रह्ममय्याविरासीद्[4]
गोविन्देति प्रमुदितमना. सेवितुं सारदापि ।
नानाग्रन्थाः स्मृतिमयपटे ग्रन्थनं प्रापुरस्य
प्रायो यस्यावनिषु हरगोविन्दनाम्ना प्रसिद्धि. ॥ २२७

---

1 रङ्गपुरेटाकुमारीग्रामनिवासी रामानन्द-पञ्चाननः
2 रङ्गपुरेटाकुमारीग्रामनिवासी गङ्गेश्वर-भट्टाचार्यः
3 रङ्गपुरेटाकुमारीग्रामनिवासी ईश्वरकान्त-न्यायपञ्चाननः
4 रङ्गपुरेटाकुमारीग्रामनिवासी हरगोविन्दसिद्धान्तवागीश ।

ज्ञातारो ये न खलु कृतिनो यस्य मीमांसिताना
शङ्के ते ते धरणिवलये वञ्चिता निश्चयेन ।
नो यस्य व्याकरणघटिता भ्रान्तिरासीत् कदापि
प्राप प्रीते व्रजपति-सुते मिश्रण सोऽपि हन्त ॥ २२८

योऽभूत् स्मार्त्तो भुवनविदित· पूजितो भूपतीना[1]
विद्यारत्नो व्रजपदमुखो वाचको यस्य नाथः ।
वक्ता भक्तो व्रजपतिसुतस्याऽपि गौरेऽनुरक्तः
शेषे कालेऽभवदतितरामद्य शेते क्व सोऽपि ॥ २२९

धीमानिन्द्रेश्वरसुतवरो विद्यया भूषितोऽभू-[2]
न्नाम्ना ख्यातो भुवि च हरकान्तेति शान्तान्तरात्मा ।
यो जज्वाल ज्वलन-सदृशीमोजसा शुद्धमूर्त्ति
बिभ्राणो भूपतिगणगुरुर्ब्रह्मदो ब्राह्मणानाम् ॥ २३०

विप्र· क्षिप्रं किल मधुपना दुर्ग-दुर्गाङ्घ्रिपद्मे
लब्ध्वा मत्तो य इह च बभौ निश्चलत्वं दधानः ।
कान्तारेऽस्मिन् निविड-विषये लोभनीयेषु नाना
पुष्पेष्वेषु स्मितयुतमुखेष्वेषु यो नो पपात ॥ २३१

राजप्रायो नरपतिशिरो - मौलिनद्धाङ्घ्रिपद्मः
पद्मादृष्ट्या परिचित इवैश्वर्य्यमुर्जस्वि लेभे ।
नित्यं देवोत्सवरचनया य शरण्यो धरण्या
स्मर्त्तव्योऽभूदहह कनकद्योतगौर· स नाद्य ॥ २३२

---

[1] ...स्य सर्वप्रधानस्मार्त्तो व्रजनाथ-विद्यारत्नः ।
[2] ...पुरेटाकुमारीग्रामनिवासी हरकान्त-विद्याभूषण· ।

भूमिस्वामी कमलमिति यो वाचकत्वेन शब्दं[1]
ख्यातोऽभूद् भूवलयविदित नीलपूर्वं दधान· ।
स्नातो दैव्या गिरि-हरजटाभ्रष्टनद्यां निबन्ध
काल्यर्चाया· कमपि खलु यो निर्ममे निर्ममत्व ।। २३३

यस्य ज्येष्ठो जगति तनुज· श्रीगुरुप्राक्-प्रसन्ने-
त्याख्या धत्ते धनिगुणनिधिर्धर्मबन्धुर्धरण्याम् ।
अन्य श्रीमान् विलसति सुत श्रीभवानीप्रसन्न
शास्त्र-क्षीरोदधिषु धवला मज्जनाद् यस्य बुद्धि ।। २३४

अस्मिन् यो भूवलयमलये चन्दन· सान्द्रगन्धं
दिव्यं दिग्भ्योऽक्षिपदतितरा कीर्त्तिजातैर्मरुद्भिः ।
यो वा वङ्गोत्तरदिशि दिव पारिजातो विधात्रोत्-
सृष्टो भ्रान्तेन च किमु पुन. कर्तित सोऽपि तेन ।। २३५

कोषं कश्चिद् विपुलवपुप 'शब्दकल्पद्रुमा' ख्य[2]
ख्यातश्चक्रे य इह मतिमान् धर्मनिष्ठो गरिष्ठ· ।
राधाकान्तो नरपतिवर शास्त्रचर्चानुरक्तो
वृन्दारण्ये हरिहरि वपुः सोऽपि तत्याज भूपः ।। २३६

य. क्षेत्राणां किल सुरगिरां पण्डितः पण्डिताना-[3]
मार्द्रीभाव द्रविण-निवहान् कर्त्तुकामो ववर्ष ।
यस्माज्जाता विपुलतटिनी यज्जवारिप्रवाहैः
प्रायो वङ्गेष्वपि च सतत सन्ति सिक्तानि तानि ।। २३७

---

[1] रङ्गपुरनलडाङ्गा-भूस्वामी नीलकमललाहिड़ी विद्यासागर:

[2] कलिकाताशोभाबाजार-राज· सर् राधाकान्तदेवः ।

[3] हुगलिचुचुड़ानिवासी भूदेव-मुखोपाध्यायः ।

यो भूदेवो रुचिरवपुपा चेतसस्तेजसश्च
प्राप्योच्चत्व सचकितमिद विश्वमुच्चैश्चकार ।
शिक्षाभागोच्चतमपदवी राजकीयाञ्च लब्ध्वा
स्वं ब्राह्मण्य य इह न जहौ हा! जहौ सोऽपि कायम् ।। २३८

आद्यं 'वार्तावह' मिति जनै सर्वतोऽज्ञायि यत्तत्[1]
पत्र साप्ताहिकमतितरा सत्यमिन्धुर्नरेन्दुः ।
यः कुण्डीशो नरपति-कवि. कालिचन्द्रो वितेने
काशीचन्द्रान्नृपपरिषदः पत्युरेक' कनीयान् ।। २३९

श्रव्य काव्यं[2] प्रथममवनौ वङ्गभाषासु योऽसा-
वाविश्चक्रे कुलजपतनज्ञापक गीयमान ।
तैर्वङ्गीयैः कविभिरनिश रामनारायणेन
प्राप प्रान्त स हि चरणयोर्भूपतिर्भूतभर्त्तुः ।। २४०

चक्रे शक्रो भुव इव नृप शम्भुचन्द्रो नवीनां[3]
रत्नैर्यत्नैर्नवभिरवनौ पर्षदं हर्षदां य' ।
भूगोलोक स्वपुरमपि य' प्रोद्यदुद्यानधारां
हाराकारामुरसि च दिशो वङ्गतुङ्गोत्तरस्याः ।। २४१

यः काकीनानरपतिरयं भारत विक्रमीयं
लक्षश्लोकोद्ग्रथितमभितः कारयायास राजा ।
वात्स्यादद्रेः समुदितममुं श्रीश्वरं[4] गीर्णिषेव्यं
श्यामाप्रेमार्णवमभिनवं कालिदासं द्वितीयम् ।। २४२

श्रेष्ठान् वैयाकरणकृतिनोऽन्विष्य शिष्यै.समेता-
नानीय स्वे सदनमदमि स्मेरवक्त्रश्चकार ।
कोषं कश्चिद् विपुलमखिलै' पण्डितैरेव तैस्तै-
स्त्याद्यन्तानां य इह मतिमान् वाचकानां क्रियाणाम् ।। २४३

---

[1] रङ्गपुरकुण्डीभूस्वामी कालीचन्द्रराय चतुर्धुरीणः ।
[2] कुलीनकुलसर्वस्वं नाम रूपकम् ।
[3] रङ्गपुरकाकिनापति' शम्भुचन्द्ररीय चतुर्धुरीणः ।
[4] श्रीश्वर विद्यालङ्कारः ।

पाश्चात्यानामपि नरपतिः संस्कृतानाञ्च वाचा
योऽभूत् प्राज्ञो भुवि किल तथास्तोकमिलण्डजानाम् ।
संवादानां जनपदभुवां चारुसाप्ताहिकं य-
स्तेने पत्र किमपि भुवने 'दिक्प्रकाश' प्रकाश्यम् ॥ २४४

मुद्रायन्त्र निजनिवसनौ स्थापयामास योऽसा-
वायुर्वेद्यौषध - वितरणागारमेकं चकार ।
इलण्ड्याना प्रचलितवता भाषितानान्तथोच्चै-
र्विद्यागारं गुरुगुणधरस्तच्चिकित्सालयश्च ॥ २४५

स्थापत्यानां चरमपदवीमुज्ज्वलं ताजसौधं
धौतं कान्तैरिव कवितया वर्णयामास तूर्णम्
नानाकाव्यानि च कविगणैर्निर्ममे कर्म्मठो यः
सोऽपि प्रापेश्वरपदतले मुक्तिमुक्तोऽत्र काश्याम् ॥ २४६

गोविन्देत्याह्वयमिति कृती मोहनान्तं दधान[1]
कायस्थोऽपि स्तुतिचरणिका सारदां य सिषेवे ।
भान्ति ग्रन्था भुवि सुबहवो वङ्गभाषासु यस्य
श्रीकान्ताङ्घ्रौ निलयमगमत् सोऽपि विद्याविनोद ॥ २४७

कृष्णेत्याख्यां धनपदपरां घोषसूनुर्विरेजे[2]
यो बिभ्राणः स्मित-युत-नवो यो ह्युवाचोज्ज्वलश्रीः ।
श्यामो वामो वयसि च युवा राजविद्यासु विद्वान्
सर्वैर्वेद्यो विलसित वपुर्वैद्यराजोऽनवद्यः ॥ २४८

घोरावर्तं विपुलजलधिं फेनिलं वीचिजालै-
स्तुङ्गैर्भङ्गैर्हिमगिरिनिभैर्भीषणं भीमनादम् ।
इलण्डाख्य जनपदमतो यो ययौ केशवेन[3]
प्रोत्तीर्यार्जिवमपि जवात् पोतमारुह्य बिभ्रत् ॥ २४९

---

[1] काकिनाराज-प्रधानमन्त्री गोविन्द-मोहनराय-विद्याविनोदः ।

[2] सिविलसार्जन् के डि. घोषमुल्लिख्य किञ्चित् खिद्यते कवि ।

[3] ब्राह्माचार्य्य-केशवचन्द्र सेनेन ।

स्थित्वा तत्र प्रणिहितमना स्वास्थ्यविज्ञानमुच्चै-
र्यः शिक्षित्वा मिलक्कृत-महातर्कविद्या विदित्वा ।
प्रत्यावृत्योत्तरदिशि ययौ वङ्गभूमेर्नियुक्तः
स्वास्थ्योन्नत्या दिशमपचिता ताञ्च चक्रे जनानाम ॥ २५०

इंलण्डयानामिव कचचया रेजिरे च्छिन्नशीर्षा–
स्तादृक् सज्जामपि बुभुजिरे स्तोकशुक्लैश्च कैश्चित् ।
तत्रत्यानामिव शुभशिरस्त्राणमुच्चैर्दिदीपे
चेलानाञ्चाभवदपि पुनर्यस्य नादृग् विलास ॥ २५१

यः प्रासादोपरि नरपतेः सेव्यमानो मरुद्भिः
पक्षोद्भूतैः सदसि च कदाप्युद्गतश्रीर्विरेजे ।
दीनाना वाप्युटजभवने रोगिणामार्तनाद
तद्बन्धूना नयनसलिल वारयन् सन्दिदीपे ॥ २५२

अर्थाभावान्न खलु भविता सच्चिकित्सेति चिन्ता
नासीत् केपामपि जनपदे तत्र यस्मिन् नृदेवे ।
यः स्वैरं स्वैरपि वहुविध क्रीतमिष्ट सुपथ्य
यच्छन् धन्यो धरणिवलये निर्धनेभ्यो वभूव ॥ २५३

इंलण्ड्याना परिषदि गतः पूजितो यो जनाना
विश्वस्तोऽभूत् सकलविषये मन्त्रिवन्मन्त्रणाद. ।
श्वेतद्वीपोद्भववरवधूमण्डले मण्डिताङ्ग.
कृष्णः साक्षादिव भुवि वभौ योऽपि गोपीसहस्रे ॥ २५४

यो ह्यारूढो रथवरमनेनैकमुद्यत्प्रभावो
वल्गाहस्तश्चिरसहचरेणार्जुनेनेव कृष्णः ।
ख्यातां गीतामिव म्लिक्कना तर्कविद्या जगादा-
स्यास्ये स्मेरे नयनकमले चारुणी द्वे निधाय ॥ २५५

पन्थानस्ते बृहदवयवा. प्रान्तर तत् सरस्य:
सेतूना वोपरि च सरिता श्रेणय. पादपानाम् ।
उद्यानानि स्फुटतरयशो रङ्गपुर्या नगर्यां
गायन्त्युच्चैरपि जनपदे खूलनायाञ्च यस्य ।। २५६

क्लेदक्लिन्नं मलिनसलिल खातबद्ध प्रभूत
दूरीकर्त्तुं कृतकसरितं रङ्गपुर्या चकर्त्त ।
योऽप्यस्वास्थ्यं हरिरिव ततः कालियं विप्रचक्रे
छायाचित्रं हृदयफलकेऽद्यापि यस्यास्ति नृणाम् ।। २५७

माता काश्यां किल पतिरता वैद्यनाथे च पत्नी
द्वाविलण्डाह्वयभुवि सुतौ कुत्रचित् सूनुरन्यः ।
दूरे कन्यापि च सहजनुर्यावदन्यत्र तस्थु–
स्तावत् प्राणानहह ! खुलनाभूमिखण्डे जहौ सः ।। २५८

ध्यायन्ती सस्थितपतिपदं बाल्यमारभ्य नैवो-[1]
न्मील्य स्तोक नयनमपि यापश्यदत्रापि किञ्चित् ।
पातिव्रत्य किमिव यदहो दर्शयन्त्या चरन्ती
सर्वाँल्लोकान् जगति जननी विस्मितान् या चकार ।। २५९

हेम्नां दानैर्वसुवितरणैरन्नदानैरजस्रं
चेलोत्सर्गैर्जलघटघटाप्रापणैर्गोविसर्गैः ।
चक्रे स्वीय सफलमिव या नाम काशीश्वरी सा
हित्वा पुत्रानिव नृपवधूर्हन्त नोऽत्र प्रतस्थे ।। २६०

अग्रे जग्मु. पथि निजयश:पुष्पमाला विकीर्य्य
स्वीकृत्यैते विमलचरितास्तेऽग्रगामित्वमित्थम् ।
विद्यन्ते ये भुवि परिमितास्तेऽपि शङ्के लभेरन्
सर्वे स्वामिन्ननुपदमिमे तेऽनुयायित्वमेवम् ।। २६१

---

1 फतेहपुर–भूखण्डस्य भूस्वामिनी काशीश्वरीमुल्लिख्य श्रुच्यते ।

स्थायं स्थाय गिरिनदनदीसिन्धुभिः प्राग्धरोरः-
कम्पो जातो बृहदतितरा स्मर्यते यश्चिराय ।
अन्तर्धान तव किमु फल दृश्यतेऽस्यैव तस्याः
सर्वेषा नो भुवि निवसता साध्वस यस्ततान ॥ २६२

अन्यासां वा सदसि कृतिना काक्षतीना कथास्ते
यो भूकम्पोऽगमयदवनेर्नाकलोक तमेकम् ।
दिष्टयोदीच्या पतिरिव महाराजगोविन्दलालो[1]
योऽभूद् यस्यापि च धनदता विस्मिता वीक्ष्य सर्वे ॥ २६३

शुभ्रं गौरी-गुरु-गिरिशिरो गाढ़भूतैस्तुषारै-
रप्यत्यन्त निज-सित-यशो-धारया यो धरेन्द्रः ।
चक्रे शुभ्र शशधरमुखीनामजस्रं सहस्रै-
रुद्गीयन्ते हिमवति नगे कीर्त्तयो यस्य शुभ्रैः ॥ २६४

यो ह्युद्यानं निजनिवसतेरुत्तरस्यामदूरे
चक्रे नानाकुसुमतरुभिः स्थावरैश्चारुपत्रैः ।
अन्यत्रापि स्मित-कुसमितैर्जङ्गमैः पादपैस्तै-
र्बाल – ब्रातैरुपवनगणानुच्चविद्यालयांश्च ॥ २६५

धारावृष्ट्या धनपतिसमो यो धनानामजस्रं
हर्म्य शर्मप्रदमतितरामुच्चशीर्ष चकार ।
हेम्नोत्कीर्णै शतदलशतैर्व्याप्तमालोक–जालै-
र्यद्गर्भस्थं सुबृहदभितः प्राङ्गण प्रान्तराभम् ॥ २६६

यः प्रासादो विपुलविततै र्द्वारचक्षुःसहस्रै-
रुन्मुक्तैस्तैर्विमलकिरणैर्दर्शकान् मोहयद्भिः ।
तैरैश्वर्यैर्गजपतिगणैरुह्यमानैर्विमानैः
स्वस्मिस्तादृग् भुवि च भवनेन्द्रत्वमुच्चैस्तताम ॥ २६७

[1] रङ्गपुरनगर-वासिनं महाराज स्वर्लोकगतं गोविन्दलालमुल्लिख्य शुच्यते ।

योऽयं राजा ब्रिटिश-नृपते राजधान्याश्च धन्यः
पल्ल्या मल्लीसमसितरुचामेवमिलण्डजानाम् ।
एकं सौधं जलधर-दलस्पर्शि तत्कार्य्यदर्शी
कुर्वाणोऽपि स्वतनुमधुना नापि कुत्रापि पाति ।। २६८

योऽयं राजा निजभुजबलैरुन्नतीनान्ततीना-
मुत्तीर्याल्पे वयसि विनयी दीर्घसोपानधारा ।
तूर्णं शेषं पदमधिगतस्तत्र विश्रामलेशो
नास्तीत्ययौ नवघनतनो श्रीपतेरुज्जगाम ।। २६९

योऽयं राजा रजतघटिते चारुशय्यातले प्राङ्-
मुक्तद्वारे द्वितल-धवलोद्भासि सौधे कदापि ।
पक्षोद्भूते मरुति जन्तधौ नो निदद्रौ शयानः
सोऽयं भूमी-चरमशयनोऽचेतनो निद्रयाद्य ।। २७०

नाथ कान्ता भुवि निपतिता धूलिकाधूसराङ्गी-
मश्रुक्लिन्नाननसरसिजं बालगोपाललालम् ।
तादृक् कन्यां नयनज-जलैः प्लाविताङ्गीश्च हन्त
द्रष्टुं नार्हो धरणिशयनो निद्रयाभून्महत्या ।। २७१

उत्सृज्यास्या भुवि भववपुरामकृष्णानुभावा
देवीं साक्षादिव दशभुजां श्रीशरत्सुन्दरीन्ताम् ।
दीप्तो राजोचितसुमुकुटो भोगतृप्तो द्वितीयां
शान्तः कान्ता सरसिजमुखी हन्त सोऽन्तर्हितोऽभूत् ।। २७२

भूमिर्भग्नानवरत-महाकम्पनात् सौधमाला
भग्नाभग्नं निजवपुरपि श्रीनिषेव्यं विलोक्य ।
यो यत्रास्ते मुरहरपदे भूमि-सम्पर्कलेश-
स्तत्रोत्थाय श्रमपरिचितः किं विशश्राम भूपः ।। २७३

प्राय मौंधो भुवि निपतितो भूमिकम्पस्य वेगै-
र्यस्याशस्योपरि नरपति र्दक्षिणा–मोहनोऽस्थात्[1] ।
नो तस्मान्नोऽभवदपि महाशक्तिभक्ति–प्रभावाद्
गन्तु शक्त स्थविर इव य पादमेक न चासीत् ॥ २७४

योऽन्धो ह्यन्धोवितरणविधौ मुक्तहस्त सदासी-
न्नित्य मन्त्रप्रजपनकृतौ मालिकाबद्धपाणिः ।
दुर्गापादाम्बुरुहरसिकस्तत्पदध्यानमग्न
सोऽस्या काश्या वपुरपि निज पातयामास पाता ॥ २७५

या निस्तारिण्यमितकरुणाख्यातनाम्नी महिम्ना[2]
धाम्ना स्वेन स्मरहरवधूमूर्त्तिकेवाविरासीत् ।
साक्षाल्लक्ष्मीमिव भुवि विराजादिमोहिन्युपाधि
कान्ता सूनो सुतमपि जहौ स्वेन देहेन सापि ॥ २७६

श्यामासुन्दर्यजयदभित. शौर्यवीर्यैरधैर्य[3]
काम क्रोध प्रबलमसुर दीप्रशुम्भ निशुम्भम् ।
दम्भ दम्भोल्यतिशयदृढ तञ्च धूमाक्षमुग्रं
सान्तर्धान स्मरहरभुवो हा दधौ ध्येयमूर्त्ति ॥ २७७

देवी लक्ष्मी शतदलमुखी भाग्नेष्वाविरासीत्[4]
सर्व ैवापतदतितरा यद्दयावृष्टिधारा ।
यस्या भान्ति स्फुटमिव सदा कीर्त्तयो मूर्त्तिमत्यः
शापेनाम्भोनिधिमधिययौ कस्य दुर्वासमः सा ॥ २७८

---

टेपाभूस्वामिनं दक्षिणामोहनमुल्लिख्य शुच्यते ।

राधावल्लभनिवासिनो भूम्यधिवासिण श्रीमदन्नदाप्रसादसेनस्य मातरमुल्लिख्य शुच्यते ।

डिमिलाराजस्य श्रीमतो जानकीवल्लभसेनस्य मातरमुल्लिख्य शुच्यते ।

मयमनसिंहमुक्ता गाछानिवासिनो महाराजस्य श्रीमत सूर्य्यकान्तस्याचार्य्यस्य मातरमुल्लिख्य शुच्यते ।

या श्रीः साक्षाद् भुवनविदिता भारताना रमाभूत
सर्वैर्लोकै स्तुतिचरणिका या सरस्वत्युदारा ।
तामात्मीया कथयितुमहो नाद्य शक्ता भवाम·
सा हन्तास्मान् परिहृतवती भिन्नभाव जगाम ।। २७९

सौधश्रेण्यो विलयमगमन्नेकतो भूमिकम्पा-
दन्यत्राप्यर्दति दिशि महामार्यजस्र नृलोकान् ।
पातु शक्ता न च निजवपु· श्वापदाना मुखेभ्यो
दुर्भिक्षार्तास्त्वपरदिशि ते शेरतेऽप्यस्थिशेषा. ।। २८०

हन्तान्यस्या दिशि च सलिलप्लावनात् केऽपि देशा
हस्त्यश्वश्वप्रभृति – पशुभिर्मानुषैरालयैश्च ।
शून्या शून्या विटपिभिरपि प्राक् च पश्चाच्च जात
सर्वं स्वामिन् व्यसनमभितस्ते गतेरेवमेव ।। २८१

नेतव्यं नो किमपि भगवन् मृण्मय क्वापि काश्या–
स्तत् स्यात् सर्व किल पशुपते काशिकास्पर्शनेन ।
वाराणस्या निजवपुरत पार्थिव पातयित्वाऽ-
गच्छः स्वच्छं किमु कमपि त लोकमेक दुरापम् ।। २८२

आसीत् काशी कनकघटितानन्दकान्तार एषा
शान्तिस्तापानल-विकलता बिभ्रतां सर्वतोऽभूत् ।
अद्यानन्दस्य च न कणिका शान्तिलेशोऽपि नाद्य
त्वां नीत्वान्तं ज्वलति सुमहद् घोरमेषा श्मशानम् ।। २८३

प्राक् कालाग्नेस्त्रिभुवनभुवां सङ्घ–संहारिणोऽस्मिन्
विद्युन्माला – जडित – वपुषो धूर्जटेरुग्रमूर्तेः ।
याताः सर्वे विलय–पदवीं शङ्कराचार्य–मुख्या
धिङ् नो भाग्यं त्वमपि च तथा गच्छसि स्म श्मशाने ।। २८४

काम वामं युवति–नयन–भ्रूलता–चाप–हस्तं
मत्तं रत्या सुधृत–वपुष यद्भवान् सन्ददाह ।
भद्र तन्न कृतमिति कथ ज्ञानमूर्त्ति विशुद्धा–
नन्द दग्ध्वा नयनदहनैः किं कृत वामदेव ॥ २८५

अस्मान् दातु किमपि कलये पाण्डु-वंशा-वतसं
त सम्राज खलु सहगुरुं विष्णुरात ह्यहार्षी ।
तादृक् कि नो गुरुमपि हरन् साम्प्रत तैरुपायै-
राज्ञाधीनान् कलि-नरपतेरुग्र-मूर्त्ते चकर्थ ॥ २८६

सर्व्वानन्दो भुवि विजडितो दुःखभारैर्जनाना-
मानन्दः सोऽपि च मलिनता पङ्क-सङ्गाद्दधाति ।
आसीदेकः किल जनिमतां सम्मतो यो विशुद्धा-
नन्दः सान्द्रः सममपहृतो निष्ठुरेणाद्य धात्रा ॥ २८७

दिष्ट्याहल्या-प्रतिकृति-युतो ह्यन्न-सत्रस्य तस्याः
प्रासादोऽयं बुध-गुरु-मठ स्वोरमि भ्राजमानम् ।
धत्ते रक्षा-कवचमिव य रौप्यपात्रावगूढ
हा तद्देवापहृत-कवचं भाजन शून्यमद्य ॥ २८८

भो भो काशीगमन-विषये चेष्टितं दृश्यते वो
नास्यां विश्वेश्वर इह तथा नापि तज् ज्ञान-वापी ।
नो जानीमः किमिव दुरित सर्व्वथानुष्ठित यत्
सोऽन्तर्धत्ते खलु निजभुवः सापि शुष्कत्वमेति । २८९

यस्मादुत्सादुपल-घटिताऽपूर्य्यत ज्ञान-वापी
सोऽद्यावद्धः सुदृढदृशदा केनचिन्निष्ठुरेण ।
वाराणस्यां यदि जिगमिषा गच्छत भ्रातरोऽस्यां
तस्थौ प्राग् यद् सुफलममृतं तत्तु नो लभ्यतेऽद्य ॥ २९०

आगजेवो जवन-नृपतिस्तस्य धर्म्मालयस्य
ग्राव्ना ग्रामैर्दृढतरममु विश्वनाथ बबन्ध ।
नत्वाबद्ध. स हि पशुपतिर्यस्य देवस्य माया-
जालैर्बद्धं नियतमखिलं विश्वमेतद् विधात्रा ॥ २९१

सोऽशक्तोऽभूद्धरिरिव पुनर्विश्वनाथोऽन्यतस्तू-
द्भ्रान्त कालाह्वय-जवनतो भीषणाद्धीरुरेष ।
कस्याञ्चित् किं निभृतमसताज्ञायमानो गुहाया
गूढाङ्ग सन् निवसति नृणा सन्निधानात् पलाय्य ॥ २९२

ऊर्ध्वं कश्चिज्जलधिमवनेरन्तरा द्वारकाव-
न्निष्कूलञ्चाऽमृत-रसमय दुर्गम देहवद्धि ।
नागैर्न्नैद्धा विशद-नगरी किञ्च निर्म्माय काञ्चित्
तस्या देवो निवसति गुरुर्म्मूर्त्त-विश्वेश्वरोऽद्य ॥ २९३

इति तर्करत्नोपाधिक - श्रीयादवेश्वरशर्म्म-
विरचितमश्रुविसर्ज्जनं नाम काव्य समाप्तम् ।

## ग्रन्थसमीक्षणम्

## लोकमान्यालङ्कारः

**लेखकः प्रकाशकश्च पण्डितगजानन रामचन्द्र करमलकर शास्त्री**

काव्यतीर्थ. साङ्ख्यतीर्थः साधारणतीर्थश्च, साख्य-योग-प्रधानाध्यापकचरश्च श्री महाराज-होलकर-सस्कृतमहाविद्यालयस्य, इन्दूर। घ० न० १२ ग० २ इन्दूर शक० स० १८६३ मूल्यं १२ आणका ।

पुस्तकरत्नमिद वर्त्तमानयुगस्य राष्ट्रभक्तिपरा काचिदनुत्तमा रचनेति राजते । बहव संस्कृतज्ञाः स्वराज्योद्योगोदासीना आसन । न च ते समसामयिकविषयाननुवर्तन्ते स्म । न खलु महामनस्विन करमलकरशास्त्रिणस्तादृशः पण्डिता । ते शास्त्रिण प्रास्ताविकवक्तव्ये स्वव्यक्तित्वं परिचाययन्ति, तद्यथा—

हृद्य चरित्र तिलकस्य नित्यं
बोद्धुं तथालङ्कृतिमत्स्वरूपम् ।
एक प्रयत्नो विहितो मया हि
एका क्रिया द्व्यर्थकरी प्रसिद्धा ॥

सत्यमेवापूर्वतनप्रोक्तं तेषां मतम्—

दृष्टान्ताः प्रायशो ग्रन्थे दृष्टा श्रृङ्गारसेविनः
असंस्कृतां बालबुद्धि विकुर्युरिति चिन्तया

न केवलं चिन्ता कार्या, अपि तु चिन्ता-विनाशाय किमपि करणीयमिति

श्रृङ्गाररसवर्ज्या ये राष्ट्रभक्तिप्रबोधकाः
हितावहा मया प्रोक्ता लोकमान्या विशेषत ॥
भाविस्वराज्यगेहस्य स्तम्भो यूना गणो दृढ ।
अनेन मम कार्येण तुष्येदिति दृढं मतम् ।

नेदं पुस्तकं पाण्डित्यप्रदर्शनाय वा विद्वदौषधमिति प्रणीतमित्यस्य महान् प्रकर्ष । सरलमरलया भाषया काव्यशास्त्रनिगूढ-तत्त्वानि प्रकटीकर्तु लेखको पद्धतिं स्वीचकार, सा रम्या हृद्या सूक्ष्मेक्षिकया सुभव्या च प्रतिभाति । स्वाभाविकीयं लेखकस्य प्रवृत्तिरिति तेन विशदीकृतम्—'कायेनास्तगतस्यापि बालस्यापि कीर्त्या सततं देदीप्यमानस्य लोकमान्यभारतभास्करस्य कृपयैव प्रभया मन्मतिपके विकसितानि सरसविरसानि चित्रविचित्राणि मनोहराणि इमानि कतिपयानि पद्यपद्मानि सञ्चित्य, एतानि जनता-जनार्दनस्य कण्ठगतानि कर्तुकामोऽप्यहम्'-इत्यादि । अन्यच्च

इत्थं शतमलङ्कारा लक्षयित्वा प्रदर्शिता.
प्राचामाधुनिकाना च मतान्यालोच्य सर्वत ॥
प्रथम तावत् लेखकस्य कृतिवैशद्यं वर्णनीयम् ।

सूत्ररूपेणालंकाराणा लक्षणानि कृत्वा भक्तिप्रवणानि दिव्यसन्दर्भोपितानि वा उदाहरणानि उपस्थापितानि सन्ति । एतेषु उदाहरणेषु प्रायशः लोकमान्यस्य गुणा निर्दशिता. । छन्दोवैचित्र्यं परिलक्ष्यते । तद्यथापह्नुति-निदर्शने-

लक्षणम्— शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः ।
नायं सुधांशु:किर्तहि व्योमगंगासरोरुहम् ॥

उदाहरणं तु शार्दूलविक्रीडितेन—
नेयं भारतवर्षमस्ति नगरीयं स्वर्णरत्नाकरा
एते नांग्लजना: परस्वहरणे धूर्ता वणिक्सज्जनाः ।
नानामोहकमोघवस्तुनिकर चातुर्यवृत्त्या निजं
दत्त्वा व कनक हरन्ति विपुलं व. स्वामिनां पश्यताम् ॥

अनुष्टुप्, पृथ्वी, शार्दूलविक्रीडितम्, मन्दाक्रान्ता, मालिनी, भुजङ्गप्रयातम्, वसन्ततिलका, शिखरिणी, इन्द्रवज्रा, उपजाति, प्रमाणिका, द्रुतविलम्बितम्, शालिनी, रथोद्धता, स्रग्धरा इति छन्दांसि प्रयुक्तानि ।

अहो निर्भीकता तेषां महापण्डितानां, यया समिद्धः स लोकमान्दीना-मुत्साहेन भारतीयान् समुत्साहयितु गौराङ्गानां दुर्नीतिं प्रस्फोटयति सिंहरवेण

भारतस्य पारतन्त्र्येऽपि—

हे गौराङ्ग परस्य सस्यभरिते क्षेत्रे वसन् निर्भयम्
एतावन्ममय स्वनीतिकपटैस्त वञ्चयित्वानिशम् ।
भुक्त्वा पुष्टतनुस्तदद्य झटिति क्षिप्त्वा स्वदेश व्रज
ज्ञात्वा त्वत्कपट स्त्रमौर्ख्यमतिथिप्रमैति तद्रक्षकः ॥

शास्त्रिण एतस्याः कृते सर्वत्र समादरं कामयामहे वयम् । एतादृशीनां कृतीनां प्रणयनेन सस्कृतभारतीप्रणयिनां चित्तं नित्यमुल्लसेदिति ।

शास्त्रिण बहवोग्रन्थाः प्रकाशिता हस्तलिखिता श्च सन्ति तेषु सर्वेषु काव्य-सौरभं प्रस्फुटत्येव । तेषु पद्यरत्नाकरः श्लोकमञ्जूषा चेति सुप्रथितौ ।

## राष्ट्रसभापति–गौरवम्

बक्तकुञ्जे इति प्रसिद्धकुलोद्भव-शानभागोपाह्व-रामचन्द्रसूनुना विद्यालङ्कार-साहित्यशिरोमणि-साङ्ख्यतीर्थ-इत्यादि-विरुदभाजा लक्ष्मीनारायणेन विरच्य स्वयं प्राकाश्यं नीतम् । प्रकाशक लक्ष्मीनारायण, तेजपाल भवन, त्रिभुवन रोड बम्बई ७ । पृष्ठसख्या ४४ मूल्यम् चत्वार आणकाः, १९३८

राष्ट्रसभापति-गौरवमिति पुस्तकं स्वातन्त्र्य-पथः, शान्ति-प्रार्थना, श्रीसुभाष-चन्द्रप्रशस्तिः इत्येभि सहितम्, श्री प० रामनरेशमिश्रशास्त्रिणां हिन्दी-भाषा-नुवादेन श्री भिखाभाई इत्येतेषा गुर्जरभाषानुवादेन श्रीमतीनां हंसामेहतानां प्रस्तावववाक्येन च समलङ्कृता वर्तते ।

अमूल्योऽयं निधि संस्कृतज्ञानां विचार-विमर्शस्य सरणे सम्यक्परिचयाय अत्र राष्ट्रसभापति-गौरवे १८८५ ई० सवत्सरादारभ्य १९३५ वर्षपर्यन्तं कांग्रेसाध्यक्षानधिकृत्य क्रमशो वर्णन वर्तते । १९३५ तमे वर्षे कांग्रेसस्य स्वर्ण-जयन्ती समारब्धासीत् । स्वातन्त्र्यपथे भारतीयान् प्रति संस्कृतस्य भारतीय-शिल्पानां च सानुरागं संवर्धनाय प्रार्थना वर्तते । शान्ति-प्रार्थनायां भगवान् मुकुन्द एवै सम्बोधित. तेषां सर्वेषा स्वातन्त्र्ययज्ञे हुतात्मना शान्ति विधातुम् । श्रीसुभाषचन्द्रप्रशस्ति-भागे यथानाम सुभाषस्य गुणा विक्रमाश्च कीर्तिताः ।

राष्ट्रसभागौरवपुस्तकस्य कवितानां पाठ. प्रथमतरं काग्रेसस्य स्वर्ण-जयन्तीमहोत्सवे १९३५ ई० सवत्सरे कविसम्मेलनेऽभवत् । अत्र संक्षिप्तमेव चरित-चित्रणं सरलसरलया भाषया कृतम् । तथाहि मदनमोहनमालवीय-मधिकृत्य—

विद्यानिधिर्मदनमोहनमालवीयो
विद्यालय विरचयन् प्रथितं महान्तम् ।
लब्ध्वा यश. ॰ प्रभुरसावभवद् द्विवार
लाहौरदिल्लिपुरयोः सकलादरेण ॥

चरितचित्रणेऽस्मिन् कविवरः भावोत्तेजनं विदधाति । तद्यथा लाजपतिराय-मधिकृत्य—

युद्ध्वा स्वराष्ट्रार्थमवाप्य दु खं
दण्डप्रघातेन वितीर्णदेहः ।
कालीनिवासे पतिराम तस्याः
सिंहो बली लाजपतिराय-नामा ॥ ३३

गान्धिनमधिकृत्य कविराख्याति-

समो न येन क्षमया धरित्र्या
स मोहनो गान्धिरिति प्रसिद्धः ।
महात्मनाम्ना धृतविश्वकीर्ति
प्रभुत्वमागाद् बलगामपुर्याम् ॥ ३९

जवाहर-विषये च

युवा श्रियाक्रान्तमहीतलो यो
जवाहरोऽभूद्धनदोपम पतिः ।
लाहौरपुर्यां सकलार्थसञ्चयो
येन स्वराष्ट्राय मुदा वितीर्णः ॥ ४३

राजेन्द्रंच प्रशसति

विहारभूकम्पहता क्षता अपि
प्रजाः समुद्धर्तुमुपायमाचरन् ।
राजेन्द्र इत्यर्थयुतः स्वनाम्ना
मुम्बापुरेऽलकृतवान् प्रभुत्वम् ॥ ४७

काव्योद्देश्यं विमृशन् कवि. प्राह—

भारतेया इद काव्य पठित्वा वर्णितान् पतीन् ।
गुणैरनुसरन्तश्च लभन्ता फलमीप्सितम् ॥ ५०

स्वातन्त्र्यपथे कवेर्व्यक्तित्व समुदित वर्तते। तदनुसारि तस्य वक्तव्यमस्ति–

यदा विद्याभ्यासं स्वमपि महदाचार-विभवं
विहायान्येषा तद्द्वयमपि •समाकृष्टमभवत् ।
तदैवास्माभिः सा परमगहना नीचवशगा
दशा क्रीतेवाभूत्तदपहृतिदक्षा न तु वयम् ॥ ५

कथं यन्त्रद्वारेण समृद्धिर्वर्धते दरिद्रास्तु दरिद्रतमा जायन्ते इति निवेदयति कविः–

यतो यन्त्रं त्वेक जनयति महद्वस्तुनिचयं
प्रदायाल्पेभ्योऽन्न सममपि बहूनामपहरत् ।

संस्कृत खलु भृशं जीवतीति प्रतिपादयन् कविर्वक्ति—

यदा प्राणा देहे मृत इति न मूर्खोऽपि निगदेत्
तथा शाब्दे शास्त्रे सनि किमु मृता प्राणसदृशे ?
वयं त्यक्तात्मानो न किल गणयाम· प्रसविनीं
महत्पाप त्वेतत्कथमपि निराकर्तुमुचितम् ॥ १०

कविवरः सुभाषचन्द्रवसुमहोदयस्य विशेष. प्रशंसकोऽभवत् । तमधिकृत्य लिखितम्·

तेनैवाद्य महासमाधिपतिता मोदादवाप्तेत्वत
प्रोत्फुल्लैर्नयनैर्निरीक्षणपरा सर्वाश्च देशप्रजा ।
हृष्टान्तःकरणाः सुभाषजय तत् स्वाराज्यमस्मान्नये-
त्युद्घोषैर्दलित नभो हरिपुरे कृत्वा सभामागताः ॥

## मागधम्

षाण्मासिक-संस्कृत-शोधवाङ्मयस्य प्रथमोदय कालिदासानुशीलनम्
प्रकाशिका-बाणभट्ट-परिषद् एच० डी० जैन कालेज, आरा (बिहार)

'मागधम्' नाम पत्रिका २०२३ विक्रमाब्दस्य संस्कृतोन्मेषस्यैकं गौरवास्पदं पदमिति पत्रिकाया. प्रथमदर्शनेन प्रमाणितम् । हर्षं जनयति

पत्रिकेयं सौकर्मशिल्पसमुत्थानेन । पत्रिकाया संरक्षकादय श्रीमन्तोऽस्या· प्रकाशनेन दिष्ट्या वर्धन्तेतराम् ।

पत्रिकेय शोधपरायणेति सम्पादकस्य प्रशस्यो विचार. । प्रथमोदयस्य सातिशयं विलोक्य भाविसाफल्यमनुमीयते ।

सम्पादकीयवक्तव्यानुसार· - मागधस्य शोधसामग्री शाधात्मका भविष्यति । तथैतद्वाङ्मय केनाप्येकेन कविना ग्रन्थेन विषयेण वा सम्बद्ध भविष्यति। मागधस्यैव प्रथमोदय· 'कालिदासानुशीलन-नाम्ना प्रकाश्यमानोऽस्ति । प्रस्तुताङ्के कालिदासस्यार्थिकविचार·, कालिदासस्य जीवनदर्शनम्, विक्रमोर्वशीय-नाटकस्य चतुर्थाङ्के ग्रथितानां प्राकृतपद्यानां काव्यमूल्याङ्कनम्, मालविकाग्नि-मित्रोक्तविदूषकस्य व्यक्तित्व-विश्लेषणमिति लेखा अनुसन्धानप्रवृत्ति सम्यगनुसरन्ति । सम्पादकीयप्रकरणे कालिदासस्य समयनिर्धारणम्, सौकर्मदर्शनम् इत्यादीन्यनु-सन्धानटिप्पणानि सन्ति ।

मागध-पत्रिकाया परं सौभाग्यं कामयामहे वय सागरिका-समिते: सदस्या. ।

## आग्रहायण

आग्रहायण-मासिकपत्रिका; प्रकाशक. - अखिल भारतीय ज्योतिर्विज्ञान शोधपरिषद् ४० केसरबाग लखनऊ पृष्ठ स० २४ वार्षिक मूल्य ४. ८० प्रत्येक अंक ४० पैसे । आग्रहायण इति हिन्दी पत्रस्य तृतीयवर्षस्य द्वितीयांक समक्षं विद्यते। भारतीयविद्यानां समर्थकमिद पत्र लोकोपयोगि विषयवैविध्यचित्रितं च मनोहरति । पत्रेऽस्मिन् ज्यौतिषिक-विषयाणा प्राधान्यं वर्तते । धार्मिकानु-सन्धानमत्र प्रासगिकमपि नवनवोन्मेषपूर्ण राजते । फलित-ज्योतिषस्य यश्चमत्कार· स्थूलदृष्ट्यापि मामधिकृत्य विचारित स फलानुवर्तीति मयानुमीयते । एतादृशस्य पत्रस्य लोकप्रियत्व कांक्षामो वयम् ।

—रामजी उपाध्याय:

# संस्कृतवृत्तम्

वि० स० २०२३

**विश्वनाथ भट्टाचार्यः**

## समेधन्तां सागरिकानुग्राहकाः

स्वायुषः पञ्चमवर्षमतीत्य षष्ठे पदमर्पयन्ती सागरिका स्वानुग्राहकाणां सहृदयानां संस्कृतानुरागिणां कृतज्ञता सगर्व धत्ते । सर्वतः समेधन्ता ग्राहका अनुग्राहकाः संरक्षकाश्च सममूर्जस्वलेन संस्कृतप्रेम्णा, यदवलम्बन विना सागरिकाया अनारतं नियतकालिक प्रकाशनमसम्भाव्यमभविष्यत् । मर्त्येऽस्मिन् लोके पदसचारं कुर्वतां खलु कुत. स्याद् विघ्नाभावः, तथापि मन्ये अमर्त्याममरवाणी सेवमानेय तत एव काञ्चित्प्राणशक्तिमासाद्य तत्सेवकानामकुण्ठितप्रमादेन च विघ्नततीर्निरस्य पुरोगतिं भजते । येषां नित्यानुकूल्येनैतत् सभावितं तेषां कृतज्ञं सागरिकामण्डल जगदीशचरणेषु सर्वेपा सर्वतोमुखं भद्र दृढतरं संस्कृतानुरागं च प्रार्थयते ।

संस्कृतवाङ्मयमेव भारतसंस्कृतेरुपनिषत्, तस्यैव च सम्यग् ज्ञानेन भारतीयजनताया यथार्थमैतिह्यानुकूला समुन्नतिः संभाव्यत इति तत्त्वदृष्ट्या संस्कृतसाहित्यस्य शोधात्मकमध्ययनमेव सागरिकाया लक्ष्यम् । उत्तरोत्तरमुपचीयमाना ग्राहकसंख्या विदुषां समर्थनं च लक्ष्यस्यास्योपादेयतां महत्त्वं च स्फुटं प्रमाणीकुरुतः । एतेनैव सार्धं काले कालेऽभिनवं काव्यनाट्यादिकमुपहरन्तीयं––'कविभिः सेवमाना संस्कृतभाषा चिरजीविनी'––इत्यपि प्रमाणयितुं यतते । संस्कृतस्य पूर्वगौरवप्रतिष्ठापनव्रतमिदं सागरिकानयेन बहुभिरवश्यमङ्गीकरिष्यत इत्याशास्यते । कतिभ्यश्चिद् विश्वविद्यालयेभ्यो नवीनाः संस्कृतशोधपत्रिका लब्धप्रकाशा हृद्गतं नो दृढीकुर्वन्ति ।

भाषायाः सौष्ठवं गाम्भीर्यं च न खलु कल्पनामात्रहेतुकम्, तद्धि जीवनविधिना मनुजानां जन्यजनकभावेन संबद्धम् । यदा हि भारतीयानां जीवनं तपःसंस्कृत गुहाहितस्य परमतत्त्वस्यान्वेषणपर बभूव तदैव ऋषीणां मुखात्सा भाषा समुदचरत् यस्या लोकोत्तरं रामणीयकं भावदार्ढ्यं चाद्यापि बलादाकर्षतो विचारवता चेतांसि। महोद्देश्यपरं तप.ससक्तं जीवनमेव भावप्रसादेन

भाषायाँ अमोघत्व विधत्ते । संस्कृतस्येदानीन्तने युगे स्वमहिम्नि प्रतिष्ठापनार्थं सस्कृतज्ञाना जीवनविधेरौदात्त्यं व्रतपूर्तये तपोभावना चापेक्ष्येत इत्यस्माकमनुभव:। महोच्चादर्शानुप्राणितं भूयात् सागरिकाप्रणयिना संस्कृतज्ञाना जीवनम्, तच्चेमां स्वलक्ष्यपूर्तये प्रेरयेदिति वयं कामयामहे।

पञ्चमवर्षान्ते ग्राहकेभ्यः पुन. साधुवादान् सप्रश्रयं निवेद्य अग्रेऽपि तेषामधिकतरं सागरिकासाहचर्यमाशसामहे।

## शोकमग्ना सरस्वती

वर्षेऽस्मिन् संस्कृतभारत्या. पञ्च वरपुत्रा सारस्वतसमाज शोकाकुलं विधाय स्वर्ग प्रस्थिताः । आ श्वासनिवृत्ते सस्कृतसेवानिरतानां प्रथितयश-सामेतेषामभावो दुष्पूरणीय इति सर्वेषामनुभव । ते च डा० वासुदेव-शरणाग्रवालः, लुइरेणुमहाशय., म० म० मथुराप्रसाददीक्षितः, डा० श्रीपाद-कृष्णबेल्वावलिकर, डा० ह० दा० वेलणकरश्च । विद्वांसो हि नरोत्तमाः कालकवलिता अपि स्वकीर्त्या भवन्त्याकल्पस्थायिन इति भारतीयाः । सिद्धान्तमिम सुदृढ विश्वसन्तो वयमेतेषा विद्वदुत्तमाना गुणवैदुष्यकीर्तनेन ज्ञान-ऋण सगौरव स्वीकर्तुं प्रयतामहे ।

उत्तरप्रदेशोद्भवो वासुदेवशरणः ( १९०४–१९६६ ) भारतीयप्रत्नतत्त्व-गवेषकेषु स्वकालिकविदुषामग्रगण्य आसीत् । पाणिनिकालिकस्य भारतस्य स्वरूप संस्थान-रीति-नीति-सस्कारादितथ्यानि सगृह्य योऽय महाग्रन्थ. शोधनिबन्ध-रूपोऽनेन व्यरचि (प्र० १९५३) स खलु सर्वत्र समादरभाजनं जातः । अस्मिन् ग्रन्थे शोधकर्मणो या परिपाटी यश्च नैष्ठिकोऽध्यवसायो दृश्येते ताभ्यां भारतैतिह्यानुसन्धित्सूना मार्गप्रदर्शन कृतम् । एष एवाध्यवसाय. सत्यनिष्ठा च वासुदेवशरणस्य विलक्षणं वैशिष्ट्यम् । मथुराया लखनऊनगरे च कला-भवनेऽध्यक्षपदम्, तदनु वाराणसीविश्वविद्यालये कलास्थपतिविद्याविभागाध्यक्ष-पदमलङ्कुर्वतानेन प्राचीनभारतीयशिल्पकलादिविषयेऽपि बहवो ग्रन्था रचिता । कादम्बरी-हर्षचरित-मेघदूत-चतुर्भाणी-क्षेमेन्द्रग्रन्थचतुष्टयादीनवलम्ब्यासौ हिन्दी-भाषायां ग्रन्थान् बहून् जग्रन्थ, येषु सर्वत्र सांस्कृतिकवैशिष्ट्यस्य स्वरूप सोपपत्तिः परिशीलितं दृश्यते । वाणीवरपुत्रोऽसौ एवमेव महाभारतस्य पुराणा-दीना चानुशीलनं विधाय वेदविद्याया अपि व्याख्यानं नवीनया शैल्या विद्वद्भ्यः समुपजहार । साकल्येन नवतिप्राया ग्रन्था असंख्याश्च निबन्धा एतस्य तपसो महत्फलत्वेन राजन्ते । विद्यया विनयेन कर्मनिष्ठया च सस्कृतभारत्या

लवपुरस्थप्रिन्सेसकालेजसंस्थायाः प्राध्यापकपदं विहाय राष्ट्रमुक्तिसंग्रामे आत्मानमसौ न्ययुङ्क्त । कारयित्री भावयित्री चेत्युभयविधायाः प्रतिभाया ईश्वरोऽसौ बहूनि नाटकानि व्यरचयत्, येषु सर्वत्र प्रदीप्तं देशप्रेम राष्ट्रगौरव चेतिवृत्तमूलम् । भारतविजय-वीरप्रताप-पृथ्वीराजविजयादीनि नाटकानि कवेर्देशानुरागेण सममेव नाट्यकलाकौशलं प्रमाणयन्ति । भारतविजयमेव संस्कृतभाषानिबद्धेषु नाट्येषु वैदेशिकशासनेन राष्ट्रद्रोहितालाञ्छनेन स्थगितप्रचारं कृतम् । मथुराप्रसादस्य कृतिषु आधुनिकयुगस्य समस्या दृष्टिपथमायान्ति, नाट्यरचनायां ध्रुवमसौ प्राचीनपरम्परा भविष्याभिमुखी विधाय संस्कृतस्य सार्वकालिकत्वं प्रमाणितवान् । साकल्येन एकविंशतिग्रन्थपुष्पैर्वाग्देवीमर्चितवतोऽस्य कवेः सारस्वतलोके शाश्वतं स्थानं प्रकल्पितमित्यत्र कः संदेहः ।

डा० श्रीपादकृष्णबेलवलकरः ( १८८०–१९६७ ) प्राच्यविद्यागवेषकेषु मूर्धन्यं स्थानमध्यतिष्ठत् । तच्च स्थानमधुना शून्यं जातमित्यहो दैन्यम् । आबाल्यं समुच्चमादर्शमधिचिकीर्षुः श्रीपादः संस्कृत-इतिहास-दर्शनेषु त्रिषु विषयेषु बम्बई-विश्वविद्यालयतः एम० ए० परीक्षाः ससंमानमुत्तीर्य तत्रैव संस्कृतव्याकरणसंप्रदाया इत्यभिधं शोधनिबन्धं पुरस्कृत्य विद्वन्मण्डल्या स्वस्थानं कल्पितवान् । शोधकर्मपाटवमेतस्यास्मिन्नेव प्रथमपुस्तके सविशेषं प्रमाणितम् । पाश्चात्त्यरीत्यापि शोधाचार्यत्वमर्जयितुं श्रीपादोऽमेरिकादेशं गत्वा हार्वर्डविश्वविद्यालये प्रख्यातनाम्नो लैनमेनपण्डितस्य शिष्यत्वे शोधकर्म कृतवान् । ततश्च प्रतिनिवृत्तः पुण्यपत्तनस्थे डेक्कनमहाविद्यालये प्राध्यापकपदमलमकरोत् । अस्मिन्नेव काले शिक्षकरूपेण गवेषणकर्मसंचालकरूपेण चासौ ख्यातिमगात् । डा० दाण्डेकरप्रमुखा असंख्या सुविश्रुतनामानो विद्वांसः, उत्तररामचरित-काव्यादर्श-शारीरकभाष्य-भगवद्गीता-अभिज्ञानशाकुन्तलादयस्तत्संपादिता ग्रन्थाश्चास्योभयमुखी कीर्तिं प्रमाणयन्ति । यद्धि कर्म प्राधान्येन बेलवल्कर महाशयस्य चिरस्मरणीयतां विधास्यति तत्पुनः भाण्डारकर-प्राच्यविद्यामन्दिरसंस्थापनम् । स एव खलु यथार्थतो विद्वान् यो हि विद्यार्जनमार्गं प्रशस्ततरं विधत्ते । एतादृशस्य प्राच्यविद्याविशारदस्य परलोकप्रस्थितत्या शोकार्ता वयमेतावदेवाशास्महे यत्तत्प्रदर्शितमार्गे बहवः शिष्यप्रशिष्याः सततं संचरन्तो गुरोरानृण्यं सम्पादयिष्यन्ति ।

डा० हरि० दा० वेलणकर महाशयः (१८९३–१९६७) वैदिकप्राकृतभाषयोः प्रश्रुतनामा विद्वान् । प्राच्यविद्याविषयिणी सा नाम भारते नास्त्येव काचन संस्था यया वेलणकरपण्डितस्य पोष्यपोषकभावः संबन्धो न स्यात् ।

प्राच्यविद्यासंमेलन भाण्डारकर-प्राच्यविद्यामन्दिर बम्बई—एशियाटिक-सोसायटी संस्कृतविश्वपरिषद् इत्येता. सर्वाः संस्था वेलणकरसपर्केण परिपोष गता। भारतीयविद्याभवने तदनु बम्बईविश्वविद्यालये संस्कृताध्यापनेनासादितमनेनानल्पं यश । भारतराष्ट्रपतिना १९६२ वर्षे समानपत्रमस्मै समर्पितम्। ऋग्वेदीयो भक्तिमार्ग इत्यमिध ग्रन्थ विरच्य वेदवित्सु विशिष्टं स्थानमनेनार्जितम् । विशिष्टस्य विदुषो गवेषकधुरीणस्य वेलणकरमहाशयस्य लोकान्तरप्रयाणेन संम्कृतज्ञसमाज आत्मानं ध्रुव दीन कलयते ।

## विजयतां संस्कृत-नाट्य-परम्परा

सागर विश्वविद्यालयीया सस्कृतपरिषत् संस्कृतभारत्याश्चिरजीवित्वं प्रमाणयितुं सततमीहते । विश्वविद्यालयेऽध्येतॄणा छात्राणां संस्कृतभाषणपाटवं संपादयितुं परिपदिय नियमित गोष्ठी प्रवर्तयति, सागरिकाद्वारेण सस्कृतलेखनाय संस्कृतज्ञेभ्योऽवकाश वितरति, तथाच आधुनिकयुगे संस्कृतसाहित्यस्य समग्रे विश्वे यादृशी स्थितिर्विराजते तस्याश्च सस्तव नानाद्वारैः प्रस्तौति। अनेनैवोद्देश्येन १९६५ खृष्टवर्षे आधुनिकसस्कृतपरिसवादस्यात्रायोजनं कृतमासीत्, यत्र भारतस्य विभिन्नस्थानात्समागताः सस्कृतज्ञा १५०० खृष्टाब्दाद् वर्तमानकालं यावल्लब्धोदयस्य सस्कृतवाङ्मयस्य मर्यादानिरूपणमकार्षु. । परिषदा ग्रन्थाकारेण विद्वद्विमर्शास्ते प्रकाशिता अपि ।

विगते दिसम्बरमासि सस्कृतपरिषदा विश्वविद्यालये दिनत्रयव्यापी संस्कृतनाट्यसमारोह समायोजित. । संस्कृतनाट्यपरम्परा भासकालिदासप्रभवा भारतभूमावद्यापि लब्धप्रसरा, दर्शकमनोहरणसमर्था चेत्येव समारोहसयोजनस्य मूलम् । २६ दिवसात् २८ दिवस यावद विश्वविद्यालयग्रन्थशालाया प्रत्यहमेकैक नाटकमभिनीतम् । सर्वेष्वेव अभिनयेषु भूयिष्ठा दर्शका समागत्य न केवलमायोजनमिदं सफलीकृतवन्तः किन्तु संस्कृतभाषाया दुर्बोधत्वापवादमपि खण्डितवन्त. ।

अस्मिन् नाट्यसमारोहे कलिकातास्थप्राच्यवाणीसस्थासदस्यैः नाटकद्वयम्, सागर-विश्वविद्यालयकलाकारैश्च सगीतिकैका अभिनीतानि । स्वर्गत-डा० यतीन्द्रविमलचतुर्धुरीणेन सस्थापिता प्राच्यवाणी भारतस्य सर्वत्र संस्कृतनाटकाभिनयमायोजयन्ती संस्कृतप्रचारणे व्यापृता । राष्ट्रपतेरपि लब्धप्रसादा विश्रुतख्यातिरिय संस्थाधुना स्वर्गतस्य यतीन्द्रविमलस्य योग्यया सहधर्मिण्या विदुष्या डा० रमाचौधुरीदेव्या संचाल्यते । परिषद आमन्त्रणं स्वीकृत्य संस्थासदस्यैः साकं सोत्साहमत्रागत्य सा स्वपतिविरचितम् 'अमरमीरम्' स्वविरचितं 'शङ्कर-

शङ्करम्' इति च नाटकद्वयं प्रायोजयत् । सुविहितप्रयोगतयोभयमेव नाटकं दर्शकानामहरद् हृदयम् । भक्तोत्तमाया मीरायाः, भगवतः शङ्कराचार्यस्य च पावनं चरितं कुशलैः कुशीलवैस्तथाभिनीतं यथा सर्वतो भक्तिधारैव प्रवाहिता।

तृतीयदिवसे संस्कृतविभागे रीडरपदस्थया डा० वनमालाभवालकरदेव्या विरचितं गीतमयं 'रामवनगमनम्' इति लघुनाटचमत्रत्यैः कलाकारैरभिनीतम्। गीतमयत्वान्नाटचमिदमाङ्गलभाषानुसार 'ओपेरा' इति व्यपदेशमर्हति । नाटचकर्त्री चैतत् सगीतिकेति युक्तमाह । श्रीमत्या भवालकरदेव्याः प्रयोगपाटवं विद्यार्थि-कलाकाराणामभिनयकौशलं च नितरां हृदयावर्जकमभूत् सहृदयानाम् ।

दर्शकानामुत्साहेन स्फुटं प्रमाणितं संस्कृतं हि नाम आत्मीया आत्मनीना च भाषा भारतीयानामिति । असंस्कृतज्ञानामपि तद्भाषाविषये व्यामोहनिराकरणे संस्कृतनाटचाभिनयो नितरां सहायक इति नो मतिः । सर्वाणि चाभिनीतानि रूपकाणि आधुनिककविविरचितानि इत्यपि तथ्यं महत्त्वं धत्ते । सैषा संस्कृत-नाटचधारा चिरप्रवाहिनी सती संस्कृतसाहित्यसमुत्कर्षं सर्वत्र प्रमाणयतु इत्येव वयं कामयामहे ।

## संसारे भाति भारती

संस्कृतभाषा न केवलं भारते किन्तु विश्वस्मिन्नेव विश्वे महत्त्वं भजते । विश्वस्य प्राचीनतमा समृद्धतमा चेयं भाषा स्वगुणसंपत्त्या सर्वान् जिज्ञासून् स्वाभिमुखमाकर्षति । सृष्टिकालाद् ऐतिहासिककालप्रवृत्तिं यावत् ततोऽप्यनन्तरं मानवानां जीवननिधेर्मनन-प्रक्रियायाश्च ज्ञानं प्रकृतिनिरूपणं च संस्कृतज्ञानमन्तरा सर्वथाशक्यसम्पादमिति विचारवतां नापरोक्षम् । अतएव यदा प्रभृति संस्कृतेन वैदेशिकानां परिचयो जातस्ततः आरभ्य विदेशेषु संस्कृतस्य चर्चा प्रायः प्रतिदेशं प्रतिविश्वविद्यालयं च प्रचलन्ती दृश्यते । संस्कृतविद्यायाः क्षेत्रे समग्रे युरोपमण्डले, अमेरिकाखण्डे, एशियाखण्डस्य देशान्तरेषु च भारतीविद्याविपश्चितः किं किं साधयन्ति, को वाध्ययनाध्यापनयोः क्रमनुसरन्ति इत्यस्मिन् विषये नास्माभिः सम्यग् ज्ञायते । एतदर्थं सागरविश्वविद्यालये संस्कृतविभागेन सद्य एवायोजिता दिल्लीविश्वविद्यालय-संस्कृताध्यक्षस्य डा० रसिकविहारीजोशी-महाभागस्य भाषणचतुष्टयी 'विदेशेषु भारतीविद्या' इति । फेब्रुआरीमासस्य २१ दिवसात् २४ दिवसं यावद् विदुषानेन संस्कृतभाषया फ्रान्स-जर्मनी-हालैण्ड इटली-इंगलैण्ड-अमेरिकादेशेषु संस्कृतविद्याभ्यासक्रमः, तत्रत्या शोधपद्धतिः, विदुषां संस्कृतानुरागः, इत्यादिषु विषयेषु चत्वारि तथ्यपूर्णानि भाषणानि कृतानि ।

आंग्लदेशीयैरादौ युरोपमण्डले प्रवर्तिता संस्कृतविद्या परस्तात् फ्रान्सदेशे प्रतिष्ठामवापत् ततश्च जर्मनीदेशे गरीयस्तरां प्रसिद्धिं भेजे। डा० जोशीमहाशयस्तस्मिन्नेव फ्रान्सदेशे समापितशोधकृत्यो विषयस्यास्य प्रतिपादने नितरां योग्यतां बिभर्ति। युरोपखण्डस्य प्राय. सर्वत्र संस्कृतविद्याकेन्द्रेषु जिज्ञासुत्वेन कृतसंचरणोऽयं विद्वान् स्वभाषणेषु तत्रत्या शोधकर्मपद्धतिं निपुणं प्रत्यपादयत्। पाश्चात्त्या चेयं वैज्ञानिकी पद्धतिः प्राचीनग्रन्थेषु नवीनां काञ्चन तत्त्वानुसंधिनीं दृष्टिं व्यापारयितुं नितरां प्रशस्तेति मतिं वयमभिनन्दामः। यादृशी निष्ठा अध्यवसायश्चैभिरभारतीयैः प्रदर्श्यते भारतीविद्यायाम्, मन्ये ततोऽप्यधिकं भारतीयैः प्रदर्शनीये। सर्वाण्येतानि भाषणानि श्रोतॄणां महोपकारायेति किमु वक्तव्यम्। भारतीयार्षपरम्परायां समुद्भूतो ज्ञानराशिः पाश्चात्त्यैरनुशील्यते इत्येतावतैव नास्माभी रिक्थगौरवमात्रं ख्यापयद्भिः सतोषः करणीयः, अपि तु यथाधुनापि तादृश्युदात्तभावना देशेऽस्मिन् समुद्भवेत्तथा यतनीयम्।

विश्वविद्यालयानुदानायोगमनु समायोजितेयं भाषणमाला सागरिकापाठकेभ्योऽपि समुपहरिष्यत इति महर्षं सूच्यते ॥

१. ३. १९६७

## घोषणा-पत्रम्

| | | |
|---|---|---|
| १ | पत्रिकानाम | सागरिका |
| २ | प्रकाशन-क्रमः | त्रैमासिकः |
| ३ | प्रकाशक-नाम | डा० विश्वनाथभट्टाचार्यः |
| | जातिः | भारतीया |
| | निवासस्थानम् | संस्कृत विभागः, सागरविश्वविद्यालयः, सागरम् |
| ४ | प्रकाशनस्थानम् | संस्कृतपरिषद्, संस्कृतविभागः, सागरविश्वविद्यालयः, सागरम्, म. प्र. |
| ५ | मुद्रक-नाम | नरहरि गोविन्द बेडेकरः |
| | जातिः | भारतीया |
| | निवासस्थानम् | विश्वविद्यालय मुद्रणालयः, सागरम् |
| ६ | मुद्रणस्थानम् | विश्वविद्यालय मुद्रणालयः सागरम् |
| ७ | सम्पादक-नाम | डा० रामजी उपाध्यायः |
| | जातिः | भारतीया |
| | निवासस्थानम् | संस्कृतविभागः, सागरविश्वविद्यालयः, सागरम् |
| ८ | पत्राधिकारि-नाम | संस्कृत परिषद्, संस्कृतविभागः सागरविश्वविद्यालयः, सागरम्, म. प्र. |

विश्वनाथभट्टाचार्यनामा अहम् उल्लिखितानि विवरणानि सत्यानीति निश्चप्रचं घोषयामि ।

३१-३-६७

विश्वनाथभट्टाचार्यः
प्रकाशकः

# सूचीपत्रम्

## वि० सं० २०२३

# एषमो लेखकपरिचयः
## अङ्कानुक्रमिकः

१ श्री रामजी उपाध्याय एम ए, डी फिल, डी. लिट्,
सागरविश्वविद्यालये संस्कृतविभागाध्यक्षो डा उपाध्याय. भारतीया सस्कृतिमेव प्राधान्येन स्वमननविषय कृतवान् । सस्कृतिचर्याया बहूनि फलानि ग्रन्थरूपेण विद्वत्समाजे पुरस्कृत्य परमा ख्याति भजते । सस्कृतप्राकृतमहाकाव्याना शोधात्मकाध्ययनादारभ्य साहित्यसस्कृत्युभयमाश्रित्य सस्कृतहिन्दी-आगल-भाषासु सतत स्वविचारान् ग्रन्थरूपेण प्रकाशयन्नास्ते । सस्कृतसाहित्यस्याधुनिकयुगमवलम्ब्येदानीमितिहासप्रणयणे दत्तावधानो विद्वानय 'द्वा सुपर्णेति' सस्कृतकथाग्रन्थस्य 'भारतस्य सास्कृतिकनिधे'श्च प्रणेता ।

२ श्रीविश्वनाथ भट्टाचार्य, एम० ए०, पी० एच० डी० साहित्यशास्त्री,
सागरविश्वविद्यालये सस्कृतविभागीय. प्राध्यापको डा० भट्टाचार्य: सास्कृत-नाट्यतन्त्रविषये कृतशोधकृत्य काव्यनाट्यालंकारविषयेषु रुचिमान् ।

३ श्रीवासुदेवविष्णुमिराशी, एम० ए० डी० लिट्, महामहोपाध्याय.,
सुप्रथितनामा भारतविद्याविद् विद्वानय 'कमलासदनं नागपुर'- मित्यत्र निवसति । सस्कृतसाहित्ये प्राचीनभारतेतिहासे च निष्णातो मिराशीमहाभाग प्रत्नलेखविद्याया प्रामाणिकत्वं भजते । एतत्संपादिता कलचुरिशिलालेखा एतस्येतिहासमर्मज्ञता सूचयन्ति । कालिदास-हर्षचरितवाराद्यनेकग्रन्थाना रचयिता समकालिकेषु विद्वत्सु वर्षिष्ठो महिष्ठश्च भारतीसाधक ।

४ श्री रेवाप्रसाद द्विवेदी एम. ए., पी एच डी, साहित्याचार्य:
हेभाद्रिकृतस्य रघुवशदर्पणाख्यस्य टीकाग्रन्थस्य सपादनेन लब्धशोधोपाधिको डा. द्विवेदी मध्यप्रदेशशासन-शिक्षासेवाधीनो रायपुरस्थे शासकीयसंस्कृतमहाविद्यालये प्राध्यापक । अलंकारशास्त्रे काव्यसमीक्षायां च बद्धादरोऽय व्यक्तिविवेकस्य हिन्दीरूपान्तरकृत् सस्कृतहिन्द्योरनेकनिबन्धाना च निबन्धक.।

५ श्री रविशंकरनागरः एम. ए. पी एच. डी'
डा. नागरः दिल्लीविश्वविद्यालयान्तर्गत - किरोडीमल महाविद्यालये प्राध्यापकः। ध्वनिसिद्धान्तमधिकृत्यानेन शोधकर्म कृतम्।

६ श्रीमती निर्मला उपाध्यायः एम. ए.

७ श्रीशङ्करलालस्वर्णकारः एम. ए.

८ श्री विहारीलालनागार्चः एम. ए.

९ कुमारी कृष्णा खरे एम. ए.

१० श्रीमती मायातिवारी एम. ए.

११ श्रीशिवदर्शन तिवारी एम. ए.

१२ कुमारी मनोरमा सक्सेना एम. ए.

१३ श्री गुलाब् चन्द्र जैनः एम. ए.

-सागरविश्वविद्यालये संस्कृतविभागीयाः शोधच्छात्राः।

१४ श्री भास्कराचार्य त्रिपाठी, एम. ए, पी एच. डी
छत्रपुरीये महाराजकालेजसस्थायां संस्कृतप्राध्यापको डा. त्रिपाठी यायावर-राजशेखरकविमधिकृत्य शोधकर्म सम्पादितवान्।

१५ श्री प्रभाकर शास्त्री, एम. ए., पी एच. डी., साहित्यधर्मशास्त्राचार्यः
शासकीय कालेज सीकर इत्यत्र संस्कृतप्राध्यापको डा. शास्त्री हिन्दी-संस्कृतोभयभाषाभ्यां संस्कृतसाहित्यविचारं कुरुते। एतत्सम्पादितो याज्ञवल्क्य-स्मृतेराचाराध्यायः एतस्य धर्मशास्त्रज्ञतां व्यनक्ति।

१६ श्री पुष्करदत्तशर्मा, एम. ए. पी एच. डी.
बीकानेरस्थ-महाविद्यालये संस्कृतप्राध्यापकः । आधुनिकसंस्कृतोपन्यासानां समीक्षानेन शोधधिया कृता ।

१७. श्री रमाशकर जैतली एम. ए., जयपुरीये राजस्थानविश्वविद्यालये संस्कृतप्राध्यापकः ।

१८ श्री कृष्णलालः एम. ए. पी. एच डी. A critical study of the Grhya Mantras with special reference to their Ritual Application इति विषयमधिकृत्य १९६५ वर्षे शोधनिबन्धं प्रस्तुतवान् । दिल्ली विश्वविद्यालयान्तर्गत-पन्नालाल गिरिधरलालदयानन्द ए. वी. महाविद्यालये प्राध्यापकः, शिञ्जारव. इति गीतकाव्यस्य रचयिता च ।

१९ पुल्लेल श्री रामचन्द्रुडु. एम. ए. (संस्कृत-हिन्दीङ्गलिश)
हैदराबाद-ओस्मानियाविश्वविद्यालये संस्कृतसाहित्या-ध्यापकः श्रीरामचन्द्रो जगन्नाथपण्डितराजस्य कृतीनां शोधकः । बहूना निबन्धाना रचयिता विद्वानयं काव्यकुशलोऽपि । एतद्रचितं सुसंहृतभारतं नाम नाटकं पूर्वमेव सागरिकायां प्रकाशितम् । रवीन्द्रनाथठक्कुरस्य गीताञ्जलेरनुवादकर्ता रामचन्द्रुडुमहोदयः उत्तरप्रदेशशासनेन द्विः पुरस्कृतः संस्कृतकृतिभिः ।

२० महामहोपाध्यायः स्वर्गतयादवेश्वरतर्करत्नः,
ऊनविंशशताब्दीसाभवो यादवेश्वरतर्करत्नः काशिकसंस्कृतविदुषांप्रथमा कोटिमभजत् । विद्वानयं सांख्य-योगन्यायादिषु यथा तथैव काव्यालंकारेषु परं निष्णातः । वङ्गदेशे लब्धजनिरयं परस्तात् काश्यां वसन् शिवसायुज्यं प्राप । अश्रबिन्दुर्नामापरमपि काव्यमनेन निर्मितम् ।